KÂVYAMÂLÂ. 60.



THE

# YUDHISHTHIRAVIJAYA

OF

## VÂSUDEVA

WITH THE COMMENTARY OF RÂJÂNAKA RATNAKAṆṬHA.



EDITED BY


MAHAMAHOPADHYAYA PAṆDIT S'IVADATTA

Head Pandit and Superintendent, Sanskrit Department,

Oriental College, Lahore,

AND

KÂS'INATH PÂNDURANG PARAB.





PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRṆAYA-SÂGARA" PRESS.

BOMBAY.




काव्यमाला. ६०.

महाकविश्रीवासुदेवविरचितं

# युधिष्ठिरविजयम् ।

राजानकरत्नकण्ठरचितया व्याख्यया संयुतम् ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा महामहोपाध्याय-
पण्डितशिवदत्तशर्मणा, मुम्बापुरवासिपरवो-
पाह्वपाण्डुरङ्गात्मजकाशीनाथशर्मणा
च संशोधितम् ।

तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९७



मूल्यं सार्धो रूप्यकः ।

# भूमिका ।

'अस्य हि युधिष्ठिरविजयनामकयमकमयकाव्यरत्नस्य रचयिता श्रीवासुदेवकविः कुलशेखरमहाराजराज्यसमये भारतगुरुनामककोविदस्य शिष्यः समभूत्' इति

'तस्य च वसुधामवतः काले कुलशेखरस्य वसुधामवतः ।
वेदानामध्यायी भारतगुरुरभवदाद्यनामध्यायी ॥ १ । ६ ॥
समजनि कश्चित्तस्य प्रवणः शिष्योऽनुवर्तकश्चित्तस्य ।
काव्यानामालोके पटुमनसो वासुदेवनामा लोके ॥ १ । ९ ॥'

इति प्रकृतकाव्यस्थपद्यदर्शनतो निश्चीयते. एवं च कुलशेखरराज्यसमयराजधानीनिश्चयेन वासुदेवकविसमयाधिष्ठाननिश्चयोऽनायासेन भवेत्. परंतु कुलशेखरनिवेशनसमयावेवानिश्चितौ.

'यदि च सिंहलद्वीपतो निःसारितः कुलशेखरभूप एवायं भवेत्तर्हि सिंहलद्वीपेतिहाससंवादाद्द्वादशख्रिस्ताब्दशतिकायामासीत्' इति Indian Antiquary, Vol. vi. P. 143. (1877) लिखितं एवायं कुलशेखरो भवेत्, तर्हि युधिष्ठिरविजयकर्तुर्वासुदेवकवेरपि द्वादशख्रिस्ताब्दशतिका समयोऽवसीयते. काव्यमालादशमगुच्छकमुद्रितवासुदेवविजयकाव्यकर्ता वासुदेवकविरस्माद्वासुदेवकवेरभिन्नो भिन्नो वा स्यात्. कश्मीरमन्तरास्य काव्यस्य विरलप्रचारत्वेन काश्मीरिकावेवैतौ पार्थिवपण्डितौ भवेताम्. अत एवास्योपरि काश्मीरिकराजानकरत्नकण्ठकृतैव व्याख्या समुपलब्धा.

'शिष्यहिताभिधटीका तु राजानकशंकरकण्ठात्मजराजानकरत्नकण्ठेन गङ्गाधरशिष्याध्यापनाय अवरङ्गशाहिभूपे पृथ्वीं शासति सति १५९३ शालिवाहनशके (1661 A. D.) विरचिता' इति तु सर्गसमाप्तिलेखेन

'रामाङ्केषुशशाङ्कैः(१५९३) प्रमिते वर्षे शकेन्द्राणाम् ।
अवरङ्गशाहिभूपे शासति सति मेदिनीचक्रम् ॥
धर्मात्मजविजयाख्ये सुगम्भीरे सन्निबन्धेऽस्मिन् ।
टीका शिष्यहितैषा विधीयते रत्नकण्ठेन ॥'

इति टीकाप्रारम्भश्लोकाभ्याम्,

'वस्वक्षिसप्ताब्ज(१७२८)मिते वर्षे विक्रमभूभृतः ।
—ैषा रत्नकण्ठेन टीका शिष्यहिताभिधा ॥
गङ्गाधरस्य पाठार्थं सुशिष्यस्योपयोगिनी ।
टीकैषा विहिता तेन सज्जनानन्ददायिनी ॥'

इति चतुर्थाश्वाससमाप्त्युत्तरं समुपलभ्यमानश्लोकाभ्यां च स्फुटमवगम्यते.

'अनेनैव राजानकरत्नकण्ठेन मम्मटविरचितैव काव्यप्रकाशटिप्पणी संकेताभिधा समुद्धृता' इति

'काव्यप्रकाशसंकेतो ग्रन्थकारकृतो मया ।
अलेखि रत्नकण्ठेन वर्षे खागाह(१५७०)रुम्भिते ॥'

इति संकेतप्रथमोल्लाससमाप्तिलेखेन प्रतीयते. अस्य रत्नकण्ठस्य विषयेऽधिकं तु लवपुरीयप्राच्यविश्वविद्यालयाध्यक्ष Dr. M. A. Stein, Ph. D. महाशयशोधितराजतरङ्गिणीभूमिकायां समालोकनीयम्.

अस्य मूलपुस्तकं तु जयपुरराजगुरुभट्टश्रीयुतलक्ष्मीदत्तशर्मणां सरस्वतीसदनतो युवराजश्रीयुतश्रीदत्तशर्मभिर्दत्तम्.

अस्य च टीकामन्तरेण दुर्बोधतया टीकालाभोपायसमय एव श्रीलक्ष्मीनाथप्रसादतो लवपुरीयप्राच्यविद्यालयाध्यापकतामुपलब्धवते तत्पाठशालाध्यक्षश्रीयुत Dr. M. A. Stein, Ph. D. महाशयैरेव स्वकीयपुस्तकसंग्रहतः शारदालिपिलिखितं सटीकपुस्तकमेकम्, अपरं च कश्मीर एव देवनागरीलिपिलेखितं पुण्यपत्तनस्थपुस्तकालयत आनाय्य मुद्रणोत्साहेन दत्तम्. एवं पुस्तकत्रयाधारेण कृतशोधनेऽप्यस्मिन्भ्रान्तेः पुरुषधर्मत्वेनास्मद्दोषादक्षरयोजकदोषाद्वा यत्राशुद्धिः स्थिता जाता वा तां सहृदयहृदयाः शोधयन्तु. यतः—

'गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥'

इति प्रार्थयतः

काव्यमालासंपादकौ
**शिवदत्त-काशीनाथौ ।**



# काव्यमाला ।

महाकविश्रीवासुदेवविरचितं

## युधिष्ठिरविजयम् ।

काश्मीरिकराजानकरत्नकण्ठरचितया व्याख्यया संयुतम् ।

प्रथम आश्वासः ।

सेवकजनसिद्धरसां तां देवीं नमत सिद्धरसाम् ।
या वन्द्या विबुधगणैः स्तुत्या या भूतले च विबुधगणैः ॥
रक्षतु कलदेरम्बस्त्रिजगद्वन्द्यः स हेरम्बः ।
बहुविधशृङ्गाररचितं यद्वदनं शंभुना रचितम् ॥
रामाङ्केषुशशाङ्कैः (१५९३) प्रमिते वर्षे शकेन्द्राणाम् ।
अवरङ्गशाहिभूपे शासति सति मेदिनीचक्रम् ॥
धर्मात्मजविजयाख्ये स्वगर्भारे सन्निबन्धेऽस्मिन् ।
टीका शिष्यहितैषा विधीयते रत्नकण्ठेन ॥

अथ प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं व्याख्यातृश्रोतृणामाशीर्वचनपुरःसरमभीष्टदेवतास्मरणरूपं मङ्गलाचरणमार्यावृत्तत्रयेण 'प्रदिशतु' इत्यादिना प्रस्तौति ग्रन्थकारः—

प्रदिशतु गिरिश स्तिमितां ज्ञानदृशं वः श्रियं च गिरि शस्तिमिताम् ।
प्रशमितपरमदमायं सन्तः संचिन्तयन्ति परमदमा यम् ॥ १ ॥
यो वा मन्दरवपुपं ममर्द मातङ्गवरममन्दरवपुपम् ।
कान्तां चाप धराद्यः क्षपितो येनाङ्गजोऽपि चापधराद्यः ॥ २ ॥
शिरसां सकले शकले स्खलिता सरितां वरा च सकलेशकले ।
यस्य च कोटीरमिता स्फुटं विबभ्राम वर्षकोटीरमिताः ॥ ३ ॥

(तिलकम्)

स गिरिशो महादेवः स्तिमितामचलां ज्ञानदृशं ज्ञानदृष्टिं वो युष्मभ्यं प्रदिशतु ददातु । च पुनः—श्रियं लक्ष्मीं प्रदिशतु । किंविशिष्टां श्रियम् । शस्तिं प्रशस्तिमितां गताम् । कस्याम् । गिरि वाचि । गिरिशः क इत्याह—प्रशमितेत्यादि । सन्तः पण्डिताः साधवश्च यमीश्वरं संचिन्तयन्ति । 'सन्सुधीः पण्डितः कविः' इत्यमरः । यं किंविशिष्टम् । प्र-

शमितः पर उत्कृष्टो मदोऽहंकारो माया च येन स तादृशं प्रशमितपरमदमायम् । किंवि-शिष्टाः सन्तः । परम उत्कृष्टो दमो बाह्येन्द्रियोपशमः शान्तिस्वरूपो येषां तादृशाः । अत्र 'गिरिश स्तिमिताम्' इत्यत्र 'खर्परे शरि वा विसर्गलोपो वक्तव्यः' इति वा विस-र्गलोपः । यद्वा—'यमकश्लेषचित्रेषु विसर्गसदसत्त्वयोः । न विशेषः' इति वचनाद्विसर्गा-भावेऽपि न दोषः । आर्यावृत्तम् ॥ यो वेति । वाशब्दः समुच्चये । यो वा यश्च महादेवो मा-तङ्गवरं गजवरम् । गजासुरमित्यर्थः । ममर्द । अमर्दयदित्यर्थः । किंविशिष्टं मातङ्गवरम् । मन्दरवपुषं मन्दरगिरिवद्वपुर्यस्य स तादृशम् । पुनः किंविशिष्टम् । अमन्दरवपुषम् अमन्दो यो रवः शब्दस्तं पुष्णातीति अमन्दरवपुट् तादृशम् । यद्वा—य ईश्वरो वामं प्रतीपं वै-रिणं मातङ्गवरं गजवरं ममर्द । 'वामौ वल्गुप्रतीपौ द्वौ' इत्यमरः । किंविशिष्टम् । दरवपुषं दरो भयं वपुर्यस्य स तादृशम् । मूर्तं दरमिवेत्यर्थः । यद्वा—'यः अवाः' इति पदच्छेदः । 'वा गतिगन्धोपाद(दा)नयोः' । वाति शीघ्रं गच्छतीति वाः शरः । ओ विष्णुर्वाः शरो यस्य स[ः] अवाः । 'तस्य त्रिपुरदाहे रथचरणपाणिः शरः' इति व्याख्यानात् । शेषं प्राग्वत् । कान्तां चाप धरेत्यादि । 'चाप' इत्यत्र 'च आप' इति पदच्छेदः । य ईश्वरः धरात्पर्व-तात् हिमालयात् कान्तां वधूमाप । येन ईश्वरेण अङ्गजोऽपि कालो(मो)ऽपि क्षपितः । किं-विशिष्टोऽङ्गजः । चापधराग्र्यश्चापधराणां धनुर्भृतामाद्योऽग्रिमः । अलक्ष्यस्यापि शरव्यस्य कामिचेतसो व्यधनात् । अत्र 'अङ्गजः' इत्यत्राप्रयुक्तपदशङ्का न विधेया । तथा च महा-कवेः श्रीहर्षस्य प्रयोगः—'न काकुवाक्यैरतिवाममङ्गज द्विषत्सु याचे पवनं तु दक्षिणम्' इति । यद्वा—अप्रयुक्तपदोऽपि यमकादौ न दोषः । तथा चोक्तं काव्यप्रकाशे—'अप्र-युक्तनिहतार्थौ श्लेषादौ न दुष्टौ' ॥ शिरसामिति । यस्य महेश्वरस्य शिरसां मूर्ध्नां सकले सर्वस्मिञ्शकले खण्डे सकलेशकले कलानां षोडशसंख्यानामीशः स्वामी कलेशश्चन्द्रः सह कलेशस्य चन्द्रस्य कलया वर्तते यः स तादृशि सकलेशकले । शिरसामिति बहुव-चनं शंभोः पञ्चमुखत्वात् । स्खलिता रुद्धा सती सरितां वरा नदीनां मुख्या गङ्गा को-टीरं मुकुटमिता गता सत्यमिता असंख्या वर्षकोटीः स्फुटं व्यक्तं विशश्राम विशिष्टं ब-भ्राम । वर्षकोटीरिति '(भाव)कालाध्वनोरत्यन्तसंयोगे द्वितीया' । अत्र च प्राग्वद्वर्ष-कोटीरमिता इत्यत्र विसर्गाभावेऽपि 'यमकश्लेषचित्रेषु' इत्यादिना न दोषः । अत्र च ग्रन्थे चित्रकाव्यैकरसिकत्वमूह्यम् । चित्रकाव्यलक्षणं च काव्यप्रकाशे श्रीमम्मटाचार्यैरुक्तम्—'शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्' । चित्रकाव्यस्य च शब्दार्थचित्रतया द्विभेदत्वेऽपि तच्च शब्दचित्रं ज्ञेयम् । अत्र सर्वत्र यमकाख्यः शब्दालंकारः । तथा चोक्तं काव्यप्रकाशे तैरेव—'अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनःश्रुतिः । यमकम्' इति । ए-तच्च 'पादतद्भागवृत्त्या तद्यात्यनेकताम्' इत्यतस्तस्य बहुभेदत्वेऽपि सर्वत्रैवात्र पादान्तय-मकमेतत्तज्ज्ञैर्ज्ञेयम् । तथान्यत्राप्युक्तमभियुक्तैः—'वक्रोक्तिश्छेकवृत्ती च यमकश्लेषला-टकाः । पुनरुक्तवदाभासश्चित्रमष्टौ हि शाब्दिकाः ॥' इति । अतश्च शब्दालंकारत्व-मस्य यमकस्य ॥

अस्ति स गजराजगती राजवरो येन गतशुगजरा जगती ।
भीषणमधिकं कवयः स्तुवन्ति जन्यं यदीयमधिकङ्कवयः ॥ ४ ॥
तरवो भूरिच्छायाः समानफलदायिनी च भूरिच्छायाः ।
सविनयशोभा जनता यद्राज्ये[१] यस्य भुवि यशोभाजनता ॥ ५ ॥

(युग्मम्)

स राजवरो राजश्रेष्ठोऽस्ति । कीदृक् । गजराजगतिर्गजराजस्येव गतिर्गमनं यस्य । एतच्च महापुरुषलक्षणं सामुद्रिके । स क इत्याह—येन राज्ञा जगती भूमिर्गतशुक् गता [शुक्] शोको यस्याः सा गतशुक् । तथा—अजरा जरारहिता । तरुण्येवेत्यर्थः । भीषणमिति । कवयः कवितारो यदीयं यस्य राजश्रेष्ठस्य संबन्धि अधिकं भीषणं जन्यं युद्धं स्तुवन्ति । किंविशिष्टं जन्यम् । अधि अधिकानि कङ्कवयांसि कङ्काभिधपक्षिणो यस्मिंस्तदधिकङ्कवयः । 'युद्धमायोधनं जन्यम्' इत्यमरः ॥ स क इत्याह—तरव इति । यस्य राज्ये तरवो वृक्षा भूरिच्छाया बहुच्छायाः । तथा—यद्राज्ये भूर्भूमिरिच्छाया ईहितस्य समानफलदायिनी सदृशफलदात्री । तथा—यद्राज्ये जनता जनानां समूहो जनता सविनयशोभा सह विनयेन शोभया च वर्तते या तादृशी भवति । जनतेत्यत्र 'ग्रामजन—' इत्यादिना ता(तल्)प्रत्ययः । तथा—यस्य भुवि भूमौ यशोभाजनता यशःपात्रत्वम् ॥

तस्य च वसुधामवतः काले कुलशेखरस्य वसुधामवतः ।
वेदानामध्यायी भारतगुरुरभवदाद्यनामध्यायी ॥ ६ ॥

वसु धनं धाम तेजस्ते विद्येते यस्य तथा कुलशेखरस्य वंशभूषणस्य कुलशेखरनाम्नश्च वसुधां पृथ्वीमवतो रक्षतस्तस्य च काले वेदानामध्यायी वेदपाठको भारतगुरुर्नामाभवत् । कीदृशः । आद्यनामध्यायी आद्यः परमेश्वरस्तन्नामध्यायी तन्नामचिन्तकः । यद्वा—आदिश्चासौ अः विष्णुराद्यस्तन्नामध्यायी ॥

स भारतगुरुः क इत्याह—

यं प्राप रमा चार्यं देवी च[२] गिरां पुराणपरमाचार्यम् ।
यमशुभसन्तोदान्तं परमेश्वरमुपदिशन्ति सन्तो दान्तम् ॥ ७ ॥

यं भारतगुरुमार्यं महान्तं रमा च लक्ष्मीर्गिरां च देवी वाग्देवी प्राप । द्वयोरपि प्राधान्यावगमाय द्वौ चकारौ । यं कीदृशम् । पुराणपरमाचार्यं पुराणश्चासौ परमाचार्यश्च तम् । तथा—सन्तः साधवो यं भारतगुरुं दान्तं शान्तस्वरूपम् । तथा—अशुभसंतोदान्तमशुभेन यः संतोदा व्यथारूपस्तस्यान्तस्तं परमेश्वरं परोत्कृष्टा या मा लक्ष्मीस्तस्या ईश्वरम् । अथ च परमेश्वरम् । उपदिशन्ति । परमेश्वरोऽप्यशुभस्य जन्ममरणादेर्व्यथाया अन्तः ॥

ज्ञानसमग्रामेयं निवसन्तं विप्रसत्तमग्रामे यम् ।
तिलकं भूमावाहुर्यस्यार्थिषु दत्तभूमिभूमा वाहुः ॥ ८ ॥

१. कश्मीरपुस्तके नोपलभ्यते. २. मूलपुस्तके नास्ति.

यं भारतगुरुं ज्ञानसमग्रामेयं ज्ञानेन समग्रश्चासावमेयश्च तम् । विप्रसत्तमानां ब्राह्मणवराणां ग्रामे निवसन्तम् । भूमौ तिलकं भूषणभूतं पण्डिता यमाहुः । तथा यस्य वाहुः । वबयोरैक्यात् वाहुर्भुजोऽर्थिषु दत्तभूमिभूमा वितीर्णभूमिबाहुल्य आसीत् ॥

समजनि कश्चित्तस्य प्रवणः शिष्योऽनुवर्तकश्चित्तस्य ।
काव्यानामालोके पटुमनसो वासुदेवनामा लोके ॥ ९ ॥

कश्चिद्वासुदेवनामा । कश्चिदिति स्वस्यानौद्धत्यं सूचयति । प्रवणस्तदेकतानः । चित्तस्यानुवर्तकः तच्चित्तानुसारिकर्मकृत् । तस्य शिष्यः समजनि संजातः । कीदृशस्य । लोकमध्ये काव्यानां महाकविसंबन्धिनामालोकेऽवगाहे पटुमनसः प्रगल्भमानसस्य ॥

कीर्तिमदभ्रां तेन स्मरता भारतसुधामदभ्रान्तेन ।
जगदुपहासाय मिता पार्थकथा कल्मषापहा सा यमिता ॥ १० ॥

तेन वासुदेवनाम्नादभ्रां घनां कीर्तिम् । कविकर्मसंबन्धिनीमित्यर्थः । स्मरता चिन्तयता भारतमितिहासाभिधानं प्रसिद्धमितिवृत्तं तदेव सुधा तस्या यो मदस्तदेकतानत्वाख्यं क्षैव्यं तेन भ्रान्तस्तादृशेन सा प्रसिद्धा पार्थकथा युधिष्ठिरविजयाभिधाना कल्मषापहा पापहर्त्री मिता संक्षिप्तैव जगदुपहासाय लोकोपहासाय यमिता बद्धा । जगदुपहासेति स्वस्यातीवानौद्धत्यं सूचयति । केवलं मम मन्दधियो लोकोपहास एवात्र फलम् । ननु सहृदयहृदयावर्जकं मत्काव्यमत्रेति भावः ॥

अथ ग्रन्थकारो वर्णनीयां युधिष्ठिरविजयाभिधानां कथां प्रारभमाण आह—

अथ मृगराजद्विपिनं प्रविश्य पाण्डुर्गिरिं विराजद्विपिनम् ।
मृगयासङ्गरसेन स्वैरं व्यहरज्जितारिसङ्गरसेन ॥ ११ ॥

अथशब्दो मङ्गलार्थ आनन्तर्यार्थश्च । अथ पाण्डुर्नाम राजा मृगयासङ्गरसेनाखेटकव्यसनरसेन गिरिं प्रविश्य स्वैरं व्यहरत् चिक्रीड । कीदृशं गिरिम् । मृगराजद्विपिनं मृगराजाः सिंहाः, द्विपा गजाश्च सन्त्यत्रेति मृगराजद्विपी तादृशम् । पुनः कीदृशम् । विराजन्ति शोभमानानि विपिनानि वनानि यत्र स तादृशम् । पाण्डुः कीदृशः । जितारिसंगरसेनो जितमरिसंगरं वैरियुद्धं यया तादृशी सेना वाहिनी यस्य सः । अत्र 'जितारिसंगरसेनः' इत्यत्रापो(?) विसर्जनीयाभावे यमकविषये 'यमकश्लेषचित्रेषु' इत्यादिना ना(न) दोषः ॥

यं नरदेवं शस्यस्वमातृवचनेन संपदे वंशस्य ।
मुनिवर्योऽजनयत्तं भ्रा॰ कलत्रे जगत्प्रयोजनयत्तम् ॥ १२ ॥

मुनिवर्यः श्रीव्यासमुनिस्तं प्रसिद्धं भ्रातुर्विचित्रवीर्यस्य कलत्रे भार्यायामम्बालिकाख्यायां शस्यस्वमातृवचनेन शस्यं पूज्यं यत्स्वमातुः सत्यवत्या वचनं तेन वंशस्य संपदे यं नरदेवं राजानं पाण्डुमजनयत् । कीदृशं यम् । जगत्प्रयोजने जगदुपकारे यत्तः सयत्नस्तम् । एतदाख्यानमादिपर्वणि संभवेऽस्ति । तत एवोह्यम् ॥

तेन शरेणाकारि व्यसु मुनिमिथुनं गतायुरेणाकारि ।
तत्र यमाभो गहनं शापं मुनिरमुचदसुसमाभोगहनम् ॥ १३ ॥

तेन पाण्डुना राज्ञा मुनिमिथुनं जायापतिरूपं स्वेच्छया लीलार्थमेणाकारि एणश्च एणी च तावेणी तदाकारयुक्तं शरेणेषुणा व्यसु विगतप्राणमकारि कृतम् । स च मुनिर्यमाभोऽतिक्रोधनत्वाद्यमतुल्यो गहनं विषमं शापमसुसमाभोगहनमसुसमायाः प्रियतमाया भोगं हन्तीत्यसुसमाभोगहा तं तादृशं शापं तत्र पाण्डावमुचद्विसर्जयामास ॥

स च भर्तव्यजनस्य त्यागं कृत्वा तथा सितव्यजनस्य ।
अरतो रामाभोगे पाण्डुश्चक्रे तपांसि रामाभोऽगे ॥ १४ ॥

स च पाण्डुर्नृपो भर्तव्यजनस्य पोष्यजनस्य त्यागं कृत्वा तथा सितव्यजनस्य सितचामरस्य च त्यागं कृत्वा । अतिविरक्ततयेत्यर्थः । रामाभोगे कान्ताया भोगेऽरतोऽलग्नः । शापभयात् । अगे पर्वते तपांसि चक्रे । कीदृशः । रामाभो रामचन्द्रतुल्यः ॥

श्रितपरमाद्रीशान्तं पाण्डुं कुन्ती तथैव माद्री शान्तम् ।
तं भर्तारं भार्ये न कदाचिज्जहतुरभिमतारम्भार्ये ॥ १५ ॥

कुन्ती तथा माद्री चोभे भार्ये तं भर्तारं पाण्डुं कदाचिन्न जहतुः । कीदृशम् । श्रितपरमाद्रीशान्तं श्रितः परमस्य पुण्यस्याद्रीशस्य पर्वतश्रेष्ठस्य शतशृङ्गाख्यस्यान्तो येन तम् । पुनः कीदृशम् । शान्तं विरक्तम् । किंविशिष्टे भार्ये । अभिमतः पुण्य आरम्भः कार्यारम्भो ययोस्ते । तादृशे च आर्ये च साध्व्यौ च ते ॥

अपि च सुतापे तेन स्थितं सदा पाण्डुना सुतापेतेन ।
विफलेहा नाम नृणां जातिमकृत्वा पितामहानामनृणाम् ॥ १६ ॥

अपि चेति प्रागुक्तसमुच्चये । तेन पाण्डुनृपेण सुतापेतेन पुत्ररहितेन सता(दा) सुतापे सुष्ठु तापः संतापस्तस्मिन् स्थितम् । अत्र स्मृतिवाक्यगर्भं हेतुमाह—विफलेहेत्यादि । नाम निश्चये आगमे वा । नृणां मनुष्याणामीहा चेष्टा व्यवहारः शरीरयात्रादिर्विफला फलरहिता । किं कृत्वा । पितामहानां जातिं वंशरूपामनृणामृणरहितामकृत्वा । 'पुत्रे जाते पितृऋणान्मुक्तिः' इत्यागमः ॥

सततं साशं सन्तं क्षेत्रजमुत्पादयेति सा शंसन्तम् ।
निजगाद कलं कान्तं कुन्ती दधती मनो मदकलङ्कान्तम् ॥ १७ ॥

सा कुन्ती राज्ञी 'क्षेत्रजं सुतमुत्पादय' इति शंसन्तं कान्तं प्रियं निजगादोचे । कथम् । कलं मधुरम् । कीदृशी कुन्ती । मनो दधती । कीदृशं मनः । मदकलङ्कान्तं मदोऽहंकार एव कलङ्कस्तस्यान्तो यस्मिंस्तत् । कान्तं कीदृशम् । साशं सहाशया विद्यते यः स तादृशम् । पुनः कीदृशम् । सन्तं साधुम् । कदा । सततं सदैव ॥

नरवर विप्रवरेण प्राप्तो मन्त्रो मया भुवि प्रवरेण ।
स्यादमुना मम वश्यं दैवतमखिलं कृतावनाममवश्यम् ॥ १८ ॥
मुदितविनायकमित्रा सेत्युक्त्वा चोदितार्चनाय कमित्रा ।
यमपवमानमघोनां पूजामाधत्त सबहुमानमघोनाम् ॥ १९ ॥

(युग्मम्)

हे नरवर राजन्, भुवि भूमौ प्रवरेण महार्हेण विप्रवरेण दुर्वासोमुनिना का(क)रणेन मया मन्त्रः प्राप्तः । अमुना तद्दत्तेन मन्त्रेण ममाखिलं दैवतं कृतावनामं कृतोऽवनाम उपस्थितिर्येन तदवश्यं वश्यं स्याद्भविता ॥ सा कुन्ती इति पूर्वोक्तमुक्त्वा मुदितविनायकमित्रा मुदितः संतुष्टीकृतो विनायको गणपतिः मित्रः सूर्यश्च यया तादृशी कमित्रा भर्त्रा अर्चनाय मुनीश्वरप्राप्तमन्त्रार्चनार्थं चोदिता प्रेरिता सती यमपवमानमघोनां यमवायिन्द्राणां सबहुमानं बहुपूजाविधानेन सह आधत्त कृतवती । पूजां कीदृशीम् । अघोनाम् अघेन कलङ्केनोनां हीनाम् । विमलामित्यर्थः ॥

धर्मात्परमत्यन्तं युधिष्ठिरं नाम धर्मपरमत्यन्तम् ।
भीमं च मरुत्तनयं पार्थं शक्रादवाप च मरुत्तनयम् ॥ २० ॥

सा कुन्ती धर्माद्योगमूर्तिधराद्धर्मादत्यन्तं धर्मपरं युधिष्ठिरं नाम तनयमवाप । कीदृशम् । परमत्यन्तं पर उत्कृष्टो मत्यन्तो बुद्धिनिश्चयो यस्य स तम् । तथा च महाभारते आदिपर्वणि संभवे—'प्रयुक्ता सा तु धर्मेण योगमूर्तिधरेण वै । लेभे पुत्रं वरारोहा सर्वप्राणभृतां वरम् ॥' इति । सा कुन्ती भीमं मरुत्तनयं वायुसुतमवाप । तथा—शक्रादिन्द्रात्पार्थमर्जुनमवाप । किंभूतमर्जुनम् । मरुत्तनयं मरुत्तस्य मरुत्तनाम्नो राज्ञ इव नयो यस्य स तादृशम् ॥

मुदितमना देवाभ्यामश्विभ्यां तदनुशासनादेवाभ्याम् ।
सुललितमितराजनयन्नकुलं सहदेवमनुजमितराजनयम् ॥ २१ ॥

इतरान्या माद्री मुदितमनाः सती तदनुशासनादेव आभ्यामश्विभ्यां देवाभ्यां सकाशात्सुललितं सुमनोहरं नकुलं तनयमजनयत् । सहदेवं चानुजं कनिष्ठमजनयत् । अनुजमित्यनेन यमलावजनयदित्यर्थः । कीदृशं नकुलम् । इतराजनयम् इतो ज्ञातो राजनयो राजनीतिर्येन स तादृशम् । सर्वे गत्यर्था ज्ञानार्थाः ॥

इत्थं राजा तेषु प्रकाममुदितो मुनेर्गिरा जातेषु ।
अहरन्माद्र्या वासः स कदाचित्कुसुमितद्रुमाद्र्यावासः ॥ २२ ॥

इत्थमनेन प्रकारेण मुनिगिरा श्रीदुर्वासोमुनिवचसा तेषु युधिष्ठिरादिषु जातेषु तनयेषु प्रकाममतीव मुदितः कदाचित्कुसुमितद्रुमाद्र्यावासः कुसुमिता द्रुमा यस्मिन्स कुसुमितद्रुमस्तादृशश्चासावद्रिः पर्वतः स आवासो यस्य तादृक् । कुसुमितद्रुमेत्यनेन रतेर्विभा-

वत्वं द्योतयति । अनेन चोन्मदमदनो विस्मृतापहार्यो मुनिशापोऽपि जात इत्यर्थः । तादृशः सन् माद्र्या माद्रीनामराज्ञ्या वासो वस्त्रमहरत् तां नग्नीचकार । तया सह रहश्चिक्रीडेत्यर्थः ॥

मुनिशापाशन्या स न्यपतच्च प्राप्तकालपाशन्यासः ।
तत्र मृतेऽवनिपे तु स्निग्धाः सुहृदोऽध्यवनि पेतुः (?) ॥ २३ ॥

स नृपः पाण्डुर्मुनिशापाशन्या मुनिशाप एवाशनिर्वज्रस्तया । 'अशनिर्द्वयोः' इति वचनात्स्त्रीत्वमपि । यथाहं मैथुनसमये भवता मोहात्संहारितः, तथा चेत्त्वमपि सह स्त्रिया मैथुनं कुरुषे मत्सदृशीमवस्थां प्राप्स्यसे इति मुनिशापवज्रेण न्यपतत् । कीदृशः । प्राप्तकालपाशन्यासः प्राप्तः कालपाशस्य यमपाशस्य न्यासो येन । तु पक्षान्तरे । तत्रावनिपे अवनिं भूमिं पातीत्यवनिपस्तस्मिन्नवनिपे राज्ञि मृते सति । स्निग्धाः सस्नेहाः सुहृदो मित्राणि तानि अध्यवनि भूमौ पेतुः । दुःखेनेत्यर्थः । अत्रापि 'पेतुः' इति विसर्जनीयाभावेऽपि यमके न दोषः ॥

अथ विधिना विप्राणां पितुस्तनुं पाण्डुनन्दना विप्राणाम् ।
प्रणिदधुराशु चितायां निरता तद्युक्तया धुरा शुचितायाम् ॥ २४ ॥

अथानन्तरं पाण्डुनन्दना युधिष्ठिरादयो विप्राणां विगतप्राणां पितुर्जनकस्य तनुं विप्राणां विधिना ब्राह्मणोक्तविधिना आशु शीघ्रं चितायां प्रणिदधुः । अग्निसंस्कारायेत्यर्थः । कीदृशाः पाण्डुनन्दनाः । तेषु शुचिषु जनेषु युक्ता या धूर्ध्यत्वं तया शुचितायां पवित्रत्वं निरताः ॥

तत्र शुभानुचितायां पपात माद्री च चित्रभानुचितायाम् ।
रमते नाकमितारं मृतमप्यन्वेति याङ्गना कमितारम् ॥ २५ ॥

माद्री राज्ञी शुभा सुकुमाराङ्गी अनुचितायां तदयोग्यायां चित्रभानुचितायामग्निचितायां पपात च । अत्र माद्र्याः कनिष्ठस्त्रियोऽपि प्राक्पत्यनुगमनं स्वभर्तृमरणहेतुत्वात्तस्याः । अत्रानुगमने स्मृतिवाक्यगर्भमाह—सा अङ्गना अरं शीघ्रं नाकं स्वर्गमिता गता रमते क्रीडते । सा केत्याह—मृतमपीति । याङ्गना मृतमपि कमितारमन्वेति ॥

अथ स यदा पाण्डुरयात्रिदिवं कीर्त्या[1] चकासदापाण्डुरया ।
चेतोभूपरिभूतस्तदैव पार्थो गिरिप्रभूपरिभूतः ॥ २६ ॥

अथानन्तरमापाण्डुरया आ समन्तात्पाण्डुरया कीर्त्या चकासच्छोभमानः स पाण्डुर्यदा त्रिदिवं स्वर्गमयाद्गतः । किंविशिष्टः । चेतोभूपरिभूतश्चेतोभुवा कामेन परिभूतः माद्रीविषयात्यनुरागोत्पन्नेन परिभूतः । तदैव पार्थो युधिष्ठिरो गिरिप्रभूपरि गिरीन्द्रस्य शतशृङ्गस्योपरि भूतः । तत्र यात इत्यर्थः ॥

---

१. 'कीर्त्या च चकास' इति कश्मीरपुस्तके.

सकरुणमम्बालतया कृतावलम्बोऽनुजैः समं बालतया ।
कुरुसेनागोपपदं पुरं मुनीन्द्रैरनायि नागोपपदम् ॥ २७ ॥

अम्बा तत्पितामही सैव लता दुःखितत्वेनातिकृशत्वात् । तया कृतावलम्बः कृतोऽवलम्बो यस्य स युधिष्ठिरो बालतया बालत्वेनानुजैर्भीमादिभिः सह नागोपपदं पुरं वारणावतं नगरं मुनीन्द्रैर्व्यासादिभिः कर्तृभिरनायि नीतः । पुरं किंभूतम् । कुरुसेनागोपाः कुरुसेनारक्षकाः कुरुश्रेष्ठास्तेषां पदं स्थानम् ॥

यस्य च महितमुदन्तं दुरितौघविघातहेतुमहितमुदन्तम् ।
जगतां मङ्गलदमृतं मुनिवचनमवोचदुत्तमं गलदमृतम् ॥ २८ ॥
(युग्मम्)

स युधिष्ठिरः कः । उत्तमं गलदमृतं स्रवत्पीयूषं मुनिवचनं कर्तृ यस्य युधिष्ठिरस्य महितं पूजितम् उदन्तं कीर्तिरूपमवोचदकथयत् । किंविशिष्टमुदन्तम् । दुरितौघस्य विघाते हेतुम् । पुनश्च किंभूतम् । अहितमुदन्तमहितानां शत्रूणां या मुत् प्रीतिस्तस्या अन्तस्तम् । [जगतां मङ्गलदं कल्याणकारकम् । ऋतं सत्यम्] ॥ युग्मम् ॥

अथ कुरुराजकुमारैः स्वगुणजितस्कन्ददिनकराजकुमारैः ।
द्रोणकृपाचार्याभ्यां प्रापि महास्त्रं[1] गुरुकृपा चार्याभ्याम् ॥ २९ ॥

अथानन्तरं कुरुराजकुमारैर्युधिष्ठिरादिभिः स्वगुणैर्जितः स्कन्दः कुमारः, दिनकरः सूर्यः, अजो विष्णुः, कुः पृथ्वी, मारः कामश्च रूपेण यैस्ते तादृशैरार्याभ्यां महनीयाभ्यां द्रोणकृपाचार्याभ्यां द्रोणाचार्यकृपाचार्याभ्यां सकाशात् महास्त्रं प्रापि लब्धम् । गुरुकृपा च महती कृपा च प्रापि । तदीयकृपया महास्त्रविद्या तैरवगतेत्यर्थः ॥

गुणसमुदायादेषु प्राप्तयशस्केषु पाण्डुदायादेषु ।
सुबलसुतातनयानां प्रद्वेषोऽभून्निरस्ततातनयानाम् ॥ ३० ॥

एषु पाण्डुदायादेषु पाण्डुतनयेषु । 'दायादौ सुतबान्धवौ' इत्यमरः । प्राप्तयशस्केषु गुरुप्रसादावगतास्त्रविद्याकुशलत्वेन प्राप्तकीर्तिषु सुबलसुतातनयानां गान्धारीपुत्राणां कौरवाणां दुर्योधनादीनां प्रद्वेषोऽभूत् । कीदृशानाम् । निरस्ततातनयानां निरस्तोऽवगणितस्तातस्य धृतराष्ट्रस्य गुरोः पूज्यस्य वा नयो नीतिर्यैस्ते तादृशास्तेषाम् । 'तातः पितरि पूज्ये च' इत्यनेकार्थेषु ॥

बद्ध्वा चण्डा लतया विश्वस्तं सुप्तमाप्तचण्डालतया ।
ससृजुर्भीमं तोये ते गाङ्गे[2] तद्बलेन भीमन्तो ये ॥ ३१ ॥

ते दुर्योधनादयश्चण्डाः क्रूरा आत्मचण्डालतया आत्मनो नृशंसतया भीमं भीमसेन वि-

१. 'महास्त्रं च' इति मूलपुस्तके. २. कश्मीरपुस्तके नास्ति.

श्वस्तं सुप्तं सन्तं लतया कशारूपया बद्ध्वा गाढे तोये सत्त्वजुश्चिक्षिपुः । ते के इत्याह—तद्बलेन भीमबलेन भीमन्तो भययुक्ता आसन् ॥

निदधुरथाहीनस्य स्वपतस्तं मर्मसु व्यथाहीनस्य ।

विषमपि सूदन्तस्य विचिक्षिपुर्भोजने ससूदं तस्य ॥ ३२ ॥

अथानन्तरं ते कौरवास्तं भीमं व्यथाहीनस्य [स्वपतः] अहीनस्य महासर्पस्य मर्मसु जीवस्थानेषु निदधुः । मर्मस्विति यथा सोऽतिक्रुद्ध एनं दंशयिष्यतीति तथा । सूदन्तस्य सु शोभन उदन्तः कीर्तिरूपो यस्य स तादृशस्य तस्य भीमस्य ससूदं सव्यञ्जनं विषमपि भोजनेऽन्ने विचिक्षिपुः ॥

पुनरहिते सन्नगरे जतुगेहं वारणावते सन्नगरे ।

व्यधुरधिकं पापास्ते कर्मणि कृतचेतसोऽनुकम्पापास्ते ॥ ३३ ॥

ते कौरवाः पापाः पापकर्माणो अनुकम्पया अपास्ते निराकृते कर्मणि अधिकं कृतचेतसः सन्तः वारणावते सन्नगरे सत् शोभनं नगरं तत्र स्थिताः सन्नगरे सन्नो लग्नः गरं विषं यत्र तादृशेऽहितेऽशुभे स्थले जतुगेहं जतुगृहं तेषां पाण्डवानां कृते व्यधुः । येन ते लाक्षानिलयं लीनाः स्युरित्यभिप्रायेणेत्यर्थः ॥

तत्र पुरि पुरोचनतः पार्थाः पूजामवाप्य रिपुरोचनतः ।

ऊषुरशङ्कावन्तश्छद्मगृहे सति च शोकशङ्कावन्तः ॥ ३४ ॥

पार्था युधिष्ठिरादयस्तत्र पुरि पुरोचनतो दुर्योधनसख्युः पुरोचनाख्यात् रिपुरोचनतो रिपूणां यद्रोचनं मिथ्याभिलापः ततश्च पूजामवाप्य सति च अन्तःशोकशङ्कौ शोक एव शङ्कुः कीलं तत्र छद्मगृहे जतुगृहे अशङ्कावन्तः शङ्कारहिता ऊषुरासांचक्रिरे ॥

विदुरगिरात्रावाप्तः खनको दाहं निवेद्य रात्रावाप्तः ।

परिखारम्भी तेभ्यः कुहरं तत्राकरोदरं भीतेभ्यः ॥ ३५ ॥

विदुरस्य गीस्तया विदुरगिरा विदुरवचनेन आप्तः कुशलः कश्चित् खनको विदुरसखो रात्रौ दाहं निवेद्य अत्र अवाप्तः तत्र च परिखां खनिमारम्भयतीति परिखारम्भी भीतेभ्यस्तेभ्यः पाण्डवेभ्यः तत्र [अरं] कुहरं छिद्रमकरोत् । येन ते ततो जतुगृहात्तेन मोचिता इत्यर्थः ॥

जवजितपरमाश्वस्तं भीमो निलयं च तं च परमाश्वस्तम् ।

धृतसोदर्यं तेन प्रदीप्य निशि निर्जगाम दर्यन्तेन ॥ ३६ ॥

भीमो भीमसेनस्तं निलयं जतुगृहं तं च पुरोचनं परमाश्वस्तमतीवाश्वासयुक्तं प्रदीप्य आदीप्य तेन दर्यन्तेन दर्याः गुहाया योऽन्तस्तेन निशि रात्रौ निर्जगाम । कथम् । धृतसोदर्यं धृताः सोदर्या भ्रातरो युधिष्ठिराद्या यत्र तत् । तत्सहितं निर्जगाम । किंविशिष्टो भीमः । जवजितपरमाश्वः जवेन जितः परमाश्वः आजानेयो अश्वो येन ॥

गूढाकारा विलतस्तस्मान्निर्गत्य तेऽन्धकाराविलतः ।
प्रापुर्नानावातां गङ्गां तेरुश्च सुवदना नावा ताम् ॥ ३७ ॥

ते युधिष्ठिराद्या अन्धकाराविलतोऽन्धकारेणाविलं कलुषं तस्मात् विलतो विवरात् निर्गत्य गूढाकाराः सन्तः सुवदनाः सुरम्यं वदनं येषां तादृशास्तां प्रसिद्धां गङ्गां नावा नौकया प्रापुः । किंविशिष्टां गङ्गाम्। नानावातां नानाविधा वाता यस्यां सा ताम् ॥

पथि विषमे धावन्तः पार्थाः पृथया सहैव मेधावन्तः ।
सम्मृगवरक्षोभवनं विविशुर्देशं हिडिम्बरक्षोभवनम् ॥ ३८ ॥

पार्था युधिष्ठिराद्या विषमे पथि धावन्तो मेधावन्तो बुद्धिमन्तः पृथया सहैव कुन्त्या सहैव हिडिम्बरक्षोभवनं हिडिम्बासुरगृहं देशं विविशुः । किंविशिष्टं देशम् । सम्मृगवरक्षोभवनं सह मृगवराणां क्षोभेन वर्तन्ते यानि तानि सम्मृगवरक्षोभानि वनानि यस्मिन् स तादृशम् ॥

अथ रुधिरसुरापायी विजजृम्भे राक्षसो नरसुरापायी ।
दर्पादनुजां तेभ्यः क्षुधान्वितः प्राहिणोद्दनुजान्तेभ्यः ॥ ३९ ॥

अथानन्तरं राक्षसः हिडिम्बः विजजृम्भे पुस्फोर । किंविशिष्टः । रुधिरसुरापायी रुधिरमेव सुरा तां पिबतीति रुधिरसुरापायी । पुनः किंविशिष्टः । नराश्च सुराश्च तान् अपायते दूरीकुरुते स तादृक् । स राक्षसः—दनुजान्तेभ्यः दनुजानां दानवानामन्तः येभ्यस्तेभ्यः पाण्डवेभ्यः दर्पादहंकारादनुजां हिडिम्बां नाम राक्षसीं प्राहिणोत् विसर्जयामास ॥

उन्नतसालसमानं भीमं भीमं समेत्य सा लसमानम् ।
रुचिरतरालापाङ्गी भूता निजगाद गिरमरालापाङ्गी ॥ ४० ॥

सा हिडिम्बा नाम राक्षसी लसमानं शोभमानं भीमं भीमसेनमुन्नतसालसमानमुन्नतो यः सालः वृक्षः प्राकारो वा तस्य समानम् । 'प्राकारो वरणः सालः' इत्यमरः । 'प्राकारवृक्षयोः सालः' इत्यनेकार्थेषु । भीमं समेत्य गिरं वाचं निजगाद । कीदृशी । रुचिरतरालापाङ्गी रुचिरतराः आलापा अङ्गानि च यस्याः सा । पुनः किंविशिष्टा । अरालापाङ्गी अरालाः कुटिला अपाङ्गा नेत्रान्ता यस्याः सा ॥

सा हिडिम्बा भीमसेनं किमुवाचेत्याह—

अरिसमितावत्रसतः क्रव्यभुजोऽहं वनक्षितावत्र सतः ।
श्रुतविग्रहिडिम्बस्य स्वसा हिडिम्बा नृणां वर हिडिम्बस्य ॥ ४१ ॥

हे नृणां वर, अरिसमितौ शत्रूणां संग्रामे त्रसन् कातरो न अत्रसन् तस्य । 'सभासंगतियुद्धेषु समितिः' इति विश्वः । तथा—अत्र वनक्षितौ सतः क्रव्यभुजो राक्षसस्य

१. 'प्राहिणोच्च दनुजा' ग.

हिडिम्बनाम्नः अहं हिडिम्बा नाम स्वसा । अन्यच्च कीदृशस्य च । श्वतविग्रहिडिम्बस्य श्वतानि पाचितानि विग्रहिडिम्बानि शत्रुशरीराणि येन तादृशस्य ॥

सरभसमग्रजवाचः श्रवणादस्म्यागता समग्रजवा च ।
भ्रातृसमेतं हि त्वानेतुं साहं त्वया रमे तं हित्वा ॥ ४२ ॥

साऽहमग्रजस्य भ्रातुर्वाचः श्रवणात् सरभसं सोत्कण्ठमागतास्मि । भवत्समीपमित्यर्थः । किंविशिष्टाहम् । समग्रो जवो वेगो यस्याः सा । हि निश्चये । किं कर्तुम् । भ्रातृसमेतं भ्रातृयुक्तं त्वामानेतुमागतास्मीति संबन्धः । साहं त्वया सह रमे क्रीडामि । किं कृत्वा । तं भ्रातरं हित्वा त्यक्त्वा ॥

क्रियतामारोहरतिः स्कन्धे मम धैर्यमेष मारो हरति ।
मण्डलमावामस्याश्चराव भूमेः सुखाय मा वामः स्याः ॥ ४३ ॥

हे नृणां वर, भवता मम स्कन्धे आरोहरतिः आरोहे या रतिः सा क्रियताम् । कुत इत्याह—एष मार एष कामो मम धैर्यं हरति । आवां त्वं च अहं चेत्यावामस्या भूमेर्मण्डलं चराव । कस्मै । सुखाय । त्वं वामः कुटिलो मा स्या मा भव ॥

आगमनविलम्बनतस्तस्या इति दारिताननविलं वनतः ।
क्षुभितो रक्षोनाथः स्वयमागाच्च[1] येन रक्षोनाथ ॥ ४४ ॥

अथानन्तरमित्यनेन प्रकारेण तस्या हिडिम्बाया आगमनविलम्बनत आगमनविलम्बाद्धेतोः क्षुभितः क्षोभवान् रक्षोनाथो हिडिम्बासुरो वनतस्तस्माद्वनात् स्वयमागादाजगाम च । कथम्—दारिताननविलं दारितं व्यात्तमाननमेव विलं कुहरं कु(य)त्र कर्मणि तथा। क्रियाविशेषणमेतत् । स रक्षोनाथः क इत्याह—येन रक्षसा हेतुना रक्षा पालनमूना हीना भवति । येन रक्षसा ग्रस्तस्य कुतोऽपि रक्षा नास्ति कोऽपि तद्ग्रस्तं रक्षितुं समर्थो न भवतीत्यर्थः ॥

तदनु च रक्षोभीमौ बलं दधानौ परस्परक्षोभीमौ ।
अक्षतवक्षोभागौ जघटाते जनितभैरवक्षोभागौ ॥ ४५ ॥

तदनु च तदनन्तरं रक्षोभीमौ हिडिम्बासुरभीमसेनौ इमौ परस्परक्षोभि अन्योन्यं क्षोभयुक्तं बलं दधानौ अक्षतवक्षोभागौ न क्षतो वक्षोभागो ययोस्तौ जनितभैरवक्षोभागौ जनित उत्पादितो भैरवक्षोभो अगः पर्वतो याभ्यां तौ जघटाते संमिलितौ ॥

यदा तौ युद्धार्थं मिलितौ तदा किं जातमित्याह—

दुद्रुवुरवनावृक्षा भुवि पेतुर्भग्नभासुरवना वृक्षाः ।
अगमदिव क्षोभं गौरभियातौ तौ यदा सवक्षोभङ्गौ ॥ ४६ ॥

---

१. 'मागाद्भ्रश्च' ग.

अवनौ भूमौ ऋक्षाः अच्छमला दुद्रुवुर्व्यवन् । तथा वृक्षा द्रुमा भुवि पेतुः । किंविशिष्टाः । भग्नभासुरवना भग्नानि भासुराणि दीप्तिमन्ति वनानि येषां ते । तथा गौर्भूमिः क्षोभं कम्पमगमदिव गतेव । कदेत्याह—तौ रक्षोभीमौ सवक्षोभङ्गौ सह वक्षोभङ्गेन विद्येते यौ तौ यदा अभियातौ संमुखं मिलितौ ॥

स विधुतदूरस्थलतः प्रमथितपृथिवीतलोऽमृदूरस्थलतः ।
संरम्भी मारुतिना हतो हिडिम्बः पपात भीमारुतिना ॥ ४७ ॥

भीमारुतिना भीमं च तदारुतं सिंहनादस्तद्वता मारुतिना वायुपुत्रेण भीमेन हतो हिडिम्बो हिडिम्बासुरः पपात । किंविशिष्टः । विधुतदूरस्थलतो विधुताः कम्पिता दूरस्था लता वीरुधो येन । पुनः किंविशिष्टः । प्रमथितं पृथिवीतलं येन सः । कुतः । अमृदूरस्थलतः अमृदु कठिनं यदुरःस्थलं तस्मात् । पुनः किंविशिष्टः । संरम्भी क्रुद्धः ॥

अथ कृतनीचारिजया जग्मुः सार्धं निशीथिनीचारिजया[1] ।
विप्रसभावर्यं ते ददृशुर्व्यासं ततो विभावर्यन्ते ॥ ४८ ॥

अथानन्तरं ते युधिष्ठिराद्याः कृतो नीचस्य अरेर्हिडिम्बासुरस्य जयो यैस्ते निशीथिनीचर(चारि)जया निशीथिनीचराद्(चारिणो) राक्षसाज्जाता निशीथिनीचर(चारि)जा हिडिम्बा तया सार्धं जग्मुः । ततोऽनन्तरं ते युधिष्ठिराद्या विभावर्यन्ते राव्यन्ते विप्रसभावर्यं ब्रह्मसभायाः प्रवरं व्यासं श्रीव्यासमुनिं ददृशुर्दृष्टवन्तः ॥

तेन च बन्धावसति स्वयमुपदिष्टा शुभानुबन्धा वसतिः ।
भुञ्जाना वन्यं ते तत्रोषुः पाण्डवा वनावन्यन्ते ॥ ४९ ॥

तेन च श्रीव्यासमुनिना बन्धौ बन्धुजनेऽसति सति स्वयं तेषां वसतिर्वनावन्यन्ते वनस्य या अवनिर्भूमिस्तदन्ते उपदिष्टा तत्र च ते पाण्डवा वन्यं वनजं फलं भुञ्जाना ऊषुर्न्यवसिषुः(वात्सुः) ॥

तत्र च सानन्तरजा रेमे भीमेन राक्षसानन्तरजा ।
अप्यभवत्सापत्या ततो ययावनुमता सवत्सा पत्या ॥ ५० ॥

सा राक्षसानन्तरजा राक्षसस्य हिडिम्बस्यानन्तरजा कनिष्ठा भगिनी हिडिम्बा तत्र वनभूमौ भीमेन सह रेमे । ततोऽनन्तरं सा हिडिम्बा सापत्या सह अपत्येन घटोत्कचनाम्ना विद्यते या सा तादृश्यभवत् । ततोऽनन्तरं पत्या भीमेनानुमता आज्ञप्ता सवत्सा सघटोत्कचा ययौ ॥

अथ रिपुचक्रान्तरसा भरतवरा जग्मुरेकचक्रां तरसा ।
तत्र च विप्रवरस्य न्यवसन्भवनेऽमलच्छविप्रवरस्य ॥ ५१ ॥

---

१. 'चरजया' क-ख.

अथानन्तरं भरतवरा युधिष्ठिराद्या एकचक्रां नाम स्थानविशेषं तरसा वेगेन जग्मुः । किंविशिष्टाः । रिपुचक्रान्तरसाः रिपुचक्रस्य शत्रुवर्गस्य योऽन्तो विनाशः तत्र रसो येषां ते । तत्र च एकचक्रायाममलच्छविप्रवरस्य अमला छविर्येषां ते अमलच्छवयः शुचिकान्तयः शुचिचरित्रा वा तेषां मध्ये प्रवरस्तादृशस्य विप्रवरस्य अग्रजन्मधुर्यस्य भवने गृहे न्यवसन् निवासं चक्रुः ॥

निववुरावासं तं तरुमिव ते प्राप्य मधुकरा वासन्तम् ।
पाण्डुसुतेभ्यस्तेभ्यः प्रीतिं प्रापुर्जनाश्च तेऽभ्यस्तेभ्यः ॥ ९२ ॥

ते पार्थास्तं विप्रवरमावासमाश्रयं प्राप्य यद्वा तमावासमर्थात्तस्यैव विप्रवरस्य प्राप्य निववुः सुखिनो बभूवुः । के कमिव । यथा वासन्तं वसन्तस्य ऋतोरयं वासन्तस्तं तरुं प्राप्य मधुकरा भ्रमरा निवान्ति सुखिनो भवन्ति तद्वत् । तेभ्यः पाण्डुसुतेभ्योऽभ्यस्तेभ्यः परिचितेभ्यः । कतिपयदिनेषु गच्छत्सु इत्यर्थः । ते जनाश्च प्रीतिं प्रापुस्तत्रत्याः ॥

अथ सुजनसभार्यस्य द्विजस्य कुन्ती कदाचन सभार्यस्य ।
अशृणोद्रोदं तस्य प्राप च तं श्रवणतत्परोदन्तस्य ॥ ९३ ॥

अथानन्तरं कुन्ती सुजनसभार्यस्य सुजनानां साधुजनानां या सभा तस्यामार्यस्य प्रवरस्य सभार्यस्य भार्यासहितस्य तस्य द्विजस्य रोदं रोदनम् । 'रुदिर् अस्रु(श्रु)विमोचने' इति धातुः । कदाचन अशृणोत् । सा च कुन्ती उदन्तस्य तद्वृत्तान्तस्य श्रवणतत्परा सती क्रमेण च तं प्राप अवगतवती । 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इत्यमरः ॥

सोऽपि च मांसादेन त्रासितहृदयोऽब्रवीदिमां सादेन ।
आर्ये मे दुरितानां व्यसनमिदं फलमवेहि मेदुरितानाम् ॥ ९४ ॥

सोऽपि च विप्रवरः मांसादेन मांसं क्रव्यमत्तीति मांसादो राक्षसो बकासुरस्तेन त्रासितहृदयः कम्पितमानसः सन् सादेन कष्टेन इमां कुन्तीमब्रवीत् । किमित्याह—हे आर्ये साधुपूज्ये, मेदुरितानां मेदुराणि घनानि संजातानि मेदुरितानि तेषाम् । मे मम दुरितानां पापानां फलमिदं व्यसनमवेहि । येनाहं सभार्यः सपुत्रश्च रोदिमि इत्यर्थः ॥

पीडयतीमं देशं बको नराशोऽतिदुष्कृती मन्देशम् ।
अत्र वने कङ्कालं खादन्निवसत्यसावनेकं कालम् ॥ ९५ ॥

आर्ये, असावतिदुष्कृती महापापी नराशः नरान् अश्नातीति नराशो बको बकासुरो मन्देशं मन्दः कृपणपालनाशक्तेरीशः प्रभुर्यस्य स तादृशमिमं देशं पीडयति । अत्र च वने कङ्कालं शरीरास्थि शरीरिणां खादन् भक्षयन्नसावनेकं कालं चिरकालं निवसति ॥

तद्विहितातिपीडां वक्तुकामः पुनरपि विप्रवर आह—

अन्ने शकटाहार्येऽन्यस्य नरं दधिक्षसररसकटाहार्ये ।
समयपदव्या जनता ददाति तस्मै यथापदव्याजनता ॥ ९६ ॥

हे आर्ये, जनानां समूहो जनता तस्मै बकासुराय समयपदव्या समयस्य प्रातिदैवसिकरीत्या विहितस्य या पदवी मार्गः तया समयपदव्या तस्मै बकासुराय दधिकृसररसकटाहार्ये दधि च कृसरो भक्ष्यविशेषश्च तयोर्यो रसस्तस्य कटाहः लोहभाण्डविशेषस्तेनाहार्ये युक्ते तथा शकटाहार्ये शकटेन अनसा आहार्यमानेयं तस्मिन् अन्ने नरं मनुष्यं ददाति । किंविशिष्टा जनता । यथापत् आपदं विपदमनतिक्रम्य यथापत् । अव्याजेन नता नम्रीभूता । तथा च महाभारते आदिपर्वणि बकवधे कुन्तीं प्रति ब्राह्मणवाक्यम्—'सोऽयमस्माननुप्राप्तो वारः कुलविनाशनः । भोजनं पुरुषश्चैकः प्रदेयं वेतनं मया । न च मे विद्यते वित्तं संक्रेतुं पुरुषं क्वचित् ॥' इत्यादि ॥

हरणीयः सोद्यमया शक्त्या पुनरन्नसंचयः सोऽद्य मया ।
तस्मै नरकवलाय प्रदातुमीक्षे नरं न नरकवलाय ॥ ९७ ॥

हे आर्ये, मया [अद्य] सोऽन्नसंचयः पुनः सोद्यमया सोद्योगया शक्त्या समर्थतया अन्नराशिर्हरणीयः । नरकवलाय नरः कवलं ग्रासो यस्य स तादृशाय तस्मै बकासुराय । तथा नरकवत् भौमासुरवत् बलं यस्य तादृशाय नरमर्थात् अन्यं क्रेतुमसमर्थतया आनीय प्रदातुं न ईक्षे न पश्यामि ॥

इत्थं देव्यग्रभुजा निवेदिता वचनमाददे व्यग्रभुजा ।
एष मम सुतो देयः सुविद्यया तस्य चालमसुतोदे यः ॥ ९८ ॥

इत्यमनेन प्रकारेण अग्रभुजा ब्राह्मणेन निवेदिता सती देवी कुन्ती वचनमाददे वचनमूचे । किंविशिष्टा देवी । व्यग्रभुजा भीमसेनमुद्दिश्य व्यग्रो भुजो हस्तो यस्याः सा । हस्तेन भीमं संदर्शयन्नित्यर्थः । हे ब्राह्मण, स एष मम सुतः । तस्मै नराशिने अर्थात् । सुप्रतिरूपकीभूतो देयः । स क इत्याह—यो मत्सुतोऽयं सुविद्यया सुधनुर्विद्यया तस्य नराशिनोऽसुरस्य असुतोदे असूनां प्राणानां तोदः क्षितिः । नाश इति यावत् । तत्र अलं समर्थः ॥

इत्थं तत्याजेयं द्विजाय भीमं सपत्नतत्याजेयम् ।
साधुहितानि यतन्ते ये कर्तुं जगति पण्डिता नियतं ते ॥ ९९ ॥

इत्थमनेन प्रकारेण इयं कुन्ती सपत्नतत्या शत्रुपङ्क्त्या अजेयं जेतुमशक्यं [भीमं] भीमसेनं द्विजाय ब्राह्मणाय तत्याज । ददावित्यर्थः । तादृशसाहसकर्मणि स्वौरसपुत्रदानेऽप्युद्युक्तायाः कुन्त्याः प्रशंसामर्थान्तरन्यासापदेशेनाह—साधुहितानीति । ये लोका इह जगति साधुहितानि साधूनां सज्जनानां शरणागतानां च हितानि अभयदानादीनि कर्तुं यतन्ते प्रयत्नं कुर्वन्ति, त एव नियतं निश्चयेन पण्डिता ऐहिकपारलौकिककर्मशुद्धिहेतुसदसद्विचारज्ञाः । अन्ये तु सर्वे एव मूढा इत्यर्थः ॥

तस्मै नवधेनुमते भीमेन ततो नराशनवधेऽनुमते ।
अन्नं सहितरसालं शकटे राशीचकार स हि तरसालम् ॥ १०० ॥

ततोऽनन्तरं हि निश्चये स ब्राह्मणोऽलमत्यर्थं तरसा वेगेन शकटे अनसि अन्नं राशीचकार । किंविशिष्टमन्नम् । सहितरसालं सहिता मिश्रिता रसाला क्षीरिणी भक्ष्यविशेषो यत्र । कस्मिन्सति । नराशनवधे नराशनस्य बकासुरस्य वधः तस्मिन्ननुमते अङ्गीकृते सति । केन । भीमेन । कस्मै । तस्मै ब्राह्मणाय । कीदृशाय । नवधेनुमते नवप्रसूतधेनुयुक्ताय ॥

साम्राम्भोजनवदनः प्रययौ भीमोऽधिरुह्य भोजनवदनः ।
दधदम्बासंदेशं प्राप च बलवान्बकाधिवासं देशम् ॥ ६१ ॥

भीमो भीमसेनः भोजनवत् अन्नसहितमनः शकटमधिरुह्य ययौ । कीदृशः । साम्राम्भोजनवदनः सह अस्राम्भसा अस्रजलेन वर्तन्ते यानि तानि सास्राम्भांसि जनवदनानि जनमुखानि यस्य सः । अयं सुकुमारतरो राजपुत्रस्तादृशान्नृशंसाद्बकासुरात्कथं जीविष्यतीति जनमुखानि साश्रूणि जातानीत्यर्थः । पुनः कीदृशः । अम्बाया मातुः कुन्त्याः संदेशमाज्ञास्वरूपं दधद् बिभ्रत् । च पुनः स भीमो बकाधिवासं देशं बकनिवासं च देशं प्राप । कीदृशः । बलवान् ॥

रजनिचराह्वाननतः सोऽन्नं वदनं विदार्य राह्वाननतः ।
आन्त्रैरधिकम्बुभुजे रक्षस्यभियात्यभीतिरधिकं बुभुजे ॥ ६२ ॥

स भीमो रजनिचरस्य बकासुरस्याह्वानेन नतः सन् राह्वाननतो राहुमुखादपि विकृतं वदनं मुखं विदार्य आन्त्रैरन्त्राणां पुरीततां समूह आन्त्राणि तैरधिकम्बुः कम्बवो हस्तभूषणानि अधिकाः कम्बवो यस्य सोऽधिकम्बुर्भुजो यस्य स तादृशे नरान्त्रैः कृतवलयभुजे इत्यर्थः । 'अन्त्रं पुरीतत्' इत्यमरः । 'कम्बुः शङ्खे स्त्रियां पुंसि शम्बूके वलये गजे' इति मेदिनी । रक्षसि बकासुरेऽभियाति समीपमागच्छति सति अधिकमन्नं प्रागुपनीतं बुभुजे ॥

विपुलतरेऽशनराशौ नाशं गमिते ततो नरेशनराशौ ।
सविकासे कोपे तौ युयुधाते स्वेदबिन्दुसेकोपेतौ ॥ ६३ ॥

ततोऽनन्तरमशनराशौ अन्नराशौ विपुलतरेऽतिवितते नाशं गमिते भुक्ते सति नरेशनराशौ नरेशो भीमो नराशो बकासुरस्तौ युयुधाते युद्धं चक्रतुः । कस्मिन्सति । कोपे क्रोधे सविकासेऽतिवितते सतीत्यर्थः । तौ कथंभूतौ । स्वेदबिन्दुसेकोपेतौ स्वेदबिन्दूनां यः सेकः सेचनं तेनोपेतौ युक्तौ । श्रमजलबिन्दुसिक्तावित्यर्थः ॥

विपुलोरोदोरक्षं वृकोदरः सपदि दत्तरोदोरक्षम् ।
शत्रुमनायासं तं विक्रम्य यमक्षयं निनायासन्तम् ॥ ६४ ॥

वृकोदरो भीमस्तं शत्रुं बकासुरं विक्रम्याक्रम्य यमक्षयं कीनाशसदनं निनाय । कथम् । अनायासमायासेन विना । किंविशिष्टं तम् । विपुलोरोदोरक्षं दोषावेवाक्षौ रथांशौ । 'रथांशेऽक्षो दैत्यभिदि' इति विश्वः । विपुलं विस्तीर्णमुरः वक्षो दोरक्षौ च यस्य स तम् ।

पुनः कीदृशम्। दत्तरोदोरक्षं दत्ता रोदसोर्द्यावापृथिव्यो रक्षा येन। तस्य बकासुरस्य त्रिजगज्जयित्वादित्यर्थः। कथम्। सपदि तत्क्षणात्॥

गुप्तिमुदग्रामस्य क्रव्यान्निधनेन कोविदग्रामस्य।
भीमः स विधायातः सोदर्याणां बभूव सविधायातः॥ ६५॥

स भीमः क्रव्यान्निधनेन बकासुरवधेनास्य कोविदग्रामस्य विद्वत्समूहस्योदग्रां महतीं गुप्तिं रक्षां विधाय अतोऽनन्तरं सोदर्याणां युधिष्ठिरादीनां सविधायातः निकटायातो बभूव। 'सन्सुधीः कोविदः कविः' इत्यमरः॥

[1]पुरमगमच्छस्तस्य द्विजस्य सदनं [स]रागमच्छंस्तस्य।
स चकारात्रावासं नानालापाश्च तस्य रात्रावासन्॥ ६६॥

अच्छः शुचिर्भीमस्तस्य शस्तस्य प्रशस्तस्य द्विजस्य सदनं पुरमगमत्। कीदृशं पुरम्। सरागं सह रागेण स्नेहेन बकासुरविघ्नोपशमात् विद्यते यत्तत्। स भीमोऽत्र पुरे आवासं वसतिं चकार। तस्य च नानालापाः नानाविधसंजल्पाः रात्रौ तेन ब्राह्मणेन सह आसन्॥

नानालापाः कीदृग्विधा आसन्नित्याह—

अद्य समुत्सबलोऽलं प्रयाति पाञ्चालनगरमुत्सवलोलम्।
सविलासं देशेभ्यः क्षत्रसमूहः सदूतसंदेशेभ्यः॥ ६७॥

अद्य अस्मिन्नहनि क्षत्रसमूहः क्षत्रियसमाजः समुत् सह मुदा हर्षेण वर्तते यः सः। तथा अलमत्यर्थं सबलः बलसहितः देशेभ्यः स्वदेशेभ्यः पाञ्चालनगरं प्रयाति। द्रौपदीस्वयंवरार्थमित्यर्थः। किंविशिष्टं पाञ्चालनगरम्। उत्सवलोलमुत्सवेन लोलं सकलकलम्। किंविशिष्टेभ्यः। सदूतसंदेशेभ्यः सह दूतसंदेशेन वर्तन्ते ये ते तादृशास्तेभ्यः॥

पुनः कीदृशा आलापा आसन्नित्याह—

पद्मनिकाशास्यायाः पाञ्चाल्याः सकलकामुकाशास्यायाः।
तत्र सशोभवितानः स्वयंवरः प्रीतये दृशो भविता नः॥ ६८॥

तत्र पाञ्चालनगरे पद्मनिकाशास्यायाः पद्मस्य सदृशमास्यं मुखं यस्याः, तथा सकलकामुकाशास्यायाः सकलकामुकानामाशास्या काङ्क्षणीया तस्याः, पाञ्चाल्या द्रौपद्याः स्व-

---

१. 'अथ गृहमगमच्छस्तस्य द्विजस्य कोऽप्यतिथिरागमच्छस्तस्य' इति ग-पुस्तकपाठ एव युक्तः. 'तत्रैव न्यवसन्राजन्निहत्य बकराक्षसम्। अधीयानाः परं ब्रह्म ब्राह्मणस्य निवेशने॥ ततः कतिपयाहस्य ब्राह्म॰ संशितव्रतः। प्रतिश्रयार्थी तद्वेश्म ब्राह्मणस्याजगाम च॥ स सम्यक्पूजयित्वा तं विप्रं विप्रर्षभस्तदा। ददौ प्रतिश्रयं तस्मै सदा सर्वातिथिव्रतः॥ ततस्ते पाण्डवाः सर्वे सह कुन्त्या नरर्षभाः। उपासांचक्रिरे विप्रं कथयन्तं कथाः शुभाः॥' इति भारतसंवादात्.

यंवरो नोऽस्माकं दृशो दृष्टेः प्रीतये तुष्ट्यै भविता संपत्स्यते । कीदृशः स्वयंवरः । सशोभवितानः सशोभानि शोभायमानानि वितानानि उल्लोचा यस्मिन् । 'अस्त्री वितानमुल्लोचः' इत्यमरः । 'निभसंकाशनीकाशनिकाशाः' इति च ॥

पुनः कीदृशा आलापा आसन्नित्याह—

यदि वो रुचिरायात स्वयंवराय श्व एव रुचिरायातः ।
स हि बहुवित्तस्वन्नः प्राप्तानां सुलभमत्र वित्त स्वं नः ॥ ६९ ॥

श्व एव परेऽहनि संभविने रुचिराय रम्याय स्वयंवराय यदि वो युष्मभ्यं रुचिः, तर्हि अत आयात यूयम् । रुच्यर्थानां चतुर्थी । स हि स्वयंवरः बहुवित्तस्वन्नः बहु वित्तं लब्धं सुशोभनमन्नं यस्मिन् स तादृग्भवति । अत्र प्राप्तानां नः सुलभं स्वं धनं वित्त जानीत । विदेर्लोट् । मध्यमबहुवचने रूपम् ॥

इति सरसं सद्यो गाः श्रुत्वा पार्थाः सपान्थसंसद्योगाः ।
प्रययुर्विप्रक्षयतः प्रीताः पृथया सहा रविप्रक्षयतः ॥ ७० ॥

पार्थाः युधिष्ठिराद्याः सरसं कृत्वा सद्यः तत्क्षणमेव गा वाच इत्यनेन प्रकारेण श्रुत्वा सपान्थसंसद्योगाः सह पान्यानामध्वगानां संसत्सभा तस्या योगेन सह वर्तन्ते ये ते प्रीताः संतुष्टाः पृथया कुन्त्या सह विप्रक्षयतो ब्राह्मणगृहात् प्रययुर्गताः । कुतः । आ रविप्रक्षयत आ रवेः सूर्यस्य प्रक्षयोऽस्तगमनं तदवधीत्यर्थः ॥

तैः क्षणदावेलायां संछन्नसरित्समुद्रदावेलायाम् ।
अधरितसुरसंपद्भिः सुरनद्याः पदमतारि सुरसं पद्भिः ॥ ७१ ॥

तैः पार्थैः संछन्नसरित्समुद्रदावेलायां संछन्नाः सरितः समुद्रा दावा वनानि इला धरित्री यया सा तस्यां क्षणदावेलायाम् अधरितसुरसंपद्भिर्जितदेवसंपद्भिः सुरनद्या गङ्गायाः पदं स्थानमतारि तीर्णम् । कैः । पद्भिः पादैः । कथम् । सुरसम् । 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः ॥

अथ पृथुरागमदस्त्रीसार्थः पार्थान्रुरुत्सुरागमदस्त्री ।
गन्धर्वाधीशस्तां चित्ररथो नाम शास्त्रबाधी शस्ताम् ॥ ७२ ॥

अथानन्तरं चित्ररथो नाम गन्धर्वाधीशः पार्थान्युधिष्ठिरादीन्रुरुत्सू रोद्धुमिच्छुस्तां गङ्गामागमत् । कीदृशः । अस्त्री अस्त्रवान् । पुनः कीदृशः । पृथुरागमदस्त्रीसार्थः पृथुर्महान् रागः स्नेहः मदश्च यौवनौद्धत्यं यस्य स तादृक् स्त्रीसार्थो यस्य सः । तथा चादिपर्वणि—'तत्र गङ्गाजले रम्ये विविक्ते क्रीडयन्स्त्रियः । इर्ष्युर्गन्धर्वराजः[1] स्म जलक्रीडार्थमागतः ॥' इति । कीदृशीं गङ्गाम् । शस्तां प्रशस्ताम् ॥

---

१. 'राजो वै जलक्रीडामुपागतः' इति तु मुद्रितभारतपुस्तके.

न्यरुणद्वेलातीतं समुद्रमिव जिष्णुराहवेऽलाती तम् ।
क्षिप्तमहास्त्रस्तस्य व्यधत्त भङ्गं च गुरुमहास्त्रस्तस्य ॥ ७३ ॥

जिष्णुरर्जुनः आहवे संग्रामे तं गन्धर्वाधीशं न्यरुणत् । कीदृशोऽर्जुनः । अलाती उल्मुकी । 'अलातमुल्मुकम्' इत्यमरः । तथा च आदिपर्वणि—'उल्मुकं तु समुद्यम्य तेषामग्रे धनंजयः । प्रकाशार्थं ययौ तत्र रक्षार्थं च महायशाः ॥' इति । कमिव न्यरुणत् । वेलातीतं समुद्रमिव । जिष्णुः अर्जुनस्तस्य गन्धर्वाधीशस्य भङ्गं व्यधत्त । कीदृशोऽर्जुनः । क्षिप्तमहास्त्रः क्षिप्तं महास्त्रमाग्नेयं येन स तादृक् । पुनः कीदृशः । गुरुमहाः पृथुतेजाः । तस्य कीदृशस्य । त्रस्तस्य भीतस्य ॥

तस्य च तापत्यागाः श्रुत्वा विविधा वितीर्णतापत्यागाः ।
प्रययुर्विप्रापेतैर्धौम्योऽथ गुरुश्च वनभुवि प्रापे तैः ॥ ७४ ॥

ते पार्थाः तस्य गन्धर्वाधीशस्य मुखादिति शेषः । तापत्या पार्थानां पूर्वपुरुषस्य कस्यचिन्महाराज्ञी तापती नाम तस्या गाः वाचः तदीयवृत्तरूपा विविधाः नानाप्रकारा वितीर्णतापत्यागाः दत्तत्रिविधतापत्यागाः श्रुत्वा प्रययुः । तथा चादिपर्वणि—'एवमासीन्महाभागा तपती नाम पौर्विकी । तव वैवस्वती पार्थ तापत्यस्त्वं यथामतः ॥ तस्यां संजनयामास कुरुं संवरणो नृपः । तापत्यां तपतां श्रेष्ठ तापत्यस्त्वं ततोऽर्जुन ॥' इति । अथानन्तरं तैः पार्थैः विप्रापेतैः विप्रेण पुरोहितेन अपेता रहितास्तैः सद्भिर्वनभुवि धौम्यश्च गुरुः पौरोहित्येन वृत्तः सन् प्रापे लब्धः । तथा चादिपर्वणि—'तत उत्कोचकं तीर्थं गत्वा धौम्याश्रमं वृते । तं वव्रुः पाण्डवा धौम्यं पौरोहित्याय भारत । तान्धौम्यः प्रतिजग्राह सर्वान्धर्मभृतां वरान् ॥' इति ॥

ते खलु सद्विजवपुषः पाञ्चालपुरं समेत्य सद्विजवपुषः ।
गूढाकारा वासं चक्रुः संप्राप्य कुम्भकारावासम् ॥ ७५ ॥

खलु निश्चये । ते पार्थाः पाञ्चालपुरं समेत्य प्राप्य सद्विजवपुषः सह द्विजवपुषा ब्राह्मणाकारेण वर्तन्ते ये तादृशाः । ब्राह्मणवेशधारिण इत्यर्थः । गूढाकाराः सन्तः कुम्भकारावासं कुलालगृहं संप्राप्य वासं वसतिं चक्रुः । पुनः किंविशिष्टास्ते । सद्विजवपुषः सतां साधूनां विजवं विशिष्टं वेगमत्यौद्धत्यं पुष्णन्ति तादृशाः ॥

अथ सदनीकच्छत्रः संप्राप्तः सकलवनधुनीकच्छत्रः ।
संघो वसुधापानां धियं दधानः स्मृतोत्सवसुधापानाम् ॥ ७६ ॥

अथानन्तरं वसुधापानां वसुधां पान्ति रक्षन्ति वसुधापा राजानः तेषां संघः समाजः सद्यः तत्क्षणं प्राप्तः । कीदृशः । सदनीकच्छत्रः सन्ति शोभनानि अनीकेषु कटकेषु छत्राणि आतपवारणानि यस्य । पुनः कीदृशः । सकलवनधुनीकच्छत्रः सकला या वनधुन्यो वननद्यस्तासां ये कच्छा गहनप्रदेशास्तान् त्रायते इति । 'कच्छस्तु गहने देशे'

इति विश्वः। पुनः कीदृशः। धियं बुद्धिं दधानः। कीदृशीं धियम्। स्मृतोत्सवसुधापानां स्मृतमुत्सवे उत्सवदिने सुधापानममृतपानं यया सा ताम्। सुधापानेनेव संजातसंस्कारां धियमित्यर्थः। यद्वा—स्मृत उत्सवे(वः) उत्सवदिने(नं) यैस्तादृशाः ये सुधापाः सुधां पिबन्ति इति सुधापा देवास्तेषां धियं बुद्धिं दधानः प्रदास्यन्। अन्येषामित्यर्थः। उत्सवं स्मृत्वा देवा एवैते प्राप्ता इति बुद्धिं दधान इत्यर्थः॥

संभृतनरकरिपूरःस्थलस्थितश्रीकटाक्षनरकरिपूरः।
सह ललनादोहलिना यदुसंघोऽभ्यागमत्स नादो हलिना॥ ७७॥

यदुसंघो यदूनां यादवानां संघः सह हलिना बलभद्रेण अभ्यागमदागतः। किंविशिष्टः। संभृतेत्यादि। संभृतो नरकरिपोः श्रीकृष्णस्योरःस्थलस्थिता या श्रीर्लक्ष्मीस्तस्याः कटाक्षरूपो नराणां करिणां च पूरः समूहो यस्मिन् स संभृतनरकरिपूरःस्थलस्थितश्रीकटाक्षनरकरिपूरः। कटाक्षस्य श्वेतकृष्णत्वात्कटाक्षो नरकरिपूणामुपमानम्। हलिना कीदृशेन। ललनादोहलिना स्त्रीषु कौतुकिना। कौतुकार्थे दोहलशब्दो रूढः॥

वंशे पूरोर्वरया सहजश्रेण्या ससैन्यपूरोर्वरया।
दूरगिरा[1] कर्णनतः सुयोधनोऽगात्स्वयंवराकर्णनतः॥ ७८॥

सुयोधनो दुर्योधनोऽगात्। कुतः। स्वयंवराकर्णनतः स्वयंवरस्य आकर्णनं श्रवणं तस्मात्। कीदृशः सुयोधनः। सहजश्रेण्या सहजानां भ्रातॄणां या श्रेणी शतसंख्यात्वात्तस्याः तयोपलक्षितः। कीदृश्याः। पूरोर्नृपतेर्वंशे कुले वरयोत्कृष्टया। पुनः कीदृश्याः। ससैन्यपूरोर्वरया सह सैन्यपूरेण वर्तते या तादृशी उर्वरा सर्वसस्याढ्या भूर्यस्याः सा तया। कीदृशः सुयोधनः। कर्णनतः कर्णेन राधेयेन प्रणतः। कया। दूरगिरा 'जय जीव' इत्यादि दूरमुक्ता या गीः तया॥

अथ रिपुसादभ्रमदा विविशुः परमेण रंहसादभ्रमदाः।
रूपरुचा पाञ्चाल्या रङ्गभुवं रचितयन्त्रचापां चाल्या॥ ७९॥

ते पूर्वोक्ता नृपतयः पाञ्चाल्या द्रौपद्या रङ्गभुवं राधायन्त्ररङ्गस्थलीं विविशुः। कीदृशास्ते। रिपुसादभ्रमदा रिपूणां सादो दुःखो भ्रमश्च तौ ददाति तादृशाः। केन। परमेणोत्कृष्टेन रंहसा वेगेन। रूपरुचा रूपस्य या रुग् दीप्तिस्तया। अदभ्रमदा अदभ्रो घनो मदो येषां ते। कीदृशीं रङ्गभूमिम्। आल्या सख्या रचितयन्त्रचापां रचितौ यन्त्रचापौ राधायन्त्रं चापश्च यस्यां सा तादृशीम्॥

अथ पृथुरूपद्रविणा विनिर्मिता कर्मणा गुरूपद्रविणा।
या स्पृहणीया जगता साक्षाच्छक्तिः शरीरिणी याजगता॥ ८०॥

---

1. दूतगिरा' मूल०

महनीयं वरमाल्या सार्धं लब्धुं धृतस्वयंवरमाल्या।
पाञ्चाली रङ्गभुवं प्राप नयन्ती नृपावलीरङ्गभुवम्॥ ८१॥

(युग्मम्)

अथानन्तरं पाञ्चाली द्रौपदी रङ्गभुवं राधायन्त्ररङ्गस्थलीमाल्या सार्धं सख्या सार्धं प्राप। कीदृशी। पृथुरूपद्रविणा पृथुरूपमेव द्रविणं वित्तं यस्याः सा। तथा—गुरूपद्रविणा महोपद्रवकृता कर्मणा विनिर्मिता कृता। शरीरिणामिति शेषः। तद्दर्शनेनैव जगदुन्मादोपद्रवादित्यर्थः। तथा—जगता त्रिजगता या स्पृहणीया अभिलषणीया। तथा—या द्रौपदी साक्षात् अजगता अजं कामं गता साक्षाच्छरीरिणी शक्तिः। त्रिजगज्जयाय कामस्य मूर्तैव शक्तिरित्यर्थः। 'अजो हरौ हरे कामे विधौ छागे रघोः सुते' इति विश्वः। महनीयमिति। पाञ्चाली कीदृशी। धृतस्वयंवरमाल्या धृतं स्वयंवरार्थं माल्यं यया। किं कर्तुम्। महनीयमतिस्तुत्यं वरं लब्धुम्। पुनः कीदृशी। नृपावली राजावली रङ्गभुवं कामं नयन्ती प्रापयन्ती। सकलराजावलीमतीव सकामां कुर्वन्तीत्यर्थः॥

सुरभिं तरसा रङ्गं द्रुपदसुतः प्राप तरलतरसारङ्गम्।
इष्वासारोपे तामथ नृपसमितिं न्ययुङ्क्त सारोपेताम्॥ ८२॥

द्रुपदसुतो धृष्टद्युम्नः सुरभिं रम्यं रङ्गं राधायन्त्ररङ्गस्थलं प्राप। केन। तरसा वेगेन। कीदृशं रङ्गम्। तरलतरा भ्रमन्तः सारङ्गा मृगाश्चातका वा यस्मिन् स तं तरलतरसारङ्गम्। अथानन्तरं द्रुपदसुतो धृष्टद्युम्नस्तां नृपसमितिं राजसभामिष्वासारोपे चापारोपणार्थं न्ययुङ्क्त अप्रेरयत्। कीदृशीम्। सारोपेतां सारेण बलेनोपेताम्॥

तदनु बलोपेतेन प्रयुज्यमानाः शरव्यलोपे तेन।
चेलुरगुर्वामोदात्सुरभौ रङ्गे नृपाः सुगुर्वामोदात्॥ ८३॥

तदनु तदनन्तरं बलोपेतेन बलवता तेन धृष्टद्युम्नेन शरव्यलोपे लक्ष्यवेधनिमित्तं प्रयुज्यमानाः प्रेर्यमाणा नृपाः अगुर्वामोदात् अगुरुणः कालागुरुण आमोदात् सुरभौ रङ्गे सुगुर्वामोदात् सुष्ठु गुरु य आमोदो हर्षस्तस्माच्चेलुः॥

स धनुः सारवदन्तः क्षत्रियलोको विकृष्य सारवदन्तः।
सहसालसदोरङ्गः पपात संक्षोभिताखिलसदोरङ्गः॥ ८४॥

स क्षत्रियलोकोऽन्तःसारवद् बलवद् धनुर्विकृष्य सारवदन्तःसारवाः सशब्दाः टणत्कारयुक्ता दन्ता यस्य सः। तथा—अलसदोरङ्गोऽलसा दोषो भुजा अङ्गानि च यस्य सः। तथा—संक्षोभिताखिलसदोरङ्गः संक्षोभितोऽखिलः सदोरङ्गः सभारङ्गस्थलं च येन तादृशः सन् सहसा पपात। निष्क्रष्टुमशक्तत्वादित्यर्थः॥

दृष्ट्वा चापास्तरसा नरपतिपङ्क्तीर्निरस्तचापास्तरसा।
छन्नो रूपान्तरतः पार्थ उदस्थात्ततो गुरूपान्तरतः॥ ८५॥

ततोऽनन्तरं पार्थोऽर्जुनो गुरूपान्तरतो गुरूपान्ते गुरुसंनिधौ रतः। तथा—रूपान्तरतः ब्राह्मणवेषेण छन्नः सन् उदस्थाद् उत्तिष्ठति स्म । किं कृत्वा । नरपतिपङ्क्तीर्नृपावलीरपास्तरसा अपास्तस्त्यक्तो रसस्तदाकर्षणरसो याभिस्तास्तादृशीर्दृष्ट्वा। पुनः किंविशिष्टाः । तरसा वेगेन निरस्तचापास्त्यक्तधनुषः ॥

जगृहे चापमुदंसः क्षत्रियलोकं विधाय चापमुदं सः ।
धृतरभसं सद्यस्त्विशितशरैर्लक्ष्यमकृत संसद्यस्तम् ॥ ८६ ॥

स पार्थ उदंस उन्नतांसोऽपमुदमपगता मुत् हर्षो यस्य तं क्षत्रियलोकं विधाय कृत्वा चापं धनुर्जगृहे । स पार्थः सद्यस्तत्क्षणमेव धृतरभसं धृतोत्कण्ठं कृत्वा तल्लक्ष्यं समिति सभायां निशितशरैरस्तं दूरीकृतं चिह्नं वा अकृत चकार ॥

तदनु सुकेशी करिणं करिणीव मदेन मस्तके शीकरिणम् ।
मदनापादन्या सा गत्वार्जुनमेत्य मृदुलपादन्यासा ॥ ८७ ॥
अंसभुवि भ्रमरचितां मालामस्यावसज्य विभ्रमरचिताम् ।
आननमानमयन्ती तस्थौ कृष्णा रमोपमानमयन्ती ॥ ८८ ॥

(युग्मम्)

सा सुकेशी कृष्णा द्रौपदी मदेन मस्तके शिरसि शीकरिणं सजलकणं करिणं हस्तिनं करिणीव हस्तिनीव मदनापादन्या मदनमापादयति पोषयतीति मदनापादनी तया गत्वार्जुनमेत्य मृदुलपादन्यासा मृदुलाः पादन्यासा यस्याः सा तादृशी सती विभ्रमरचितां विभ्रमेण कृतां भ्रमरैः सौगन्ध्याचितां मालामस्यार्जुनस्यांसभुवि स्कन्धस्थले अवसज्य संलग्नीकृत्य आननं मुखमा ईषत् नमयन्ती तस्थौ । सा कृष्णा कीदृशी । रमोपमानं रमाया लक्ष्म्या उपमानं सादृश्यमयन्ती गच्छन्ती ॥

गृह्णति विप्रे महति द्रुपदसुतां तत्क्षणेन विप्रेमहति ।
तर्जनतत्परमवलन्नरेश्वराणां रणाय तत्परमवलम् ॥ ८९ ॥

महति विप्रे विप्ररूपधारिणि पार्थे तत्क्षणेन विप्रेमहति विगता प्रेमहतिर्यस्मिन् कर्मणि तत् । अतीव सप्रेम इत्यर्थः । द्रुपदसुतां द्रौपदीं गृह्णति सति नरेश्वराणां तत् परमबलमुत्कृष्टसैन्यं तर्जनतत्परमर्जुनतर्जने तत्परं सत् अवलत् चचाल । कस्मै । रणाय ॥

सकलजनाभिमतेन प्रवर्तमानाः सरोजनाभिमतेन ।
दृष्टद्विजवरवरणास्तस्थुर्यदवस्तथैव विजवरवरणाः ॥ ९० ॥

यदवो यादवगणा दृष्टद्विजवरवरणा दृष्टं द्विजवरस्य विप्रश्रेष्ठस्य वरणं यैस्ते, तथैवोदासीनतया तस्थुः । अत्र हेतुमाह—सकलजनस्याभिमतं तेन । यदवः कीदृशाः । प्रव-

१. 'इट कट कटी गतौ' इत्यत्र प्रश्लिष्टस्य धातोर्बोध्यम्.

र्तमानाः । केन । सरोजनाभिमतेन सरोजनाभेः श्रीकृष्णस्य मतं तेन । पुनः कीदृशाः । विजवरवरणाः जवो वेगः, रवः शब्दः, रणः संग्रामः, विगता जवरवरणा येषां ते तादृशाः ॥

तत्र च मानवहास्या वस्त्राण्यावेद्य सकलमानवहास्याः ।
विप्रवरा जाल्यं ते चक्रुः सुवृसीरुदस्य राजाल्यन्ते ॥ ९१ ॥

तत्र रङ्गस्थले ते विप्रवरा युधिष्ठिराद्या वस्त्राणि कौपीनाजिनकारकादीनि आवेद्य त्यक्त्वा सुवृसीः स्वासनानि च त्यक्त्वा सकलमानवहास्याः सर्वमानवैर्हसनीयाः सन्तो राजाल्यन्ते राजावल्या अन्ते जाल्यं घनमेकत्र समुदायं चक्रुः । 'जल धान्ये' धातुः । पुनश्च कीदृशाः । मानवहास्याः मानवहा मानधारिणी आस्या स्थितिर्येषां ते । यद्वा मानवहमास्यं मुखं येषां ते तादृशाः ॥

तांस्तु हसन्नाहवतः पार्थो विप्रान्निवार्य संनाहवतः ।
अतिकुपितानापततस्तमेव चापं प्रगृह्य तानाप ततः ॥ ९२ ॥

ततोऽनन्तरं पार्थोऽर्जुनः । तु पक्षान्तरे । तान् विप्रान् संनाहवतः युद्धार्थे संनाहयुक्तान् उद्युक्तान् वा आपततोऽतिकुपितान् हसन् हसितवदनः आहवतो युद्धात् निवार्य तमेव चापं यत्सज्जीकृतं तदादाय तान् राजसंघान् आप प्राप ॥

स खलु महेष्वासाद्यस्फीतमहास्त्रेषु रणमहेष्वासाद्य ।
राज्ञः समुदग्रजवानद्रावयदर्जुनोऽथ समुदग्रजवान् ॥ ९३ ॥

अथानन्तरम् । खलु निश्चये । सोऽर्जुनो महेष्वासाद्यस्फीतमहास्त्रेषु महेष्वासाः महाधनूंषि तदाद्यानि स्फीतानि महास्त्राणि येषु ते तादृशेषु रणमहेषु रणोत्सवेषु राज्ञो नृपान् आसाद्य व्यद्रावयत् विद्रुतांश्चकार । कीदृशान् । समुदग्रजवान् सम्यगुदग्रो जवो वेगो येषां तादृशान् । अर्जुनः कीदृशः । समुत् सहर्षः । पुनः कीदृशः । अग्रजवान् भीमसेनयुक्तः ॥

तदनु समादायातः पाञ्चालीं पाण्डवः क्रमादायातः ।
स तदेव कुलालस्य स्थानं क्रियमाणशात्रवकुलालस्य ॥ ९४ ॥

स पाण्डवोऽर्जुनस्तदनु अतोऽनन्तरं पाञ्चालीं द्रौपदीं समादाय क्रमात् क्रमेण तदेव पूर्वोद्दिष्टं कुलालस्य कुम्भकारस्य स्थानमायातः । पाण्डवः कीदृशः । क्रियमाणशात्रवकुलालस्यः क्रियमाणं शात्रवकुलस्य शत्रूणां कुलस्य आलस्यमुदासीनत्वं निचेष्टत्वं वा येन सं तादृशः । अत्रापि यमके विसर्जनीयाभावे न दोषः ॥

वसतौ कौलाल्यां ते कौ लाल्यां तेजसा वधूमादाय ।
ऊषुः स्वच्छादनतः स्वच्छादनतः शरीरयात्रां दधतः ॥ ९५ ॥

तेजसोपलक्षितास्ते पार्थाः कौ भूमौ लाल्यां लालनीयां वधूं द्रौपदीमादाय कौलाल्यां

कुलालसंबन्धिन्यां वसतौ गृहे ऊषुः स्थितिं चक्रुः । कीदृशाः । स्वच्छादनतः स्वं च तत् छादनं गोपनं तस्मात् स्वच्छान्निर्मलात् अनतः प्राणान् शरीरयात्रां शरीरस्थितिं दधतो धारयन्तः ॥

तदनु द्रुपदेन पुरं गमितैः सविचारमुदारमुदा गमितैः ।
नरदेवसुतैरुदवाहि वधूर्विधिनैव च सा वचसादिमुनेः ॥ ९६ ॥

तदनु तदनन्तरं द्रुपदेन राज्ञा उदारमुदा उदारा मुत् हर्षो यस्य तेन नृपेण पुरं स्वनगरं गमितैर्गमनाय प्रेरितैः । पुनश्च सविचारं गमितैर्ज्ञातैस्तैर्नरदेवसुतै राजपुत्रैर्युधिष्ठिरादिभिः सा वधूर्द्रौपदी विधिनैव आदिमुनेः श्रीव्यासस्य वचसा 'आज्ञा गुरूणां ह्यविलङ्घनीया' इत्यादिना स्वमातुः कुन्त्या वचनमेव परिपालनीयमित्यतो विधिनैव उदवाहि उदूढा ॥

रराज सा च पाण्डवैरराजसास्तथैव ते ।
अनेन सा जनेन पूरनेनसा दधौ श्रियम् ॥ ९७ ॥

सा द्रौपदी पाण्डवैर्भर्तृभी रराज । तथैव पञ्चानामेकपत्नीकत्वेऽपि तेऽराजसा न राजसा रजोगुणयुक्ता लोभमोहयुक्ता आसन् । तद्रहिता आसन्नित्यर्थः । सा पूर्नगरी अनेन जनेन पाण्डुसुतोद्दिष्टेन श्रियं दधौ । कीदृशेन । अनेनसा अविद्यमानमेनः पापं यस्य सोऽनेनास्तेन ॥

इति श्रीमहाकविवासुदेवविरचिते युधिष्ठिरविजये महाकाव्ये श्रीकश्मीरदेशवास्तव्यमहामाहेश्वरविद्वद्वरराजानकशंकरकण्ठात्मजराजानकरत्नकण्ठविरचितायां शिष्यहिताभिधानायां टीकायां च द्रौपदीस्वयंवरवर्णनं नाम प्रथम आश्वासः ।

---

द्वितीय आश्वासः ।

सर्वं जगदाप रमां मुक्तिं भवबन्धनात्तथा परमाम् ।
यत्कृपयैतं महितं त्रिपुरारातिं स्तुवीमहि तम् ॥

अथ पाण्डुसुतानां द्रुपदनगरप्रवेशानन्तरं वृत्तं वर्णयन्नाह—

अथ गिरिवप्राकारं द्रुपदपुरस्य क्षणादिव प्राकारम् ।
कुरवः क्रुद्धा मानस्पर्धा बद्ध्वा न्यरौत्सुरुद्धामानः ॥ १ ॥

अथानन्तरं कुरवो दुर्योधनाद्या गिरिवप्राकारं गिरिवप्रवदाकारो यस्य तं द्रुपदपुरस्य प्राकारं सालं क्षणादिव न्यरौत्सुः । किं कृत्वा । मानस्पर्धां मानेन स्पर्धां तां बद्ध्वा । एतैरस्मत्समक्षं वधूरत्नं बलान्नीतमिति । अतएव क्रुद्धाः सक्रोधाः । पुनः कीदृशाः । उद्धामान उद्भटं धाम येषां ते तादृशाः ॥

---

१. 'स्तया च ते' मूल०.

दर्पमसहमानेन द्विषतां पार्थाः प्रसह्य सह मानेन ।
नगरे रुद्धे तिलतां नेतुमरिचमूं निरीयुरुद्धेतिलताम् ॥ २ ॥

पार्था युधिष्ठिराद्या अपि नगरे रुद्धे सति । अर्थात् द्विषद्भिः । अतएव द्विषतां शत्रूणां दर्पं गर्वमसहमानेन मानेन सह प्रसह्य अरिचमूं शत्रुसेनां तिलता तिलस्य भावस्तिलता तां नेतुम् । चूर्णीकर्तुमित्यर्थः । निरीयुर्निर्गताः । कीदृशीमरिचमूम् । उद्धेतिलतामुत्क्षिप्ता हेतयः शस्त्राण्येव लता यया सा ताम् ॥

तैः कृतसेनानाशाः कुरवो ययुरेव साध्वसेनानाशाः ।
शत्रुषु समुदस्तेषु न्यवसन्पार्थाः पुरेऽत्र समुदस्तेषु ॥ ३ ॥

तैः पार्थैः कृतसेनानाशा रचितचमूनाशाः कुरवः साध्वसेन भयेन अनाशा आशारहिता ययुरेव । पार्थाः पुनस्तेषु शत्रुषु समुदस्तेषु दूरीकृतेषु अत्र पुरे द्रुपदपुरे न्यवसन् ऊषुः । कीदृशाः । समुदः सहर्षाः ॥

वृत्तं पुत्राणां तं पार्थानां चोदयं रिपुत्राणान्तम् ।
विदुरगिरा जातान्तस्तापः शुश्राव तदनु राजा तान्तः ॥ ४ ॥

राजा धृतराष्ट्रस्तं प्रागतीतं पुत्राणां दुर्योधनादीनां वृत्तं वृत्तान्तं तथा पार्थानां युधिष्ठिरादीनां च उदयं रिपुत्राणान्तं रिपूणां त्राणमभयदानं पार्थैः कृतमन्ते यस्य स तादृशं विदुरगिरा विदुरस्य गीर्वाक् तया शुश्राव । कीदृशः । जातान्तस्तापो जातोऽन्तस्तापो यस्य सः । तदनु तदनन्तरं स राजा तान्तोऽतीव खेदसहितोऽभूत् । 'तमु ग्लानौ' धातुः ॥

व्यसनं भावि दुरन्तं विचिन्त्य च प्राहिणोद्विभा विदुरं तम् ।
कुरुभर्ता पार्थानामानयनार्थं गुरुप्रतापार्थानाम् ॥ ५ ॥

कुरुभर्ता धृतराष्ट्रो भावि अग्रे भावि दुरन्तं दुरुदर्कं व्यसनं कष्टं विचिन्त्य तं विदुरं पार्थानां द्रुपदपुरस्थानामानयनाय प्राहिणोत् विसर्जयामास । कीदृशः । विभा विशेषेण भातीति विभाः । भाशब्दः क्विबन्तः । पार्थानां कीदृशानाम् । गुरुप्रतापार्थानाम् । गुरुर्यः प्रतापोऽरिभयजननी वार्ता स एवार्थः प्रयोजनं येषां तदर्थिनामित्यर्थः ॥

स च मतिमाननयत्तान्नागपुरं ज्ञातिवर्ग[1]मानयत्तान् ।
व्रजतो बन्धुरसेनः श्यालोऽमूनन्वियाय बन्धुरसेन ॥ ६ ॥

स च धृतराष्ट्रः मतिमान् बुद्धिमान् तान् पार्थान् नागपुरं हस्तिनापुरमनयत् । कीदृशान् तान् । ज्ञातिमाननयत्तान् ज्ञातीनां स्वजनानां यन्मानने तस्मिन् यत्ताः सयत्नास्तान् । अमूंश्च पार्थान् व्रजतो गच्छतः श्यालो धृष्टद्युम्नोऽन्वियाय अनुगतः । केन । बन्धुरसेन बन्धूनां रसस्तेन । कीदृशः श्यालः । बन्धुरसेनो बन्धुरा रम्या सेना यस्य सः ॥

१. वर्गपदं काश्मीरिकसटीकपुस्तकयोर्नोपलभ्यते.

तर्पितमानवराशी रत्नसमूहेन वाच्यमानवराशीः ।
सति निनदे वाद्यानां सुहृदां वाक्येन वासुदेवाद्यानाम् ॥ ७ ॥
स्वभुजसमुद्धृतराष्ट्रः प्रदाय राज्यार्धमपि समुद्धृतराष्ट्रः ।
सह सपदि व्यासाद्यैर्धर्मजमभिषिक्तमकृत दिव्यासाद्यैः ॥ ८ ॥

धृतराष्ट्रः कुरुपतिः रत्नसमूहेन 'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' इति कृत्वा रत्नानां समूहस्तेन तर्पितः संतुष्टीकृतो मानवानां राशिः समूहो येन सः । तथा—वाच्यमानवराशीः वाच्यमाना वरा उत्कृष्टा आशिषो यस्य सः । वासुदेवाद्यानां श्रीकृष्णादीनां सुहृदां वाक्येन धर्मजं युधिष्ठिरमभिषिक्तमकृत । कस्मिन्सति । वाद्यानां तूर्याणां निनदे शब्दे सति । किं कृत्वा । राज्यार्धमपि प्रदाय । कीदृशो धृतराष्ट्रः । स्वभुजसमुद्धृतराष्ट्रः स्वभुजाभ्यां समुद्धृतानि वशीकृतानि राष्ट्राणि विषया येन । पुनः कीदृशः । समुत् सह मुदा वर्तते यः सः । कैः सह धर्मजमभिषेचयत् । व्यासाद्यैः श्रीव्यासमुनिप्रभृतिभिः सह । कीदृशैः । दिव्यासाद्यैः दिवि भवा दिव्याः स्वर्लोकवासिनः तैरासाद्या आश्रयणीयाः । सेव्या इत्यर्थः । तादृशैः ॥

युक्तः स त्वर्धेन क्षोण्याश्चित्तेन चैव सत्त्वर्द्धेन ।
हतदुःसहरिपुरोगः शक्रप्रस्थं विवेश स हरिपुरोगः ॥ ९ ॥

[स] युधिष्ठिरः तु पक्षान्तरे क्षोण्याः भूमेरर्धेन राज्यार्धेन युक्तः । तथा—सत्त्वर्द्धेन सत्त्वेन ऋद्धं संपन्नं सत्त्वर्द्धं तादृशेन चित्तेनोपलक्षितः । हतदुःसहरिपुरोगो हतो दुःसहरिपुरूपो रोगो येन तादृशः शक्रप्रस्थमिन्द्रप्रस्थं विवेश । कीदृशः सः । हरिपुरोगः । हरिः कृष्णः पुरोगो यस्य । अत्र 'सत्वर्धेन' इति तकार [धकार] द्वयाभावे कथमिति चेत्, उच्यते—हलः परस्यैकस्य द्वयोर्वा विशेषाभावेऽस्य स्मृतेः । यथा 'शुक्ले शुक्लेशनाशं विशत' इत्यादौ शुक्लेशुक्ले इति यमके सति शुक्लगुणयुक्ते शुचः क्लेशस्य च नाशं संपद्यते इत्यर्थः । तदुक्तम्—'यमकश्लेषचित्रेषु दन्त्यौष्ठ्यवबकारयोः । न भेदो नन(ण)योश्चैव न नकारमकारयोः ॥ हलः परस्य चैकस्य व्यञ्जनस्य द्वयोरपि । न विशेषो विसर्गस्य भावेश्च सदसत्त्वयोः ॥' इति ॥

हत्वा भूमावसतः पुरं तदुद्धूतभूतिभूमावसतः ।
ता...षिरापादरतस्तदुद्धुतेर्धातृसूनुरापादरतः ॥ १० ॥

धातृसूनुर्धातुर्ब्रह्मणः सूनुः ऋषिर्नारदो मुनिस्तान् पार्थान् आप । समीपमागादित्यर्थः । कुतः । आदरतः । कीदृशः । आपादरतः आपादनमापादः प्रापणं तत्र रतः । कस्याः । तदुद्धुतेः तेषां यानुद्धुतिरुच्चैर्भूतिः श्रीस्तस्याः । कीदृशांस्तान् । पुरं हास्तिनपुरमावसत आश्रयमाणान् । किंविशिष्टं पुरम् । उद्भूतभूतिभूम उद्भूत उत्पन्नो भूतिभूमा लक्ष्मीबाहुल्यं यस्य तत् । किं कृत्वा । असतः खलान्हत्वा । कस्याम् । भूमौ । तथा च

१. 'कृत' इति मूलपुस्तके.

आदिपर्वणि—'अथ तेषूपविष्टेषु सर्वेष्वेव महात्मसु। नारदस्त्वथ देवर्षिराजगाम यदृच्छया॥' इति॥

स च वधमत्यायततः स्नेहात्तेष्ववददैकमत्याय ततः।
सुरललनामोदितयोर्भ्रात्रोः सुन्दोपसुन्दनामोदितयोः॥ ११॥

स च नारदो मुनिस्तेषु पाण्डवेषु ऐकमत्याय एकस्यामेव पत्न्यां द्रौपद्यां यथा न भेदः स्यात्तदर्थमत्यायततोऽतिशयेन आयताद् दीर्घात् स्नेहात् सुरललनायां तिलोत्तमाख्यायां मोदितयोरेकान्तरसिकयोः सुन्दोपसुन्दनाम्ना उदितयोः ख्यातयोरसुरयोः वधस्तद्वधोपाख्यानमवदत्। तथा च आदिपर्वणि—'पाञ्चाली भवतामेका धर्मपत्नी यशस्विनी। यथा वो नात्र भेदः स्यात्तथा नीतिर्विधीयताम्॥ सुन्दोपसुन्दावसुरौ भ्रातरौ सहितावुभौ। आस्तामवध्यावन्योन्यं त्रिषु लोकेषु विश्रुतौ॥ एकराज्यावेकगृहावेकशय्यासनस्थितौ। तिलोत्तमायास्तौ हेतोरन्योन्यमभिजघ्नतुः॥ रक्षन्तां सौहृदं तस्मादन्योन्यप्रविभागकम्। यथा वो न प्रभेदः स्यात्तत्कुरुध्वं महारथाः॥' इति॥

ते मतमादधुरस्य ज्ञात्वा संवादमप्रमादधुरस्य।
द्रुपदसुतां प्रत्यग्रे तस्यैव वयस्यवस्थितां प्रत्यग्रे॥ १२॥

ते पार्थास्तस्यैव नारदमुनेरग्रे प्रत्यग्रे नवे वयस्यवस्थितां द्रुपदसुतां द्रौपदीं प्रति संवादं सुन्दोपसुन्दवधाख्यानपर्यायं ज्ञात्वा अस्य नारदमुनेर्मतमादधुरग्रहि(ही)षुः। कीदृशस्यास्य। अप्रमादधुरस्य अप्रमादे अग्रत्वं यस्य सोऽप्रमादधुरस्तस्य। अप् समासान्तः॥

किमिति मुनेर्मतमादधुः किमूचुरित्याह—

व्यत्यसनेन समानां पत्नीमस्माकमभिजनेन समानाम्।
अन्तिकमानयमाना वत्स्यामो मुनिवचांसि मानयमानाः॥ १३॥

व्यत्यसनेन भेदेनाप्यस्माकं समानां सह मानेन विद्यते या सा ताम्। अस्माकमभिजनेन कुलेन समानां सदृशीं पत्नीं द्रौपदीमन्तिकं समीपमानयमानाः वयं वत्स्यामः। कीदृशाः। मुनेः श्रीनारदमुनेर्वचांसि मानयमानाः पूजयन्तः॥

पुनस्ते नारदमुनिं किमूचुरित्याह—

यस्त्ववनावासन्नस्तत्सेव्यायां भवेद्वनावासं नः।
स शरदमेकां नुतां व्रतिनामवलम्ब्य वृत्तिमेकान्ततनुताम्॥ १४॥

यो नोऽस्माकं मध्ये तत्सेव्यायां द्रौपदीसेव्यायामवनौ भूमौ अर्थात् शय्यायामेकेन जुष्टायामासन्नो भवेत्। अर्थात् स्वात्मदर्शको भवेदित्यर्थः। स एकां शरदं वर्षमेकमेकान्तेन निश्चयेन नुतां श्लाघ्यां व्रतिनां वृत्तिमवलम्ब्य वनावासं तनुताम्। एतदाख्यानं च आदिपर्वण्यूह्यम्॥

इति कृतसमयो निजया देव्या नृपतिर्दधद्रसमयोनिजया ।
नितरामरमत नुतया कान्त्या क्रमरम्यभावमरमतनुतया ॥ १५ ॥

नृपतिर्युधिष्ठिर इति अनेनप्रकारेण [अरं द्रुतं] कृतः समयः संविद् येन स कान्त्या दीप्त्या नुतया स्तुतया अयोनिजया कलशोद्भवत्वात् निजया देव्या द्रौपद्या नितरामरमत। कथम्। क्रमरम्यभावं क्रमेण रम्यो भावः स्वाभिप्रायो यस्मिन्कर्मणि तथा । कया । अतनुतया । गौरवेणेत्यर्थः । अतनोर्भावोऽतनुता तया ॥

तत्र च रिपुरोपान्ते रममाणे भूमिभर्तरि पुरोपान्ते ।
सहसा रोदरवस्तु श्रुतः समुद्धत····पुरोदरवस्तुः ॥ १६ ॥

तत्र तस्मिन्भूमिभर्तरि युधिष्ठिरे रिपुरोपान्ते रिपुरोपाणां शत्रुशराणामन्तो यत्र तादृशे । सदैव रिपुशरास्पृश्ये इत्यर्थः । रममाणे सति । पुरोपान्ते नगरनिकटे । तु पक्षान्तरे । सहसा तत्क्षणमेव रोदरवो रोदनं रोद आक्रन्दः तस्य रवः शब्दः श्रुतः । युधिष्ठिरादिभिरिति शेषः । कीदृशो रोदरवः । समुद्धत···पुरोदरवस्तुः समुद्धतानि प्रतिशब्देन निनादोद्धतानि कृतानि पुरोदरवस्तूनि नगरमध्ये वस्तूनि घटादीनि येन स तथा । अत्र रवशब्देन पुंलिङ्गेन विशेष्येण सह संबन्धाद्विशेषणस्यापि वस्तुशब्दस्य पुंस्त्वम् ॥

आद्रवतामेया गा हरन्ति चौरा इमे हता मे यागाः ।
सासिगदासंनाहा द्रुततरमनुयात यावदासन्ना हा ॥ १७ ॥
इति सहसा रोदं तं द्विजस्य पार्थोऽशृणोदसारोदन्तम् ।
दध्यौ चापाद्येषु क्षितिपगृहादायुधेषु चापाद्येषु ॥ १८ ॥

इत्यनेन प्रकारेण सहसा तत्क्षणमेव असारोदन्तम् असारो न साररूप उदन्तो वार्ता यस्य स तादृशं तं रोदमाक्रन्दं ब्राह्मणस्य पार्थोऽर्जुनोऽश्रृणोत् । स च पार्थः क्षितिपगृहात् राजगृहात् आपाद्येषु आनेयेषु चापाद्येषु धनुरादिषु हेतौ दध्यौ च । धनुरादिनिमित्तं दध्यौ चेत्यर्थः । इति किमित्याह—आद्रवतेति। भो युधिष्ठिराद्याः, आद्रवत धावत। हा कष्टे । इमे चौराः स्तेना मे मम अमेया बह्वीर्गा धेनूर्हरन्ति, तद्वशात् मे मम यागाः क्रतवो हता नष्टाः । भोः पार्थाः, यूयं सासिगदासंनाहाः सह असिना गदया संनाहेन कवचेन ये तादृशा द्रुततरं शीघ्रतरमनुयात अनुगच्छत चौरान्, यावत्ते चौरा आसन्ना निकटस्थाः ॥

न हि संवादत्यागः सज्जनरक्षासु मार्दवादत्यागः ।
तन्मम भावि प्रायः श्रेयः प्रतिपाद्य गाः शुभा विप्राय ॥ १९ ॥
इति बलवानुग्राहिप्रतिमं जग्राह मानवानुग्राहि ।
अरिपरिभवनोदरतः पार्थश्चापं नरेन्द्रभवनोदरतः ॥ २० ॥

पार्थोऽर्जुन इत्युक्त्वा मानवानुग्राहि मानवान् अनुगृह्णातीति मानवानुग्राहि उग्राहिप्रतिमं क्रूरसर्पसदृशं चापं धनुर्जग्राह गृहीतवान्। कुतः। नरेन्द्रभवनोदरतो राजगृहमध्यात्। कीदृशः पार्थः। बलवान्। पुनः कीदृशः। अरिपरिभवनोदरतो अरिभ्यो यः परिभवस्तिरस्क्रिया तस्य नोदे दूरीकरणे रतः। इति किमित्युक्त्वा (त्याह)—न हीति। संवादो यो ब्राह्मणेन स्वदैन्यसंवादः कृतस्तस्य त्यागो नेत्यर्थः। तथा—सज्जनानां साधुदीनानाथानां रक्षासु मार्दवात् शैथिल्याद् अत्यागो अतिशयेन आगोऽपराधः। 'आगोऽपराधो मन्तुश्च' इत्यमरः। तत् तस्मात्कारणात् शुभाः शुभंकरीर्गा धेनूर्विप्राय ब्राह्मणाय प्रतिपाद्य चौरेभ्य आनीय दत्त्वा प्रायो निश्चितं मम श्रेयः शुभं भावि॥

स प्रसभं गुरवे गां दत्त्वा हत्वा खलानभङ्गुरवेगान्।
दारभुवा समयेन प्रययौ तीर्थानि विप्रवासमयेन॥ २१॥

सोऽर्जुनो गुरवे प्रागुद्दिष्टाय ब्राह्मणाय गां चौरैर्नीतां दत्त्वा। जातावेकवचनम्। तथा—अभङ्गुरवेगान् न भङ्गुरो नश्वरो वेगो येषां ते तादृशान् खलान् चौरान् हत्वा विप्रवासमयेन विशिष्टप्रवासमयेन 'स शरदमेकां तनुताम्' इत्यादिना पूर्वोद्दिष्टेन दारभुवा दारात् (दारेभ्यः) पत्नीतो भूर्जन्म यस्य स तादृशेन ऐकमत्यसंज्ञकेन समयेन तीर्थानि प्रययौ। एतच्च आदिपर्वणि अर्जुनतीर्थयात्रायां सर्वमूह्यम्॥

तं श्रितगङ्गाद्वारा नुदन्तमागांसि सम्यगङ्गाद्वारा।
नागसुता पातालं पार्थमनैषीदतर्कितापातालम्॥ २२॥

नागस्य कौरव्याख्यस्य सुता उलूपी नाम अलमत्यर्थमतर्कितापाता अतर्कितोऽनिर्णीत आपातो यस्याः सा तादृशी तस्या आकाशयानत्वात् तं पार्थमर्जुनं पातालमनैषीत्। कीदृशी उलूपी। श्रितगङ्गाद्वारा श्रितं गङ्गाद्वारं यया सा। कीदृशं पार्थम्। वारा जलेन सम्यक् कृत्वा अङ्गात् निजाङ्गात् आगांसि पातकरूपाणि नुदन्तम्। एतच्च तत्रैवोह्यम्॥

स च रेमे कामनया बीभत्सुस्तत्र रात्रिमेकामनया।
अहिसुतयेरावन्तं सुतमाप च वंशवृद्धयेऽरावन्तम्॥ २३॥

स च बीभत्सुरर्जुनस्तत्र पाताले कामनया स्वेच्छया अनया अहिसुतया नागकन्यया रेमे। कियन्तं कालम्। एकां रात्रिम्। 'कालभावाध्वदेशेभ्यो द्वितीया'। च पुनः वंशवृद्धये कुलस्य वृद्धये इरावन्तमिरावन्तनामैकं सुतमाप लब्धवान्। कीदृशम्। अरौ शत्रुविषये अन्तं नाशरूपम्॥

स हि सकलक्ष्माचक्रे प्रदक्षिणमृक्षवीरलक्ष्मा चक्रे।
पश्यन्नलिनीरजिनीराश्रमकुल्या नदीश्च नलिनीरजिनी॥ २४॥

हि निश्चये ऋक्षवीरलक्ष्मा ऋक्षवीरो हनुमान् लक्ष्म ध्वजो यस्य सोऽर्जुनः सकलक्ष्माचक्रे सर्वस्मिन्भूतले प्रदक्षिणं चक्रे कृतवान्। किं कुर्वन् अर्जुनः। आश्रमकुल्याः

आश्रमाल्पकृत्रिमा नदीः पश्यन् । कीदृशीः । अलिनीरजिनीः अलियुक्तानि भ्रमरयुक्तानि सौरभ्यात् नीरजानि सन्त्यासु ताः । पुनश्च किं कुर्वन् । नदीश्च महानदीश्च पश्यन् । कीदृशीः । नलिनीः । लडयोरैक्यात् नडस्तृणं विद्यते यासां ता नडिनीः । स कीदृशः । अजिनी अजिनं मृगाजिनमस्यास्तीति अजिनी सव्रतत्वात् ॥

स नगरमरिचक्रान्तं पाण्ड्यपतेः क्रमुकखण्डमरिचक्रान्तम् ।
प्राप्य विचित्राङ्गदया तत्सुतया रतिमवाप चित्राङ्गदया ॥२५॥

सोऽर्जुनः पाण्ड्यपतेः पाण्ड्यदेशाधिपस्य नगरं मणिपुरं नाम प्राप्य तत्सुतया चित्राङ्गदया चित्राङ्गदानाम्न्या रतिं सुखमवाप । कीदृश्या । विचित्राङ्गदया विचित्राणि अङ्गदानि केयूराणि यस्याः सा तया । नगरं कीदृशम् । अरिचक्रान्तम् अरिचक्रस्य शत्रुसमूहस्यान्तो नाशो यत्र तत् । पुनश्च कीदृशम् । क्रमुकखण्डमरिचक्रान्तं क्रमुकखण्डाः पूगखण्डाः मरिचानि च तैः क्रान्तम् ॥

दृष्टमहासह्यागस्तीर्थे प्रविशोध्य शत्रुहा स ह्यागः ।
विप्रसभासन्नामप्रवणस्तीर्थं गतः प्रभासं नाम ॥ २६ ॥

हि निश्चये सोऽर्जुनो दृष्टमहासह्यागो दृष्टो महान् सह्यागः सह्यपर्वतो येन स तादृक् । तथा—शत्रुहा शत्रुघाती आगः पातकं तीर्थे प्रविशोध्य शोधयित्वा प्रभासं नाम तीर्थं गतः । कीदृशः । विप्रसभासन्नामप्रवणः विप्रसभायां द्विजपङ्क्तौ सन्नामनि शुभे नामनि कीर्त्याख्ये प्रवणो लग्नः ॥

तत्र सुभद्रां गदतः श्रुत्वा सर्वाङ्गनासु भद्रां गदतः ।
प्राप वशं कामस्य व्यधित पुरो दुर्गतावशङ्कामस्य ॥ २७ ॥

तत्र च प्रभासाख्ये तीर्थे सर्वाङ्गनासु मध्ये भद्रां कल्याणीं सुभद्रां नाम श्रीकृष्णभगिनीं गदतो व्याख्यातुः गदतो गदान्नामयादवात् श्रुत्वा कामस्य वशं प्राप । स च गदोऽस्यार्जुनस्य पुरोऽग्रे दुर्गतौ संकटे सुभद्राहरणादुत्पन्ने अस्यार्जुनस्य अशङ्कां व्यधित । सुखेन त्वया हरणीयेत्यर्थः ॥

भूत्वा कन्दर्पयतिः स्तनति घनौघे च कामुकं दर्पयति ।
श्यामलमस्मरदलितः स हि वैकुण्ठं कुरूत्तमः स्मरदलितः ॥ २८ ॥

स कुरूत्तमोऽर्जुनः कन्दर्पयतिः कन्दर्पे कामे यतिः सव्रतो भूत्वा कामुकं जनं दर्पयति सकामोद्रेकं कुर्वति घनौघे मेघसमूहे स्तनति शब्दं कुर्वति सति स्मरेण दलितो व्यथितः सन् अलितो भ्रमरात् श्यामलं वैकुण्ठं श्रीकृष्णमस्मरत् । प्राग्जन्मन्यनुभूतं वैकुण्ठमस्मरत् । 'नरनारायणावृषी' इत्याख्यानात् ॥

सोऽपि सहासमुपायादमुष्य संतुष्य कंसहा समुपायात् ।
तदनु समस्तोभाभ्यां निजचेष्टा निजगदे समस्तोभाभ्याम् ॥ २९ ॥

सोऽपि कंसहा श्रीकृष्णोऽमुष्यार्जुनस्योपायात् सहासं हासेन संतुष्य समुपायात् आगात्। सहासमिति। अत्र श्रीकृष्णाभिमतमभूदित्यर्थः। तदनु तदनन्तरम् उभाभ्यां श्रीकृष्णार्जुनाभ्यां समस्ता निजचेष्टा स्वचेष्टा प्राग्जन्मनि नरनारायणसत्क(णात्मक)चेष्टा वर्तमाने च समस्ता चेष्टा इतिकर्तव्यतां सुभद्राहरणोपाययुक्तां निजगदे कथिता। किंविशिष्टाभ्यां ताभ्याम्। समस्तोभाभ्यां समः स्तोभ उद्रेको ययोस्तौ तादृशाभ्याम्॥

नरनारायणदेहौ पुराणपुरुषौ नृणां परायणदेहौ।
रैवतकं पादाभ्यामपुनीतामवनतानुकम्पादाभ्याम्॥ ३०॥

तौ पुराणपुरुषौ श्रीकृष्णार्जुनौ नरनारायणदेहौ तथा नृणां पुरुषाणां परायणं च परं च तत् अयनं गतिः परायणं मुक्तिं ददाति तादृशी ईहा चेष्टा ययोस्तौ तादृशौ रैवतकं नाम गिरिं पादाभ्यामपुनीतां पवित्रीचक्रतुः। तत्र गतावित्यर्थः। कीदृशाभ्यां पादाभ्याम्। अवनतानुकम्पादाभ्याम् अवनतानां प्रणतानां भक्तानामनुकम्पां कृपां ददतः (दत्तः) अवनतानुकम्पादौ ताभ्याम्॥

अथ[1] बलभद्रमुखानां यदुवृषभाणां मतेन भद्रमुखानाम्।
यादवकन्यायोगाद्धन्यं भवनं स भिक्षुकन्यायोऽगात्॥ ३१॥

अथानन्तरं सोऽर्जुनो भद्रमुखानां भद्रं शुभं मुखं येषां ते तादृशानाम् बलभद्रमुखानां बलभद्रप्रभृतीनां यदुवृषभाणां यदुपुङ्गवानां मतेन यादवकन्यायाः सुभद्राभिधानाया योगात् धन्यं प्रशस्यं भवनं गृहमगात्। कीदृशः। भिक्षुकन्यायो भिक्षुकवेशः॥

यदुषु सबलदेवेषु व्यग्रेष्वन्यत्र तुलितबलदेवेषु।
मुदितमना भोजगृहे····पाणिमुपेतपद्मनाभो जगृहे॥ ३२॥

सोऽर्जुनः तुलितबलदेवेषु तुलितबला देवा येषां ते तादृशेषु। देवतुल्यबलेष्वित्यर्थः। सबलदेवेषु सबलभद्रेषु यदुषु व्यग्रेष्वाकस्मिकसंपातादन्यत्र व्यग्रेषु व्याकुलेषु सत्सु मुदितमनाः सन् भोजगृहे यदुगृहे पाणिं जगृहे। अर्थात्सुभद्रायाः। पुनः कीदृशः सन्। उपेतपद्मनाभ उपेतो युक्तः, संमतेन मिलितो वा, पद्मनाभः श्रीकृष्णो यस्य॥

अगमच्चारूढेन प्रियया पार्थस्तयैव चारूढेन।
तत्पुरमुद्यद्द्वेषः प्रक्षोभ्य रथेन तूर्णमुद्यद्द्वेषः॥ ३३॥

पार्थोऽर्जुनस्तयैव प्रियया सुभद्रयारूढेनोत्पन्नेन चारूढेन चारु यद्वहनमूढः। विवाह इति यावत्। तेन हेतुना त[illegible]रं यदुनगरं रथेन तूर्णमगमत् जगाम। किं कृत्वा। तत्पुरं प्रक्षोभ्य। कीदृशः। उद्यन् द्वेषो यस्य सः। प्रत्यभियास्यतां यदूनामुपरि कृतद्वेष इ.

१. 'भूत्वा परमो हंसः कुर्वाणश्चेष्टितेन परमोहं सः।
अध्यवसद्द्विजयोऽगं रैवतकं हरिमतेन सद्द्विजयोगम्॥'

इत्ययं श्लोको मूलपुस्तकेऽत्र प्रकरणेऽधिकः समुपलभ्यते.

त्यर्थः । अत्रापि व्यञ्जनद्वयाभावे यमकादावदोषः । 'परात्परस्य चैकस्य व्यञ्जनस्य द्वयोरपि' इति प्रागुक्तम् । पुनः कीदृशः । उद्यन् वेपस्तदुचितो यस्य स उद्यद्वेपः ॥

तदनु मदभ्रमवन्तश्चेलुः कलहाय वलमदभ्रमवन्तः ।
ऋद्धिमशास्यां भोजा बिभ्राणा रोषकर्कशास्याम्भोजाः ॥ ३४ ॥

भोजा यादवा हलधरप्रभृतयस्तदनु तदनन्तरं मदेन दर्पेण भ्रमवन्तो भ्रमयुक्ता अदभ्रं घनं वलं कटकमवन्तो रक्षन्तः । तथा ऋद्धिमशास्याम् ऋद्धिणा ऋद्धत्वेन शास्यां प्रशस्यां शासनं शास्यतां बिभ्राणाः । तथा रोषकर्कशास्याम्भोजाः रोषेण वलात्कन्याहरणोत्पन्नेन कर्कशानि आस्याम्भोजानि मुखकमलानि येषां तादृशाः सन्तः कलहाय युद्धाय चेलुः ॥

न्यरुणत्कोपायस्तान्यदुवीराञ्शौरिरकटुकोपायस्तान् ।
वचनैस्तरसा मधुरैस्तं चानुजगाम चारुतरसामधुरैः ॥ ३५ ॥

शौरिः श्रीकृष्णस्तान् यदुवीरान् यदून् तरसा वलेन मधुरैर्वचनैर्न्यरुणत् । कीदृशान् तान् । कोपायस्तान् कोपेन आयस्ताः खिन्नास्तान् । शौरिः कीदृशः । अकटुकोपायोऽकटुकः सामोपेत उपायो यस्य सः । वचनैः कीदृशैः । चारुतरसामधुरैः चारुतरं यत्साम चाटु तस्य धूर्येषां तादृशैः । स शौरिस्तमर्जुनमनुजगाम । अत्रापि मधुरैर्वचनैरिति संवन्धः ॥

सोऽपि च मानी चरणश्रितप्रियावाक्यकृतशमानीचरणः ।
परिसरमाप पुरस्य स्वस्य नरा दृग्भिरङ्कमापपुरस्य ॥ ३६ ॥

सोऽप्यर्जुनो मानी मानयुक्तः । तथा—चरणश्रितेत्यादि । चरणौ श्रिता या प्रिया सुभद्रा तस्या यद्वाक्यं तेन कृतशमो विहितप्रशमोऽनीचो महान् रणो यदुभिः सह युद्धं येन स तादृशः सन् स्वस्य पुरस्य नगरस्य हास्तिनपुरस्य परिसरं पर्यन्तभूमिमाप प्राप्तः । 'पर्यन्तभूः परिसरः' इत्यमरः । तथा नरा अस्यार्जुनस्याङ्कं दृग्भिरापपुः सकौतुकमालोकयन्॥

अथ दधुरामोदं ते पार्थाः प्राप्तेऽर्जुनेऽभिरामोदन्ते ।
वध्वा मानिन्या ते कुन्ती कृष्णा च तोषमानिन्याते ॥ ३७ ॥

अथानन्तरं ते पार्था युधिष्ठिराया अभिरामोदन्ते अभिरामा मनोहरा उदन्ताः शौर्ययशःप्रभृतीनां यस्य तादृशेऽर्जुने प्राप्ते आमोदं हर्षं दधुः । 'प्रमोदामोदसंमदाः' इत्यमरः । ते मानिन्या च तया वध्वा वर्यया कुन्ती कृष्णा द्रौपदी च तोषमानिन्याते । संतुष्टीकृते इत्यर्थः॥

महिततमारम्भा सा पितृसदृशमजीजनत्कुमारं भासा ।
गुरुर्महमन्युं[1] नामप्रदायिनं कुरुकुलेऽभिमन्युं नाम ॥ ३८ ॥

सा सुभद्रा महिततमारम्भा महिततमोऽतिप्रशस्त आरम्भः क्रियारम्भो यस्याः सा

---

१. 'महिमन्युं' ख.

तादृशी भासा पितृसदृशमभिमन्युं नाम कुमारमजीजनत्। कीदृशम्। गुरुमहमन्युं गुरवो महा उत्सवा येषां तादृशा मन्यवो यज्ञा यस्य स तादृशम्। 'मन्युर्दैन्ये क्रतौ क्रुधि' इति मङ्खः। पुनः कीदृशम्। नामप्रदायितं नामप्रख्यापकम्। कुत्र। कुरुकुले कुरुवंशे॥

अथ रमितो वासविना कृष्णस्तत्रैव हलभृतोवास विना।
प्रीतिरसेनाहानि स्वैरं कतिचित्कृतारिसेनाहानिः॥ ३९॥

अथानन्तरं कृष्णः श्रीकृष्णो वासविनेन्द्रसूनुनार्जुनेन प्रीतिरसेन रमितः सन् हलभृता विना बलभद्रेण विना कतिचिदहानि स्वैरं तत्रैव हास्तिनपुरे उवास आसांचक्रे। कीदृशः कृष्णः। कृतारिसेनाहानिः कृता अरिसेनायाः शत्रुचम्वा हानिर्येन॥

सस्नेहरिरंसेन ध्रियमाणभुजोऽर्जुनेन हरिरंसेन।
अगमच्च क्रीडायै यमुनां प्रति बन्दिनः स चक्रीडायै॥ ४०॥

स चक्री चक्रायुधवान् हरिः श्रीकृष्णः सस्नेहरिरंसेन सस्नेहं रिरंसा ग(र)न्तुमिच्छा यस्य स तादृशेन अर्जुनेन ध्रियमाणभुजः आध्रियमाणभुजः (चुम्ब्यमानभुजः। 'घ्रा गतिगन्धोपादानयोः' धातुः।) अंसेन अंशेन क्रीडायै यमुनां प्रत्यगमत्। शसयोरैक्यं यमकादौ। यमुनां प्रति वनविहाराय किंचित्क्रीडां कर्तुं ययावित्यर्थः। तथा बन्दिनः स्तुतिपाठकस्य ईडायै वाचे। स्तुतये इत्यर्थः। यमुनां प्रति जगामेति जातावेकवचनम्। बन्दिनश्च तथा विहरन्तमस्तुवन्नित्यर्थः॥

भुवनविभावयमाने वनविहरणविभ्रमं विभावयमाने।
ऋतवो माधवमासं निधाय पुरतस्ततोऽभिमाधवमासन्॥ ४१॥

ततोऽनन्तरम् ऋतवः षड्ऋतवः वनविहरणविभ्रमं वनविहारं विभावयमाने विशेषेण भावयमाने काङ्क्षमाने(णे) भुवनविभौ श्रीकृष्णेऽयमाने गतवति सति माधवमासं मधुमासम्। वसन्तर्तुमित्यर्थः। पुरतोऽग्रे निधाय अभिमाधवं श्रीकृष्णमभि आसन्। 'वैशाखे माधवो हरौ वसन्ते च' इति मङ्खः॥

अधुना वसन्तवर्णनमाह—

मुकुलः संतेने यश्चम्पकतरुणागते वसन्तेऽनेयः।
दीप इव स्वच्छशिखः स बभौ लोकश्च स्वच्छविवस्वच्छशिखः॥ ४२॥

आगते वसन्ते वसन्तर्तौ यो मुकुलः कुड्मलो अनेयो न नेयो याप्यः। हृद्य इत्यर्थः। चम्पकतरुणा चम्पकवृक्षेण संतेने विस्तारितः। सुहृच्च पीतवर्णत्वात्। स्वच्छशिखो दीप इव बभौ रेजे। तथा लोकश्च। औचित्याद्भूलोकोर्ध्वलोकाख्यः। स्वच्छविवस्वत्स्वच्छशिखो विवस्वान्सूर्यः पावको वा शशी चन्द्रः खमाकाशः स्वच्छानि विवस्वच्छशिखानि यस्मिन् स तादृश आसीत्॥

१. अयं च पाठो धकारे घकारभ्रान्तिमूलकोऽसाधुरेव, तत्र यक्यपीत्वाप्राप्तेः.
२. 'स्कन्धेन' इत्यर्थकस्य 'अंसेन' इत्यस्य 'ध्रियमाणभुजः' इत्यतः प्रागुचितत्वम्.

पथिकजनानां कुरवान्कुर्वन्कुरवो बभूव नानाङ्कुरवान्।
प्रेक्ष्य रुचं चूतस्य स्तवकेषु पिकश्चकार चञ्चू तस्य ॥ ४३ ॥

कुरवः कुरबकवृक्षः पथिकजनानां पान्थजनानां विरहिणां कुरवान्कुत्सितरवान्दीनालापान्कुर्वंस्तन्वन्नानाङ्कुरवान् नानाविधाङ्कुरवान् बभूव । तथा—चूतस्य रसालस्य रुचं शोभां प्रेक्ष्य तस्य चूतस्य स्तवकेषु पिकः कोकिलश्चञ्चू त्रोटी उभे अपि द्वावपि चञ्चूपुटौ चकार । तदास्वादनरसिकत्वात् । 'चञ्चूस्त्रोटिरुभे स्त्रियाम्' इत्यमरः ॥

भृङ्गचमूपरिवारस्तस्ताराङ्गारवत्किमूपरि वारः ।
नवनलिनानि वसन्तः प्लुष्टा ह्यमुना प्रियां विना निवसन्तः ॥ ४४ ॥

वसन्त ऋतुर्भृङ्गचमूपरिवारोऽलिपङ्क्तिपरिवारः सन् वारो जलस्योपरि नवनलिनानि नवपद्मानि अङ्गारवत् तप्ताङ्गारवत् किमु तस्तार । वार्शब्दः[1] स्त्रीलिङ्गो जलवाचकः । प्लुष्टा इत्यादि । हि निश्चये प्रियां विना निवसन्तः पुरुषाः । विरहिण इत्यर्थः । अमुना हेतुना प्लुष्टा दग्धाः ॥

स्फुटितं च पलाशेन भ्रान्तं भ्रमरेण चैव चपलाशेन ।
हसितमशोकप्रसवैः पतितं पान्थाश्रुभिश्च शोकप्रसवैः ॥ ४५ ॥

चशब्दः समुच्चये । पलाशेन पलाशपुष्पेण स्फुटितं विकसितम् । अथ च पलमश्नातीति पलाशो राक्षसः तेन पलाशेनेव पलाशेन पुष्पेण विकसितमित्यर्थः । तथा भ्रमरेण भ्रान्तं च । कीदृशेन भ्रमरेण । चपलाशेन चपला आशा परापकृतिस्पृहा यस्य स तादृशेन । अथ च भ्रमं रातीति भ्रमरः खलः । सोऽपि चपलाशः । तेन च भ्रान्तं जृम्भितम् । तथा—अशोकप्रसवैरशोकतरुपुष्पैर्हसितं विकसितम् । अथ च पान्थान् प्रति हसितमिव श्वेतवर्णत्वात्तेषाम् । तथा—शोकप्रसवैः शोकः प्रियावियोगेनेह यद्दुःखं तस्मात् प्रसव उत्पत्तिर्येषां तादृशैः पान्थाश्रुभिः पान्थानां विरहिणामश्रुभिर्नेत्रजलैः पतितं च । तदसहत्वादित्यर्थः ॥

स्वतलोरसि तरुगलितः कच्छभुवा कुसुमरेणुरसितरुगलितः ।
चारुवसन्तोषितया दध्रे पुलकोऽमुयेव संतोषितया ॥ ४६ ॥

अमुया कच्छभुवा गहनभुवा तरुगलितो वृक्षेभ्यः पतितः अलितो भ्रमरादसितरुक् श्यामलरुक् कुसुमरेणुः पुष्पधूलिश्चारुवसन्तोषितया चारुर्मनोहरो यो वसन्तो नायकस्थाने तस्मिन्नुषिता सन्नीभूता तया संतोषितया संतुष्टयेव । 'मुदेव' इति पाठे मुदेव हर्षेणेव । दध्रे ॥

अथ ग्रीष्मवर्णनमाह—

भृङ्गकृतारावं तं तपन्तमिव दन्तधवलतारावन्तम् ।
नरकभिदातंपसेवानिरतमपश्यच्छुचिं तदातपसेवा ॥ ४७ ॥

---

१. 'पूर्वसाहचर्यात्स्त्रीत्वं वारः' इति तु कलिङ्गः । 'पूर्वोत्तरसाहचर्यात्स्त्रीक्लीबयोर्वार्' इति तु पञ्जिका—इति मुकुटः.

नरकभित् श्रीकृष्णस्तदा तस्मिन् काले तं शुचिं ग्रीष्मम् । अथ च तपसे तपोऽर्थं शुचिं पवित्रमिव कंचित्पुरुषमपश्यत् । कीदृशं तम् । भृङ्गकृतारावं भृङ्गैः कृत आरावो यस्मिन् स तादृशम् । शुचिरपि पुरुषः स्वाध्यायवान् । पुनः—तपन्तमिव संतापं लोकं कुर्वन्तमिव । अथ च—तपन्तं तपस्यन्तम् । पुनः कीदृशं शुचिम् । दन्तधवलतारावन्तं दन्ता गजदन्तास्तत्तुल्या धवला यास्तारास्तद्वन्तम् । पुनः कीदृशम् । आतपसेवानिरतम् आतपसेवायां निरतम् । शुचिः साधुरपि तपस्वी पञ्चविधो भवति ॥

न प्रसवे शैरीषे वियुक्तिरलिभिः कृतप्रवेशैरीषे ।
सुमनःसेवनमन्तर्गत्वा बहु मन्वते रसेऽवनमन्तः ॥ ४८ ॥

शैरीषे शिरीषसंबन्धिनि प्रसवे पुष्पे कृतप्रवेशै रचितप्रवेशैरलिभिर्भ्रमरैर्वियुक्तिस्तद्वियोगो न ईषे नेष्टा। 'इषु इच्छायाम्' धातुः । एतत्संवादसंमतमर्थान्तरन्यासमाह—सुमन इत्यादि । रसे तद्रसे अवनमन्तो लग्नाः पुरुषाः । रसिका इति यावत् । सुमनःसेवनं सुमनसः पुष्पाण्येव सुमनसः पण्डितास्तेषां सेवनमन्तर्गत्वा । मनसा तद्विधायेत्यर्थः । तदेव सुमनःसेवनं बहु मन्वते बहु जानन्ति ॥

अथ वर्षावर्णनमाह—

अथ भृङ्गानवमरुतः स्फीताः प्रावृड्घनाग्रगा नवमरुतः ।
आयासं पदवीजं नियम्य शौरेः समाप्यसंपदवीजन् ॥ ४९ ॥

प्रावृड्घनाग्रगा वर्षाकालिकघनाग्रगा नवमरुतो नववायवः स्फीता उद्धताः । तथा—भृङ्गानवमरुतो भृङ्गेभ्योऽनवमा अनूना रुद् शब्दो येषां ते तादृशाः । रुद्शब्दः क्विबन्तः । यद्वा भृङ्गैः कृत्वा अनूनशब्दाः सभृङ्गशब्दाश्चेत्यर्थः । शौरेः श्रीकृष्णस्य पदवीजं पदव्या जातं वनविहरणात् पदप्रक्रमणे जातमायासं कष्टं नियम्य दूरीकृत्य अवीजन् ववुः । कथम् । समाप्यसंपत् समाप्या पर्याप्ता संपत् यत्र कर्मणि तत् । अतिशयेन ववुरित्यर्थः ॥

प्रीणितमानवकोटेरुदये मेघस्य मोदमानबकोटे ।
अभवत्सन्ना हंसावलिर्दधौ च गमनसंनाहं सा ॥ ५० ॥

प्रीणिता तोषिता जीवनदानेन मानवानां कोटिः । जातावेकवचनम् । येन तस्य तादृशस्य मेघस्य उदये मोदमानबकोटे मोदमाना हृष्यमाणा बकोटा बका यस्मिन् स तादृशे सति । बकोटशब्दः बके रूढः । हंसावलिर्हंसपङ्क्तिः सन्ना कष्टवती अभवत् । च पुनः—सा हंसावलिर्गमनसंनाहं मानसं सरः प्रति यात्रोद्योगं दधौ ॥

सकलजगत्याधारा न समा मेघस्य पुण्यगत्या धारा ।
अन्यास्वादापेते चातकवदने यया जवादापेते ॥ ५१ ॥

सकलजगत्याधारा सकलजगत्याः सकलभूमेराधार आश्रयो यस्याः सा मेघस्य धारा जलधारा पुण्यगत्या कस्यापि पुण्यगत्या न समा । तत्समा कापि पुण्यगतिरद्भुता

नास्तीत्यर्थः । अत्र हेतुमाह—यया(या) मेघस्य जलधारया अन्यास्वादापेते अन्यस्मात् नद्यादिजलस्वादादपेते रहिते चातकवदने चातकमुखे जवादापेते आपतितम् । आपेते इति भावे लिट् ॥

विदधाना ध्वनिमलिना न केतकी राक्षसी वनाध्वनि मलिना ।
पथिकैरार्तवदशनैः स्फुरिता सेहे पतद्भिरार्तवदशनैः ॥ ९२ ॥

वनाध्वनि वनमार्गे अलिना भ्रमरेण हेतुना ध्वनिं विदधाना कुर्वती केतकी राक्षसी केतकीवीरुदिव राक्षसी मलिना कृष्णा पापा च अशनैः शीघ्रं पतद्भिरार्तवदशनैरार्तवानि ऋतौ भवानि कुसुमानि तान्येव दशना दन्तास्तैः स्फुरिता जृम्भमाणा सती पथिकैः पान्थैर्वियोगिभिरार्तवदातुरवन्न सेहे न सोढा । [अन्या]पि शब्दं कुर्वती दन्तुरवदना भवति ॥

घटितनिकेतकवाटः कामिजनैः स्फुटितसुरभिकेतकवाटः ।
जलदैः सकलापिहितः कालो व्याजृम्भते स्म स कलापिहितः ॥ ९३ ॥

एवंविधः स कालो विशेषणसामर्थ्याद्वर्षाकालो व्याजृम्भते स्म, विशेषेण आसमन्तात् जृम्भते स्म । कीदृशः । घटितनिकेतकवाटो घटिताः संयोजिता निकेतेषु गृहेषु कवाटा अर्गला यस्मिन् सः । कैः । कामिजनैः कामुकलोकैः । वर्षाकाले बहिरसंचारात् । पुनः कीदृशः । स्फुटितसुरभिकेतकवाटः स्फुटिताः सुरभयः केतकानां केतकपुष्पाणां वाटा वृत्तयो यस्मिन् सः । पुनः कीदृशः । जलदैर्मेघैः सकलापिहितः सर्वत्राच्छादितः । पुनः कीदृशः । कलापिहितः कलापिनां मयूराणां हितः ॥

अथ शरद्वर्णनमाह—

अथ नवकोकनदेन क्षितिः क्षणात्कुररहंसकोकनदेन ।
रममाणविशेषेण प्राप्यत योषेव भूषणविशेषेण ॥ ९४ ॥

अथानन्तरं क्षणादिति श्रीकृष्णवैभवेन समकालं षडृतूनां प्राप्तिवर्णनम् । कुररहंसकोकनदेन कुररा उत्क्रोशाः पक्षिविशेषाः । 'उत्क्रोशकुररौ समौ' इत्यमरः । तथा—हंसा मरालाः, कोकाश्चक्रवाकाः, तैर्युक्तो यो नदो जलाशयस्तेन क्षितिः क्षणात् प्राप्यत प्राप्ता । किंविशिष्टेन । नवकोकनदेन नवानि कोकनदानि रक्तोत्पलानि यस्मिन् स तादृशेन । पुनः कीदृशेन । रममाणविशेषेण रममाणाः वीनां पूर्वोद्दिष्टानां पक्षिणां शेषाः पक्षिणो यस्मिन् स तादृशेन । यद्वा—रममाणा वयः पक्षिणः शेषा जलचरा यत्र स तादृशेन । केन केव प्राप्ता । भूषणविशेषेण योषा नायिकेव ॥

विरहिणमार व्यसनं भृङ्गैश्च बभूव भुवनमारव्यसनम् ।
सुतरामभ्रमदभ्रं बभ्राजे भ्रमरवर्णमभ्रमदभ्रम् ॥ ९५ ॥

व्यसनं दुःखं वियोगोत्थं विरहिणं पान्थमार जगाम । 'ऋ गतौ' इत्यस्य धातोर्लिटि रूपम् । भृङ्गैश्च हेतुभिः कृतं भुवनमारव्यसनं भुवनमारणस्य लोकमारणस्य व्यसनं

हेवाको वभूव । 'विपत्तावशुभे भ्रंशे पानस्त्रीमृगयादिषु । देवानिष्टफले सक्तौ व्यसनं क्रोधदूषणे ॥' इति मङ्खः । अत्र शरदि सुतरामतिशयेन अदभ्रं घनं भ्रमरवर्णं नीलवर्णम् अभ्रमदभ्रं न भ्रमन्ति अभ्राणि मेघा यस्मिंस्तत्तादृशमभ्रमाकाशः वभ्राजे शुशुभे । 'अभ्र-माकाशमेघयोः' इति मङ्खः ॥

रजनेर्मुक्ता वलयः खगृहे मुनिसप्तकेन मुक्तावलयः ।
रेजुस्तारासार्था न पुरेव पयोधरावताराः सार्थाः ॥ ९६ ॥

अत्र शरदि तारासार्था नक्षत्रसंघा मुनिसप्तकेन मरीच्यत्रिप्रभृतिना खगृहे आकाशगृहे मुक्तास्त्यक्ता रजने रात्रेर्वलयः किं रेजुः । वलीनामपि पायसादिना श्वेतत्वात् । यद्वा—मुनिसप्तकेन सप्तर्षिभिर्मुक्तावलयो मुक्तापङ्क्तयः खगृहे मुक्तास्तारासार्था रेजुः । न पुरेवेति । पयोधरावताराः पयोधराणां मेघानामवताराः पुरेव सार्था वार्पुकत्वात्सफला न आसन् । 'पयोधरावताराः सार्थाः' इत्यत्र विसर्जनीयाभावे[ऽपि] न दोषः ॥

शशिना सकलकलेन स्फुरितं शालिषु शुकेन सकलकलेन ।
निपतितमापक्वेषु स्मरस्य लक्ष्येषु भङ्गमाप क्वेषुः ॥ ९७ ॥

अत्र शरदि सकलकलेन सकलाः संपूर्णा अतिस्वच्छाश्च कला यस्य स तादृशेन शशिना स्फुरितं जृम्भितम्। तथा आपक्वेषु आ समन्तात् पक्वेषु शालिषु सस्येषु सकलकलेन सह कलकलेन कोलाहलेन तद्भक्षणक्षोभात् वर्तते यः स तादृशेन शुकेन कीरेण निपतितम् । भक्षणार्थमिति शेषः । क्वेषुः क इषुरिति पदच्छेदः । स्मरस्य इषुः शरो लक्ष्येषु शरव्येषु क्व भङ्गमाप । न क्वापि भङ्गमापेत्यर्थः ॥

अथ हेमन्तवर्णनमाह—

प्रतिपन्नावश्यायः स्फुटं भवेद्वायुरङ्गनावश्याय ।
अकृत मरुत्साहस्यः स्त्रीभर्तुर्यद्वशे निरुत्साहस्य ॥ ९८ ॥

साहस्यः सहसि मार्गशीर्षे भवः साहस्यो मरुत् हेमन्तवायुर्निरुत्साहस्य विगतवशीकरणोद्यमस्यापि भर्तुर्वशे यत्स्त्रीं कान्तामकृत, तत् प्रतिपन्नावश्यायः प्राप्ततुषारलवो वायुरङ्गनावश्याय अङ्गनावशीकरणाय स्फुटं भवेदिति जाने ॥

शिशिरवर्णनमाह—

वनभूमौ कुन्देन सितेन सादृश्यमापि मौकुन्देन ।
देशः कोपलवङ्कः प्रियाजनोऽप्यकृत युवसु कोपलवं कः ॥ ९९ ॥

कुन्देन माघ्येण कुसुमविशेषेण मौकुन्देन मुकुन्दस्य श्रीकृष्णस्येदं मौकुन्दं मौकुन्देन स्मितेन ईषद्धसितेन सह सादृश्यं श्वैत्यादापि प्राप्तम् । देश इत्यादि । अत्र शिशिरे देशः कोपलवङ्को भवति । देश इति जातावेकवचनम् । कुत्सिता उपला अश्मानो यस्मिन् स कोपलः स चासौ वङ्कश्च वक्रश्च । वङ्कशब्दो वक्रार्थे रूढः । अत्र करकादिबाहुल्येन देशस्य

कोपलवक्लृत्वम्। तथा—कः प्रियाजनोऽपि कान्ताजनोऽपि युवसु तरुणेषु कोपलवं क्रोधलेशम् अकृत। न कोऽपि। शैशिरमरुता बलात्कारितस्वप्राणप्रियालिङ्गनानां कान्तानां क्व मानवतीत्वमत्रेत्यर्थः॥

अवनितले शीतरुजः कान्तापि भृशं तुषारलेशी तरुजः।
पवमानस्तापस्यः स्थापयिताभूद्वियोगिनस्तापस्य॥ ६० ॥

अत्र शिशिरे तापस्यो माघः। शैशिर इत्यर्थः। तरुजः पवमानः शिशिरऋतुसंभविपुष्पतरुजः, तथा तुषारलेशी हिमलवयुक्तोऽवनितले भूतले शीतरुजः शीतस्य रुक् रोगस्तस्य, कान्तापि वियोगिनो विरहिणस्तापस्य स्थापयिता बहुलीकर्ता अभूत्। चित्रमेतत्। यः शीतरुजः कर्ता स कथं तापकर्ता भवतीति विरोधः। कामोद्रेकेण विरहिणां संतापकत्वात्तत्परिहारः॥

ऋतुवर्णनोपसंहारमाह—

तत्र समुत्कपिके तु स्फुरतीदृशमृतुगणे समुत्कपिकेतुः।
स यमस्वसुरभ्यासं[1] प्रापत्तीरं द्रुमार्तवसुरभ्यासम्॥ ६१ ॥

कपिकेतुरर्जुन ईदृशमनेन प्रकारेण ऋतुगणे ऋतूनां वसन्तादीनां गणे समुत्कपिके समुत्काः सम्यगुत्का उत्कण्ठिताः पिका यस्मिंस्तादृशे स्फुरति जृम्भिते सति समुत् सह मुदा हर्षेण वर्तते यः स तादृशः सन् तस्या यमस्वसुर्नद्या यमुनाया अभ्यासं समीपस्थं तीरं प्रापत्। कीदृशम्। द्रुमार्तवसुरभ्यासम्। यथाऋतु यानि द्रुमार्तवानि द्रुमकुसुमानि तैः सुरभिः सुगन्धिरासा आसनं स्थानं यस्य तत्। अत्र यमस्वसुरित्यमङ्गलप्रायमपि पदं तादृगृतुसमुदाये श्रीभगवद्द्भवेनोपस्थिते अत्युन्मदमदनोद्दीपकत्वेन विरहिणां प्राणसंशयदत्वे यमुनातीरस्य सर्वर्तुजुष्टेन हेतुत्वाद्रक्षितं कविना॥

लोकहितो यातनया यस्या भ्राता विवस्वतो या तनया।
कल्मषमापावन्या यत्संगत्या विनाशमापावन्या॥ ६२ ॥

यस्या यमस्वसुः। कस्या इत्याह—यस्या यमुनानद्या भ्राता यमो यातनया पातकिनामपि लोकानां विहितया लोकहितो भवति। सा हि यातना तेषां प्रायश्चित्तरूपत्वेन। अतस्तस्य सर्वथा लोकहितत्वम्। तथा या च तनया दुहिता भवति। कस्य। विवस्वतस्त्रिजगतश्चक्षुषः सूर्यस्य। तथा आपावन्या आसमन्तात्पुनातीत्यापावनी तया यत्संगत्या यस्यां यमुनायां संगतिर्यस्यास्तादृश्या अवन्या तीरभूम्या कल्मषं पापं विनाशमाप। देहिनामिति शेषः॥

---

१. 'प्रापत्पारद्रुमार्ते' ग. २. सटीकपुस्तकयोर्मूलपुस्तके च 'अभ्याशम्' इति तालव्यशकार एव दृश्यते, तथापि 'अभ्यासोऽभ्यसनेऽन्तिके' इति दन्त्यान्तप्रकरणे विश्वमेदिन्योः स्फुटमुपलभ्यमानत्वाद्दन्त्यान्त्यपाठः स्थापितः.

[1]समधुरभृङ्गारा सा वीचिकरे धृतसरोजभृङ्गारासा ।
लङ्घितवप्रापाद्यं दातुमनाः कौतुकादिव प्रापाद्यम् ॥ ६३ ॥ (युग्मम्)

सा यमुना नदी वीचिकरे वीचिरेव करो हस्तस्तत्र समधुरभृङ्गारा सह मधुरेण रम्येण भृङ्गारेण जलालकया वर्तते या सा। तथा—धृतसरोजभृङ्गारासा धृतः सरोजेषु पद्मेषु भृङ्गानामलीनामारासो यया तादृशी । तथा—लङ्घितवप्रा लङ्घितं वप्रं तीरम् अर्थादूर्मिभिः यया सा तादृशी । पाद्यं पादायार्हे पाद्यं दातुमना इव आद्यं श्रीकृष्णं प्राप ॥

तस्याः कुसुमहितायाः शौरिस्तीरे पुरेव कुसुमहितायाः ।
विजहाराक्षीणांसः समं समूहेन कातराक्षीणां सः ॥ ६४ ॥

स शौरिः कुसुमहितायाः कौ भूमौ सुष्ठु महिता पूजिता तस्याः । तथा तीरे तटे कुसुमहितायाः कुसुमैः षडृतूत्थैर्नानाविधैस्तीरभूमिवर्तिनां वृक्षाणां पुष्पैर्हिता तस्यास्तीरे कातराक्षीणां वरयोषितां समूहेन समं पुरेव प्राग्वत् विजहार चिक्रीड । कीदृशः शौरिः । अक्षीणांसः अक्षीणौ कृशौ अंसौ यस्य स तादृशः । एतन्महापुरुषलक्षणं सामुद्रिके ॥

अथ वनविहरणमाह—

वध्वा घटमानाभ्यामुरोरुहाभ्यां कयापि घटमानाभ्याम् ।
जगले रन्तुं गतया विजिगीषुभ्यां परस्परं तुङ्गतया ॥ ६५ ॥

कयापि वध्वा नायिकया रन्तुं वनविहारं कर्तुं गतया जगले गलितमापतितम् । वध्वा कीदृश्या । लक्षितयेति शेषः । काभ्याम् । उरोरुहाभ्यां स्तनाभ्याम् । कीदृशाभ्याम् । घटमानाभ्यां संयुज्यमानाभ्याम् । पुनः कीदृशाभ्याम् । घटमानाभ्यां घटवत् कलशवत् मानं प्रमाणं ययोस्तौ ताभ्याम् । पुनः कीदृशाभ्याम् । परस्परं तुङ्गतया विजिगीषुभ्याम् ॥

चक्रुर्बाला वल्ल्याः पल्लवसदृशैः करैः प्रवालावल्याः ।
भङ्गं हेलावलयस्वनसूचितनिजकरा महेलावलयः ॥ ६६ ॥

बाला महेलावलयः कान्ताश्रेण्याः(ण्यः) पल्लवसदृशैर्नवपल्लवतुल्यैः करैर्वल्ल्या लतायाः संबन्धिन्या प्रवालावल्याः पल्लवपङ्क्तेर्भङ्गं छेदं चक्रुः । किंविशिष्टाः । हेलेत्यादि । हेलया क्रीडया यो वलयस्वनः कङ्कणशब्दस्तेन सूचितो बोधितो निजकरो यासां ताः । वर्णतः पल्लवकरयोर्भेदाज्ञानाद्वलयस्वनेनैव करः सूचित इत्यर्थः।अत्रापि वल्या इति व्यञ्जनद्वयाभावेऽप्यदोषः । तथा वलयेत्यत्र एकत्र विसर्गाभावेऽपि न दोषः । प्रवालावल्याः, महेलावलय इत्यत्र कथिते पदेऽपि यमकादौ न दोषः । एवमन्यत्राप्यूह्यम् ॥

---

१. इतः प्राक्
'निन्दितकुन्दप्रसवा हरेण मूर्ध्ना धृता मुकुन्दप्रसवा ।
स्नेहभरादिव यस्या बभूव गङ्गा सरिद्वरादिवयस्या ॥'
इति श्लोको मूलपुस्तकेऽधिकः.

कलिकां वर्यां वध्वा स्पर्शरतः कामुकः कवर्या वध्वाः ।
कान्तिर्नेहेदृश्यामिति संश्लथयन्पुनश्च नेहे दृश्याम् ॥ ६७ ॥

कामुकः कान्तो वध्वाः कान्तायाः कबर्यां केशविन्यासे वर्यां प्रशस्यां कलिकां पुष्पकलिकां वध्वाः स्पर्शरतः तत्स्पर्शे रतः सन् इह कबर्यामीदृश्यां बद्धायां कान्तिर्नेति हेतोः तां संश्लथयन् श्लथीकुर्वन् पुनश्च तां कबरीं दृश्यां दर्शनयोग्यां न ईहे नाकाङ्क्षत(?) । परो मैनां पश्यत्विति ॥

विहिते साकम्पे तु स्तबके तासु स्वनेन साकं पेतुः ।
भ्रमरा मध्वस्यन्तः स्त्रीततयस्तैर्नितान्तमध्वस्यन्त ॥ ६८ ॥

स्तबके गुच्छके साकम्पे विहिते सति मधु किंजल्कमस्यन्तः क्षिपन्तो भ्रमरा तासु लतासु स्वनेन साकं पेतुः । तैश्च भ्रमरैः स्त्रीततयः कान्ताश्रेण्यो नितान्तमध्वस्यन्त अत्रास्यन्त ॥

अधुनोत्कांचन कांचिद्द्रावयति स्म प्रणादिकाञ्चनकाञ्चि ।
ता वातावशकदलीसाम्यं नेतुं वनक्षितावशकदली ॥ ६९ ॥

अली भ्रमरः कांचित्स्त्रियमधुनोत् कम्पयति स्म । जातावेकवचनम् । अलिन्शब्दस्य नकारान्तस्य च रूपम् । तथा कांचित् द्रावयति स्म अद्रावयत् । कथम् । प्रणादिकाञ्चनकाञ्चि प्रणादिनी काञ्चनकाञ्ची स्वर्णमेखला यस्मिन् कर्मणि तत् । क्रियाविशेषणम् । अतो हेतोरली भ्रमरस्तस्यां वनक्षितौ अशकत् शक्तो बभूव । किं कर्तुम् । ताः स्त्रियो वातावशकदलीसाम्यं नेतुं वातेन अवशा व्याकुला या कदली लता तस्याः साम्यं नेतुम् । भ्रमरत्रासेन वातकम्पितकदल्य इव जाता इत्यर्थः ॥

नवकलिकोपायनतः प्रियः प्रियाजनाय कलिकोपाय नतः ।
मूर्धनि चापे तेन क्षणात्तदीयं पदं शुचापेतेन ॥ ७० ॥

कलौ रतिकलहे कोपो यस्य स तादृशाय कलिकोपाय प्रियाजनाय दयिताजनाय प्रियो नतः । कुतो हेतोः । नवकलिकोपायनतो नवकलिकैवोपायनं ढौकनकं ततः । तमपदिश्य नत इत्यर्थः । तेन च प्रियेण तदीयं कान्तासंबन्धि पदं मूर्धनि क्षणात् आपे प्राप्तम् । कीदृशेन तेन । शुचा दयितामन्युचिन्तनजा या शुक् तया अपेतेन ॥

धृतरसमुत्सङ्गे न प्रणेतुरूढापरा समुत्सङ्गेन ।
पल्लवमाल्यानीतं वल्लभरचितं बबन्ध माल्यानीतम् ॥ ७१ ॥

अपरा स्त्री धृतरसं धृतो रसो यत्र कर्मणि तत् । तथा प्रणेतुः प्रणयिनो भर्तुरुत्सङ्गे ऊढा धृता सङ्गेन स्पर्शसङ्गेन समुत्सहर्षा आल्या सख्या नीतं प्रापितं वल्लभेन प्रियेण रचितं रचनया संयोजितं माल्यानीतं माल्ये आनीतं बद्धं पल्लवं नवपल्लवं न बबन्ध ॥

अर्पितमपरा धवतस्तरुकुसुमं नैच्छदाप्तुमपराधवतः ।
अपि विपरीतरवधुतं प्रणतमुपैक्षिष्ट सा परीतरवधु तम् ॥ ७२ ॥

अपरा स्त्री अपराधवतो गोत्रस्खलनाद्यपराधयुक्ताद्धवतो धवात् कामुकात् तरुकुसुमं प्राप्तुं नैच्छत् । सा नायिका तं धवं प्रियं परीतरवधु परितः स्थिता इतरवध्वो यस्मिन् कर्मणि तत्तथा प्रणतमुपैक्षिष्ट । उपेक्षां तस्य चक्रे इत्यर्थः । कीदृशमपि । विपरीतरवधुतमपि विपरीतो यो रवस्तर्जनरवः तेन धुतः कम्पितः तादृशमपि ॥

अलमुपयातुं गोत्रस्खलनं त्वन्न समस्त्वया तुङ्गोऽत्र ।
स त्वमरमणीयः स्याः प्रणमन्मम संनिधौ न रमणी यस्य ॥ ७३ ॥
इति केलीकमलेन प्रियमन्या चलितचञ्चलीकमलेन ।
पृथुकुचकलशोभाभ्यां पद्भ्यां चाताडयत्सकलशोभाभ्याम् ॥ ७४ ॥

गोत्रस्खलनेनातिक्रुद्धायाः कस्याश्चित्स्वदयितं प्रतीयमुक्तिः । भोः प्रौढेति शेषः । त्वत् त्वत्सकाशात् गोत्रस्खलनमलमत्यर्थमुपयातुमागतम् । त्वया समः अत्र गोत्रस्खलने तुङ्गो महान् न । स त्वं मम प्रणमन् प्रणामं कुर्वन् अरमणीयः स्याः न शोभसे । कुत इत्याह— संनिधाविति रमणी अर्थात् सा यस्य प्रियतमा त्वत्संनिधौ नास्ति । अतस्तया विना न शोभसे इत्यर्थः । इत्युक्त्वा चलितचञ्चलीकमलेन चलितचञ्चलीको भ्रमरः । रलयोरैक्यात् । स एव मलं यस्य तत् तादृशेन केलीकमलेन क्रीडानलिनेन अन्या प्रियमताडयत् । तथा—उभाभ्यां पद्भ्यां च प्रियमताडयत् । कीदृशाभ्याम् । सकलशोभाभ्याम् सकला पूर्णा शोभा ययोस्तौ तादृशाभ्याम् । अन्या कीदृशी । पृथुकुचकलशा पृथू कुचावेव कलशौ यस्याः सा ॥

संमर्दात्तरुजानां तासां भावाच्च तावदात्तरुजानाम् ।
करतलमधिकारुण्यं बभूव यूनां च हृदयमधिकारुण्यम् ॥ ७५ ॥

तरुजानां तरुभ्यो जातानि तरुजानि पल्लवपुष्पादीनि तेषां संमर्दात् क्षोभात् तासां वधूनां करतलं पाणितलमधिकारुण्यमधिकमारुण्यमरुणता यस्य तत्तादृशं बभूव । तथा— तावदात्तरुजानां तत्संमर्दात् तावती आत्ता गृहीता रुजा व्यथा याभिस्तास्तादृशीनां च तासां भावात् संपादनात् । यद्वा—भावात्संमर्दव्यथोचितचेष्टातो वा यूनां तरुणानां हृदयं मनोऽधिकारुण्यमधिकं कारुण्यं यस्य तत्तादृशं बभूव । अतिसुकुमाराङ्गीत्वात्तासामित्यर्थः ॥

---

१. 'त्वं न तु समस्त्वया तुङ्गोऽत्र । स त्वमरमणीयस्याः प्रणमन्मम संनिधौ न रमणीयः स्याः ॥' इति मूलपुस्तकपाठे तु 'त्वं गोत्रस्खलनं गोत्रस्खलनदोषमुपयातुं प्राप्तुमलं पर्याप्तः । त्वया समस्तुङ्गोऽत्र विषये न । स त्वं शीघ्रमण्टीयस्याः क्षुद्राया मम संनिधौ प्रणमन् रमणीयो न स्याः' इत्यर्थकरणे न कोऽपि दोषः.

अथ कृतकच्छविहारैः स्त्रीसंघैर्विलुलिताधिकच्छविहारैः ।
त्यक्त्वा वनजातानि क्रान्ता यमुना मनोज्ञवनजा तानि ॥ ७६ ॥

अथानन्तरं कृतकच्छविहारैः कृतगहनप्रदेशक्रीडैः । तथा—तरसंमर्दात् विलुलिताः कम्पिता अधिकच्छवयो बहुकान्तयो हारा येषां ते तादृशैः विलुलिताधिकच्छविहारैः [स्त्रीसंघैरबलासमूहैः] तानि वनजातानि कुसुमादीनि त्यक्त्वा यमुना क्रान्ता । जलक्रीडार्थमिति शेषः । कीदृशी यमुना । मनोज्ञवनजा मनोज्ञानि वनजानि कमलानि यस्याः ॥

जलक्रीडावर्णनमाह—

त्वरितमपांसूनानि त्यक्त्वा निर्वेदयुतमपां सूनानि ।
प्रापुस्तरलालिन्यस्तासां मुखपद्मधिकतरलालिन्यः ॥ ७७ ॥

तरलालिन्यः तरलाश्चपलाश्चालिन्यो भ्रमर्यस्ता ऊनानि हीनानि अर्थात् कान्त्या त्वरितमपां जलानां सूनानि जलजपुष्पाणि पद्मनीलोत्पलादीनि निर्वेदयुतं त्यक्त्वा । निर्वेदेन [युतं] निर्वेदयुतमिति क्रियाविशेषणम् । तासां वरयोषितां मुखपद्मानि(?) प्रापुः । कीदृशं मुखपद्मम् । अपांसु अविद्यमानः पांसुर्धूलिः । मालिन्यमिति यावत् । यस्य तत् । जातावेकवचनम् । कीदृश्यस्तरलालिन्यः । अधिकतरलालिन्योऽतिस्नेहवत्यः ॥

आस्येन्दावासरतामासामत्रैव शश्वदावासरताम् ।
असिताकारामलिनां मालां स्मितचन्द्रिका चकारामलिनाम् ॥ ७८ ॥

आसां वरयोषितां स्मितचन्द्रिका स्मितमेव चन्द्रिका अत्रैवास्येन्दौ मुखपद्मे आसरतां गच्छताम् । 'सृ गतौ' धातुः । अलिनां भ्रमराणां मालां पङ्क्तिं शश्वत्सदा अत्रैवावासे आवसने रताम् । तदभिलाषुकामित्यर्थः । असिताकारां मलिनामप्यमलिनां चकार । वराङ्गीस्मितचन्द्रिकया मलिनापि भ्रमरपङ्क्तिरमलिना धवला जातेत्यर्थः ॥

तासां लोलहरीणामस्पृशदङ्गं चयश्चलो लहरीणाम् ।
हृततापं कक्षालीकेलिविधावात्तधूलिपङ्कक्षाली ॥ ७९ ॥

चलश्चञ्चलो लहरीणां चयो लोलहरीणां लोलः सकामत्वात् हरिः श्रीकृष्णो यासु तास्तादृशीनां तासां वराङ्गीना(णा)मङ्गमस्पृशत् । कीदृशमङ्गम् । हृततापं हृतस्तापो यस्य तत् । लहरीणां चयः कीदृशः । कक्षालीकेलिविधौ कक्षाल्यां हरिततृणाल्यां यः केलिविधिः तत्र । आत्तधूलिपङ्कक्षाली आत्तं यत् धूलिपङ्कं धूलिरूपं पङ्कं तत्र क्षालयतीति तादृशः ॥

अभितो मुरजेतारं नलिनततिर्नदति भृङ्गमुरजे तारम् ।
प्रविकसिता रङ्गेषु प्रा(प्रन)नर्त प्रोन्नतेषु तारङ्गेषु ॥ ८० ॥

मुरजेतारं मुरारिमभितः भृङ्गमुरजे भृङ्ग एव मुरजः मृदङ्गस्तस्मिन् तारं नदति सति नलिनततिः पद्मपङ्क्तिः प्रोन्नतेषु प्रकर्षेणोन्नतेषु तारङ्गेषु तरङ्गरूपेषु रङ्गेषु नाट्यमण्डपेषु प्रा(प्रन)नर्त

१–२. 'प्रानर्त' इति कश्मीरलिखितपुस्तकयोः पाठः.

नृत्यं चकार । कीदृशी नलिनततिः । प्रविकसिता प्रफुल्ला हृष्टा च । अन्योऽपि मृदङ्गे नदति हर्षेण रङ्गे नृत्यं करोति ॥

तस्यां वक्रान्तानि स्वच्छतमायां सरित्यवक्रान्तानि ।
निन्युर्महिलास्यानि भ्रूप्रतिबिम्बानि भीतिमहिलास्यानि ॥ ८१ ॥

स्वच्छतमायामतिशयेन स्वच्छायां निर्मलायां तस्यां सरिति यमुनायामवक्रान्तानि लग्नानि वक्रान्तानि भ्रूप्रतिबिम्बानि भ्रुवां प्रतिबिम्बानि कर्तृणि महिलास्यानि कान्तामुखानि भीतिं निन्युः । अत्रासयन्नित्यर्थः । अत्र हेतुमाह—भ्रूप्रतिबिम्बानि कीदृशानि । अहिलास्यानि अहिवत् सर्पवत् लास्यं नाट्यं येषां तानि । स्वच्छजलायां सरिति लग्नानि भ्रूप्रतिबिम्बानि नृत्यदहिभ्रमं कृत्वा अङ्गनावदनान्यत्रासयन्नित्यर्थः ॥

तत्र कले रतिकाले विबभुर्वनिता घनावलेरतिकाले ।
जितसौदामन्यस्ता नलिन्य इव नीलनलिनदामन्यस्ताः ॥ ८२ ॥

तत्र तस्मिन् यमुनाम्भसि कले रम्ये रतिकाले सुखसमये इव घनावलेर्मेघपङ्क्तेरतिकाले अतिश्यामले जितसौदामन्यः कान्त्याजिततडितस्ता वराङ्गना नीलनलिनदामन्यस्ता नीलोत्पलदामोम्भिता नलिन्य इव कमलानीव विबभू रेजुः । 'अब्जाकरेऽब्जे नलिनी' इति मङ्खः ॥

तच्छीकरतोयानि प्रियमुखमाप्तानि युवतिकरतो यानि ।
अतिसौरभवन्नलिनान्नलिनं यान्तीव पङ्क्तिरभवन्नलिनाम् ॥ ८३ ॥

यानि तच्छीकरतोयानि तस्य यमुनाजलस्य शीकरतोयानि जलकणा युवतिकरतो वधूहस्ततः प्रियमुखमाप्तानि तान्येवातिसौरभवन्नलिनादतिसौगन्ध्ययुक्तपद्मान्नलिनमन्यपद्मं यान्ती गच्छन्ती अलिनां भ्रमराणां पङ्क्तिरेवाभवत् । अत्र शीकरतोयानि भ्रमरपङ्क्तिरिवाभवदित्यत्र विकृतिवल्लिङ्ग्राहित्वम् अभवदित्यस्याः क्रियाया यथा 'पुनरावृत्तः सुवर्णपिण्डः खदिराङ्गारसुवर्णे कुण्डले भवतः' इति । यथात्र 'कुण्डले भवतः' इत्यत्र विकृतिगतलिङ्ग्राहित्वं क्रियायास्तद्वदत्रापि ॥

काचन लोलम्बालंकारं कोरकमिहातिलोलं बालम् ।
तज्जलमाविरुरोजप्रतिबिम्बं जनितसंभ्रमा विरुरोज ॥ ८४ ॥

काचन स्त्री तज्जलं यमुनाजलमाविरुरोजप्रतिबिम्बमाविः प्रकटीभूतमुरोजप्रतिबिम्बं यस्मिंस्तत् अलमत्यर्थं विरुरोज चिच्छेद । कं वा कमिव । कोरकं वा कुसुमकोरकमिव । कीदृशम् । लोलम्बालंकारं रलयोरैक्यात् रोलम्बो भ्रमरोऽलंकारो यस्य स तम् । पुनः कीदृशम् । अतिलोलम् । कीदृशी । जनितसंभ्रमा जनितः संभ्रमो यस्याः । यमुनाजले मेचके लग्नं निजस्तनप्रतिबिम्बं कोरकमिव मत्वा भ्रमेण च्छेत्तुमना इव क्वाप्यभूदित्यर्थः ॥

---

१ '—ले' ग. २. 'मिवा' क-ख.

तासां चोरोरुहतः प्राप्तहतिः करिकरर्धिचोरो रुहतः ।
अवधावशकल्लोलः स्थातुं न जलाशयो विवशकल्लोलः ॥ ८५ ॥

तासां वरस्त्रीणां रुहत आरुहतः। उन्नतादित्यर्थः । उरोरुहतः स्तनात् । जातावेकवचनम् । तस्मात् प्राप्तहतिः प्राप्ता हतिर्येन स स्त्रीणां स्तनेभ्यो लब्धहतिर्जलाशयो यमुनाजलप्रवाहो लोलश्चपलोऽवधौ स्वमर्यादायां स्थातुं न अशकत् । मर्यादामुल्लङ्घयति स्मेत्यर्थः । कीदृशः । करिकरर्धिचोरः करिणो हस्तिनो यः करस्तस्य या ऋद्धिर्लक्ष्मीस्तस्याश्चोरः स्तेनः । अतिमेचकत्वादित्यर्थः । पुनः कीदृशः । विवशा व्याकुला उद्भटाः कल्लोला उत्कलिका यस्य सः ॥

सरितस्तिलकालीनामपां चयैः क्षाल्यमानतिलकालीनाम् ।
हरिवासविरामाणामुदतारि गणेन रतिषु सविरामाणाम् ॥ ८६ ॥

रतिषु कान्तैः सार्धं संभोगेषु सविरामाणां जलक्रीडातत्परत्वात् तथा तिलकालीनां तिलवत्कृष्णास्तिलवत्काल्यः कृष्णास्तादृशीनामपां यमुनाजलानां चयैः समूहैः क्षाल्यमाना तिलकालीनां क्षाल्यमाना तिलकानां चित्रकाना(णा)माली पङ्क्तिर्यासां ताः तादृशीनां हरिवासविरामाणां हरिः कृष्णश्च वासविरर्जुनश्च तौ हरिवासवी तयोर्या रामाः स्त्रियस्तासां गणेनोदतारि उत्तीर्णा । यमुनाजलाज्जलक्रीडां विधायेत्यर्थः ॥

अधि तटमवलग्नानां शोषाय विधाय नमनमवलग्नानाम् ।
सुदृशामालम्बिकचं मुखमजनयन्नलिनमुदलिमालं विकचम् ॥ ८७ ॥

जले चिरकालावस्थानेन शीतान्तत्वादवलग्नानामुदराणां नमनं विधाय शोषाय जलार्द्रतनोः शोषणाय अधितटं तटे अवलग्नानां सुदृशां श्रीकृष्णार्जुनवरस्त्रीणामालम्बिकचमालम्बिनः स्नानार्थं मोचिता लम्बाः कचा यस्य तत् तादृशं मुखं कर्तृ । जातावेकवचनम् । विकचं फुल्लं तथा उदलिमालमुद्भटासौगन्ध्येनागता अलिमाला भ्रमरपङ्क्तिर्यस्य तत् नलिनं पद्ममजनयत् ॥

जलक्रीडाया उपसंहारमाह—

ललिततरं भोगानामथ विरतौ युवतिरम्भोगानाम् ।
अकृतासौ धावल्यान्निराकृतेन्दौ पदानि सौधावल्याम् ॥ ८८ ॥

अथानन्तरमम्भोगानामम्भो गच्छन्ति ये तेऽम्भोगास्तादृशानां भोगानां जलाक्षेपाधिप्रभृतिभोगानां विरतौ विरामे असौ युवतिः । जातावेकवचनम् । अमूः श्रीकृष्णार्जुनवराङ्गना इत्यर्थः । धावल्यान्निर्मलत्वात् निराकृतेन्दौ जितचन्द्रमसि सौधावल्यां सौधपङ्क्तौ पदानि अकृत । तामशिश्रयदित्यर्थः ॥

---

१. 'युवतिविततिं' ग.

ता युवती रत्यर्थं प्रीणयितुमिव त्वरावतीरत्यर्थम् ।
अस्तं समहास्तेन स्त्रीणां वदनेन्दुरजनि समहास्तेन ॥ ८९ ॥

रत्यर्थं कान्तैः सह रतिक्रीडार्थमत्यर्थमतिशयेन त्वरावतीः सत्वराः प्रीणयितुं तोषयितुमिव इनः सूर्यो अस्तमस्तगिरिं समहास्त अगात् । 'हिं गतिवृद्ध्योः' धातुः । स्त्रीणामिति । तेन हेतुना स्त्रीणां योषितां वदनेन्दुः समहाः सह महसा तेजसा वर्तते यः स तादृशोऽजनि बभूव । अतिफुल्लो बभूवेत्यर्थः ॥

अस्तवर्णनं कर्तुमाह—

अथ तिलशोभि विहायःस्थलं विलोक्यारुणा दिशोऽभिविहाय ।
अपतदाशु कपोतः स्फीतं केदारमपि तदा शुकपोतः ॥ ९० ॥

अथानन्तरं तिलशोभि तिलवत् कृष्णतिलवत् शोभते इति तिलशोभि तादृशं विहायःस्थलं विहायस आकाशस्य स्थलं विलोक्य । तथा अरुणा दिशः । संध्यारागेण जाता इत्यर्थः । अभिविहाय त्यक्त्वा कपोतो वनकपोत आशु शीघ्रं स्फीतं केदारमपतत् गतः । तथा तदा तत्कालं शुकपोतश्च स्फीतं केदारं क्षेत्रमपतत् गतः ॥

बिम्बं पातङ्गमयं न दिनान्तो हिनस्तु पातं गमयन् ।
इति नलिनी जलिमानं दधतीव चकार कोरकाञ्जलिमानम् ॥ ९१ ॥

अयं दिनान्तः पातङ्गमयं सूर्यसंबन्धि बिम्बं मण्डलं पातं पतनं गमयन् तद्बिम्बं न हिनस्तु मा हिनस्तु इति शङ्कयेव नलिनी पद्मिनी जलिमानं जडिमानम् । डलयोरैक्यात् । दधती कोरकाञ्जलिमानं कोरकं स्वकुड्मलमेवाञ्जलिस्तन्मानं चकार । दिनान्तं प्रतीति शेषः । रात्रौ पद्मस्य संकोचात् कुड्मलोपमानम् ॥

ननु सुतरामारागः परो रथाङ्गाह्वयस्य रामारागः ।
यदसौ विरहास्तासु प्रियजनविरहं प्रजासु विरहास्तासु ॥ ९२ ॥

ननु संभावनायाम् । रथाङ्गाह्वयस्य चक्रवाकस्य (पर उत्कृष्टोऽपि) रामारागो रामायां वध्वां चक्रवाक्यां रागः स्नेहः तद्धेतोः सुतरामतिशयेन आगः अपराधमार गतः । तादृशोऽतिशयेन रामारागश्चक्रवाकस्यागोरूप एवेत्यर्थः । अत्र हेतुमाह—यद्यस्मात्कारणात् असौ विः पक्षी चक्रवाकः ता(आ)सु विरहास्तासु विरहेण अस्तासु क्षिप्तासु । विरहिणीष्वित्यर्थः । प्रजासु प्रियजनविरहमहास्त अक्षिपत् । अवर्धयद्वा । 'हिं गतिवृद्ध्योः' धातुः । चक्रवाकः स्ववदन्येषामपि विरहमवर्धयदित्यर्थः ॥

पुरतो नवताराणां व्रीडादिव दृक्पथेष्वनवताराणाम् ।
अधिकतरविभावितता बभूव दूरं यदाप रविभा वितता ॥ ९३ ॥

---

१. 'ओहाङ् गतौ' इति धातुरुचितः. २. 'उदपतदाशु' ग. ३. 'पथा' क; 'परा' ख; 'पुरा' ग. ४. 'ओहाङ् गतौ' बोध्यः.

तदा दिनान्तसमये अतितेजस्विनो रवेर्व्रीडादिव लज्जयेव । दृक्पथेषु अनवताराणामविद्यमानः अवतारोऽवतरणं यासां तादृशीनां [नवानां] ताराणां तारकाना(णा)मधिकतरविभाविततता अतिशयेन लक्षितता बभूव । यद्यस्मात्कारणात् वितता विस्तीर्णा रविभा सूर्यदीप्तिर्दूरमाप दूरं गता ॥

अथ तिमिरमहानिकरैरुत्तस्थे चक्षुषां परमहानिकरैः ।

यान्पुनराविःश्यामीभावा लोका बभूवुराविश्यामी ॥ ९४ ॥

अथानन्तरं चक्षुषां नेत्राणां परमहानिकरैरन्धकारसमूहैस्तैरुत्तस्थे उद्गतम् । तैः कैरित्याह—यानिति । यान् पुनस्तिमिरसमूहान् आविश्य अमी लोका आविःश्यामीभावा आविः प्रकटाः श्यामीभावा येषां ते तादृशा बभूवुः ॥

भेद्ये सूच्यन्तेन स्थिते तमस्यद्रयोऽपि सूच्यन्ते न ।

बाणानक्षिपदेषु स्मरः कथं वा मनःस्वनक्षिपदेषु ॥ ९५ ॥

दिनान्तसमये सूच्यन्तेन सूचेरन्तस्तेन भेद्ये तमसि । सूचिभेद्ये तमसीत्यर्थः । अद्रयः पर्वता अपि जनेन न सूच्यन्ते न लक्ष्यन्ते । किमुताणुपदार्था इत्यर्थः । स्मरः कामोऽनक्षिपदेषु न अक्ष्णां पदेषु गोचरेषु एषु मनःसु कामिमनःसु शरव्येषु बाणान् शरान् कथं वा अक्षिपत् । अत्यद्भुतमेतदित्यर्थः ॥

अथ चन्द्रं वर्णयन्नाह—

अथ हिमशीकरजालंकारं विस्तारयञ्शशी करजालम् ।

अशनैरन्विततारः स्फुटतां भुवनत्रये स्फुरन्वितताार ॥ ९६ ॥

अथानन्तरं हिमशीकरजालंकारं हिमजलकणजातालंकारं करजालं रश्मिजालं विस्तारयन् शशी चन्द्रोऽन्विततारस्तारायुक्तः स्फुरन्नशनैः शीघ्रमेव भुवनत्रये स्फुटतां विविक्ततां वितताार दत्तवान् । त्रिभुवनं स्फुटीचकारेत्यर्थः ॥

अभवत्सा कौ मुद्या जन्येन जितामृताम्भसा कौमुद्या ।

अजनि च शंकुमुदस्य प्रमदा मुमुदे च मानशङ्कुमुदस्य ॥ ९७ ॥

जन्येन युद्धेन स्पर्धया जितामृताम्भसा जितामृतजलया कौमुद्या ज्योत्स्नया या भवति सा मुत् हर्षः कौ भूमौ अभवत् बभूव । तथा—कुमुदस्य कैरवस्य शं कल्याणं विकासरूपमजनि । तथा प्रमदा वरयोषित् मानशङ्कुं प्रियविषये मानरूपं शङ्कुं कीलमुदस्य दूरीकृत्य मुमुदे अतुषत् । चन्द्रोदये मानं निरस्य योषिज्जहृषे इत्यर्थः ॥

तस्थे माने याभिः प्रमदाभिः पूर्वमसुसमानेयाभिः ।

उदिते रुडुपेताभिर्नाभावि विलासिनीभिरुडुपे ताभिः ॥ ९८ ।'

असुसमानेयाभिरसुसमैः प्राणप्रियैरानेयाभिर्याभिः प्रमदाभिर्वरस्त्रीभिः पूर्वं माने मान-

विषये तस्थे स्थितम् । ताभिर्विलासिनीभिरुडुपे चन्द्रे उदिते सति रुडुपेताभी रुषा रोषेण उपेता युक्तास्तादृशीभिर्नाभावि न भूतम् । चन्द्रोदये मानिनीभिर्मानोचिता रुङ्गितरां त्यक्तेत्यर्थः ॥

अथ चन्द्रोदयानन्तरं पानगोष्ठीं वर्णयन्नाह—

शशिधामसु रामाभिः प्रसृतेष्वथ पातुमुत्तमसुरामाभिः ।
अध्यारुरुहे लतया समतनुभिर्हर्म्यभूमिरुरुहेलतया ॥ ९९ ॥

अथानन्तरं शशिधामसु चन्द्रमहःसु प्रसृतेषु सत्सु लतया कुसुमलतया समतनुभिः सदृशवपुर्भिराभी रामाभिः कान्ताभिरुत्तमसुरां प्रशस्यहालां पातुं हर्म्यभूमिः सौधभूमिरध्यारुरुहे । कीदृशीभिः । उपलक्षिताभिः । कया । उरुहेलतया उर्वी महती हेला विलासो यासां ताः तासां भावस्तत्ता तया ॥

अथ मधुकरकान्तेभ्यः क्षरितं चषकान्तरेषु मधु करकान्तेभ्यः ।
पपुरपशङ्का मधु ता वध्वः सार्धं प्रियैर्भृशं कामधुताः ॥ १०० ॥

अथानन्तरं [अपशङ्का निःशङ्काः] ता वध्वो योषितो मधुकरकान्तेभ्यो मधुकरवत्कान्ता[मनोहरा]स्तेभ्यः । नीलाश्ममयेभ्य इत्यर्थः । करकान्तेभ्यो मधुपारीणामन्तेभ्यश्चषकान्तरेषु क्षरितं मधु [मधुरमिष्टं मधु]मद्यं प्रियैः कान्तैः [सार्धं] समं पपुरपीप्यन्(?)। किंविशिष्टाः । भृशमत्यर्थं कामधुताः कामेन कम्पिताः । उन्मदकामा इत्यर्थः ॥

वदनगतां स्वच्छायां वारुण्यां वीक्ष्य बिम्बितां स्वच्छायाम् ।
अभवन्निन्दावन्तस्तरुणीसंघाः क्षणेन निन्दावन्तः ॥ १०१ ॥

स्वच्छायां निर्मलायां वारुण्यां कादम्बर्यां बिम्बितां प्रतिबिम्बितां वदनगतां स्वच्छायां स्वकीयच्छायां वीक्ष्य क्षणेन तरुणीसंघाः अन्तर्मनसि इन्दौ चन्द्रमसि निन्दावन्तः सनिन्दाः। चन्द्रनिन्दका आसन्नित्यर्थः । मधुनि प्रतिबिम्बितं स्ववदनं वीक्ष्य चन्द्रं वराकमजीगणन्नित्यर्थः ॥

सा दीप्रा पानेन प्रापानेन प्रथीयसीं मदविकृतिम् ।
ऊढा स्वैरं कान्तैः स्वैरङ्कान्तैर्विलासिनीनां पङ्क्तिः ॥ १०२ ॥

सा विलासिनीनां वराङ्गनानां पङ्क्तिः स्वैरं स्वेच्छं स्वैरङ्कान्तैः सु(स्व)मध्यभागान्तैः कर्णैः कान्तैः प्रियतमैः ऊढा धृता सती दीप्रा कान्तिमती अनेन पानेन कादम्बरीपानेन प्रथीयसीमतिपृथुं मदविकृतिं मदेन विकृतिं प्राप ॥

अथ पानगोष्ठीवर्णनानन्तरं सुरतलीलां वर्णयन्नाह—

अथ तरसा रामासु द्विरेफमौर्वीं विकृष्य सारामासु ।
अमुचत्साकं पञ्च स्मरः शरानकुरुताञ्जसा कम्पं च ॥ १०३ ॥

---

१. 'नन्तरमापानुगो' क-ख.

अथानन्तरं तरसा बलेन सारां दृढां द्विरेफमौर्वीं भ्रमरमयीं ज्यामाकृष्य आसु रामासु साकं सहैव पञ्च शरान् शोषणाद्यान् स्मरः कामः अमुचत् । ते[1] पञ्च शराश्च अञ्जसा व्यक्तं कम्पं च तासामकुरुत चक्रुः ॥

अधिकमिहासकलेन प्रोत्तस्थे प्रलपितेन हासकलेन ।

ववृधे मारोऽप्यन्तः स्त्रियः प्रियैः शयनमारोप्यन्त ॥ १०४ ॥

असकलेन असंपूर्णेन, तथा हासकलेन हासेन कलं मधुरं तादृशेन प्रलपितेन पञ्चशरशरव्यथोद्भूतप्रलापेन इह स्त्रीजने अधिकमेव प्रोत्तस्थे प्रोद्गतम् । तासां मारोऽपि कामोऽप्यन्तर्ववृधे प्रवृद्धः प्रियैः कान्तैश्च स्त्रियो योषितः शयनमारोप्यन्त । रत्यर्थमिति शेषः ॥

हृतधैर्योऽनिशकलितस्फुरदिपुकोदण्डचित्तयोनिशकलितः ।

अक्रशैरतिशयनमितः स्तनभारैः स्त्रीगणोऽथ रतिशयनमितः॥१०५॥

अथानन्तरमनिशं सततं कलितो ध्यातः स्फुरदिपुकोदण्डः स्फूर्जत्सायकधनुर्युक्तो यश्चित्तयोनिः कामस्तेन शकलितो विद्धः, अत एव हृतधैर्यः सन्नक्रशैः पीनैः स्तनभारैरतिशयेन नमितः स्त्रीगणो रतिशयनं रत्यर्थं शयनमितः गतः ॥

अभजत रागो हृदयं स्त्रीणामभवच्च कमितुरागोहृदयम् ।

अहरत वामावासः सोऽपि ततोऽभान्नतभ्रुवामावासः ॥ १०६ ॥

तदा रागो रत्यभिलापः स्त्रीणां वधूनां हृदयमभजत । अतः कमितुः कामुकस्य आगोहृत् 'अयमतिचपलः' इत्यपराधध्वंसकः । अयं स्त्रीणां रागोऽभूत् । अतः सोऽपि कमिता कान्तो वामावासः कान्ताया वासोऽहरत हृतवान् । ततोऽनु सोऽप्यावासो रतिमन्दिरं नतभ्रुवां वरयोषितामभात् दिदीपे ॥

अजनि पुनर्मणितेन व्यजायि वीणारवोऽपि नर्मणि तेन ।

विललास द्रागधरः पीतोऽपि प्रियतमेन सद्रागधरः ॥ १०७ ॥

नर्मणि रतिक्रीडायां मणितेन मणितं रतिकूजितं तेन अजनि उत्पन्नम् । वरयोषितामिति शेषः । तेन मणितेन वीणारवोऽपि व्यजायि जितः । सद्रागधरः संश्चासौ रागः सहजः ताम्बूलादिकृतो वा तां(तं) धारयतीति तादृक् प्रियतमेन कान्तेन पीतोऽधरोऽधरौष्ठो द्राक् शीघ्रं विललास भाति स्म ॥

कृतकलकलहस्ताभिर्वलयेनाकारि सुरतकलहस्ताभिः ।

पुष्पं धम्मिल्लेन प्रीत्येवावर्षि बहुविधं मल्लेन ॥ १०८ ॥

ताभिर्वरयोषिद्भिर्वलयेन शिञ्जिताकङ्कणेन कृतकलकलहस्ताभिः कृतः कलकलो यैस्ते तादृशा हस्ता यासां तादृशीभिः सुरतकलहो रतियुद्धमकारि । कान्तैः सहेति शेषः । ततश्च

---

१. 'च पुनः स्मरः कम्पम् (प्रकरणाद्'आसु') अञ्जसा झटिति अकुरुत' इत्येव सारम्.

मल्लेन रतियुद्धार्थे मल्लविद्याकुशलेन धम्मिल्लेन संयुतकचभरेण प्रीत्येव साध्विमौ दम्पती रतियुद्धकुशलाविति हर्षेणेव पुष्पम् । जातावेकवचनम् । पुष्पाणीत्यर्थः । अवापि । पुष्पवृष्टिः कृतेत्यर्थः ॥

अधरितसारवतालं रेणे वलयेन रत्नसारवतालम् ।
सार्धं रोमावलिभिः स्त्रीणां प्रण(न)नर्त कुचभरोऽमा वलिभिः ॥ १०९ ॥

तदा रतिक्रीडायामलमत्यर्थं रत्नसारवता रत्नश्रेष्ठयुक्तेन वलयेन स्त्रीणां रेणे शिञ्जितम् । कथं कृत्वा । अधरितसारवतालम् । अधरितो निर्जितः सारवः शब्दसहितस्तालः कांस्यतालो यस्मिन् कर्मणि तत् । तत्र च रतिनाटके रोमावलिभी रोमपङ्क्तिभिः सार्धं तथा वलिभिः तिसृभिर्वलिभिश्च अमा सार्धं स्त्रीणां वधूनां कुचभरः प्रण(न)नर्त अनृत्यत् । अमाशब्दोऽव्ययं सहार्थे ॥

च्युतपरमाकल्पानां रतिरभसात्सुभ्रुवां रमाकल्पानाम् ।
रुचिमधिकामङ्गलता निन्ये स्वेदाम्भसा निकामं गलता ॥ ११० ॥

तत्र रतिलीलायां रमाकल्पानामीषदसमाप्ता रमा लक्ष्मीर्यासां तास्तादृशीनां रमातुल्यानां रतिरभसात् रत्युत्कण्ठ्या च्युतपरमाकल्पानां च्युताः परमाः कल्पा उत्कृष्टनेपथ्यानि रतियुद्धेन यासां तादृशीनां सुभ्रुवां निकामं गलता पतता रतिखेदोत्पन्नेन स्वेदाम्भसा स्वेदजलेन तासामङ्गलता अधिकां रुचिं निन्ये नीता ॥

विगलन्नानामाल्यस्फुरत्कबर्या सहाङ्गनानामाल्यः ।
पेतुरुपरि रम्भाणां समोरवः प्रेयसां सपरिरम्भाणाम् ॥ १११ ॥

तदा च रम्भाणां कदलीनां समोरवः समा ऊरवो यासां तास्तादृश्यः । 'रम्भाप्सरोभिः कदली' इति मङ्खः । अङ्गनानां वरस्त्रीणामाल्यः पङ्क्तयः । 'आल्यनर्थे सखीपङ्क्त्योः' इति मङ्खः । सपरिरम्भाणां सह परिरम्भेणालिङ्गितेन वर्तन्ते ये तादृशानां प्रेयसां कामुकानामुपरि पेतुः । कया सह । विगलन्नानामाल्यस्फुरत्कबर्या सह विगलन्ति रतियुद्धक्षोभेण नानामाल्यानि यस्यां सा तादृशी या स्फुरन्ती चपला कबरी केशवेशस्तया सह । इयं सहोक्तिरलंकारः । तथा च काव्यप्रकाशे—'सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्' इति । न केवलं ताः प्रियाणामुपरि पतिताः, तत्कबर्योऽपि प्रियाणामुपरि पतिता इत्यर्थः ॥

अथ सूर्योदयवर्णनमाह—

तासां सरतान्तानां लोचनपद्मैः स्मरप्रसरतान्तानाम् ।
यावदमीलीनेन प्रबोधिताः प्राग्गिरावमी लीनेन ॥ ११२ ॥

स्मरप्रसरेण मदनसंचारेण तान्तानां क्लान्तानाम् । 'तमु ग्लानौ' धातुः । सरतान्तानां सह रतान्तेन वर्तन्ते यास्ताः तादृशीनां तासां वरस्त्रीणां लोचनपद्मैर्नेत्रकमलैर्यावदमीलि

खेदेन मीलितम्, तावत् प्राग्गिरौ पूर्वगिरौ उदयपर्वते लीनेन लग्नेन इनेन सूर्येण अमी। दम्पतिसमाजा इति शेषः। प्रबोधिताः। 'इनः सूर्ये प्रभौ' इत्यनेकार्थेषु ॥

हित्वा वरविध्वस्तां चिरोपितां कुमुदिनीं नवरविध्वस्ताम् ।
नलिनीमलिनामोघा ययुरुपकारेऽपि महति मलिना मोघाः ॥११३॥

तदा प्रभाते वरविध्वस्तां वर उत्कृष्टो वरो वर्याकामुकश्च यो विधुश्चन्द्रस्तेन अस्तां क्षिप्तां चिरोपितां चिरसेवितां कुमुदिनीं नवरविध्वस्तां नवस्तात्कालोदितो यो रविस्तेन ध्वस्तां खेदितां कुमुदिनीं कैरविणीं हित्वा त्यक्त्वा अलिनामोघा भ्रमराणां समूहा नलिनीं कमलिनीं ययुर्गताः। अत्रैतत्संवादायार्थान्तरन्यासमाह—महत्युपकारेऽपि कृते मलिना लोका मोघा वन्ध्याः। यतः कुमुदिनीभिश्चिरकालं लालिता अपि मलीमसा भ्रमरास्तास्तादृगवस्थामाप्नुवन्तीः त्यक्त्वा नलिनीं गता इत्यर्थः ॥

प्रमदा दध्युर्विपदं चिरमकृत तावदध्युर्वि पदम् ।
सपदि सवित्रंशुचयः समापयञ्जपविधिं पवित्रं शुचयः ॥ ११४ ॥

तदा प्रभाते प्रमदा वराङ्गना विपदं चिरं दिनावधि तादृगद्भुतरतिलीलाया विरतिं दध्युः अचिन्तयन्। तथा तावदादौ सपदि तत्क्षणं सवित्रंशुचयः सवितुः सूर्यस्य अंशुचयः किरणसमूहोऽध्युर्वि उर्व्यां भूमौ पदं स्थानमकृत। तथा शुचयो विमलचित्ताः साधवः पवित्रं जपविधिमाह्निकं समापयन् ॥

इति पुनरवदातेने समये सह जिष्णुनादरवदातेने ।
क्रीडां सरसिजनेत्रः स्वैरं सलिले वने च स रसिजनेऽत्र ॥११५॥

इत्यनेन प्रकारेण पुनः अवदातेने अवदातो निर्मल इनः सूर्यो यस्मिन् स तादृशे समये प्रभाते सति [स] सरसिजनेत्रः पुण्डरीकाक्षः श्रीकृष्णः स्वैरं स्वेच्छया क्रीडां जिष्णुना अर्जुनेन सह सलिले जले वने च कानने च तथात्रास्मिन् रसिजने च रसो रतिविषयोऽस्यास्तीति रसि[सी] तादृक् चासौ जनो वरयोषिज्जनस्तत्र च क्रीडामातेने विस्तारयामास। कथं कृत्वा। आदरवत् आदरस्तदेकतानत्वं विद्यते यत्र तत्। एतेन क्रमात् जलक्रीडां वनविहारं रतिलीलां च विहितवानित्यर्थः ॥

स्ववेगकम्पिकच्छविः पिकच्छविः परिभ्रमन् ।
अवाप्तवान्सदा रसं सदारसंसदच्युतः ॥ ११६ ॥

स्ववेगेन कम्पिनः कम्पयुक्ताः कच्छवयो गहनपक्षिणो यस्मात्स स्ववेगकम्पिकच्छविः, तथा पिकच्छविः पिकस्य कोकिलस्येव छविः श्यामसुन्दरा यस्य स तादृक् परिभ्रमन्नच्युतः श्रीकृष्णः सदारसंसत् सह दाराणां संसदा समाजेन वर्तते यः स तादृक् सदा सर्वदा रसं सौख्यमवाप्तवान् प्राप्तवान् ॥

---

१. 'विरहमयीमकृत' ग.

अर्जुनस्य वृत्तमाह—

वधूजनैः समं ततः समन्ततः सरित्तटे ।
चचार चारुचामरो रुचामरो धनंजयः ॥ ११७ ॥

ततोऽनन्तरं रुचां दीप्त्या अमरो देव इव चारुचामरः चारु चामरं व्यजनं यस्य स तादृग् धनंजयोऽर्जुनः सरित्तटे यमुनातटे समन्ततः सर्वतः वधूजनैः समं स्त्रीजनैः सह चचार ॥

उभावपि प्रभाविनौ दिवीव सुप्रभाविनौ ।
चिरं रिरंसयोषितौ सरित्तटे सयोषितौ ॥ ११८ ॥

उभावपि श्रीकृष्णार्जुनौ प्रभाविनौ प्रभावयुक्तौ दिवि आकाशे सुप्रभौ सुष्ठुप्रभायुक्तौ इनौ सूर्याविव सयोषितौ सवधूकौ सरित्तटे यमुनासरित्तटे चिरं बहुकालं रिरंसया रन्तुमिच्छया उषितौ स्थितौ ॥

इति श्रीमहाकविवासुदेवविरचिते युधिष्ठिरविजये महाकाव्ये श्रीकश्मीरदेशवास्तव्यमहामाहेश्वरविपश्चिद्वरराजानकशंकरकण्ठात्मजराजानकरत्नकण्ठविरचितायां शिष्यहिताभिधानायां टीकायां सुभद्राहरणवनविहरणषड्तुवर्णनजलक्रीडास्तवर्णनचन्द्रोदयापानगोष्ठीसुरतलीलासूर्योदयवर्णनं नाम द्वितीय आश्वासः ।

---

तृतीय आश्वासः ।

तं जितदैत्ये शरणं हरणं भीतेर्जगत्त्रयीशरणम् ।
पादाश्रितसितधवलं नौमि सदा पार्वतीधवलम् ॥

अथातः श्रीकृष्णार्जुनयोः खाण्डवदाहादिवृत्तं वर्णयन्नाह—

अथ तौ भासुरतरसौ कृष्णावनुभूतवल्लभासुरतरसौ ।
खाण्डवमायतनागं वनमाविष्टौ विहंगमायतनागम् ॥ १ ॥

अथानन्तरं भासुरतरसौ भासुरं तरो वेगो ययोस्तौ तादृशौ । तथा—अनुभूतवल्लभासुरतरसौ अनुभूतो वल्लभानां प्रियतमानां सुरतरसः सुरतकेलिरसो याभ्यां तौ कृष्णौ कृष्णः श्रीकृष्णः कृष्णोऽर्जुनश्च तौ श्रीकृष्णार्जुनौ खाण्डवं वनमाविष्टौ । कीदृशं वनम् । आयतनागम् आयता दीर्घा नागा अश्वसेनादयो यस्मिंस्तत् । पुनः कीदृशम् । विहङ्गमायतनागं विहङ्गमानां पक्षिणामायतनभूता अगाः पर्वता यस्मिंस्तत् ॥

तस्य च पापिहितस्य क्रूरस्य वनस्य पादपापिहितस्य ।
हृदि बद्धक्षोभाभ्यां जगद्धितार्थं दधे दिधक्षोभाभ्याम् ॥ २ ॥

उभाभ्यां श्रीकृष्णार्जुनाभ्यां हृदि मनसि बद्धक्षोभाभ्यां बद्धः क्षोभः खलविनाशार्थं याभ्यां तादृशाभ्यां तस्य क्रूरस्य वनस्य खाण्डवस्य दिधक्षा दग्धुमिच्छा दधे धृता ।

किमर्थम् । जगद्धितार्थे जगतो हिताय । वनस्य कीदृशस्य । पापिहितस्य पापिनो हितस्य । पुनः कीदृशस्य । पादपापिहितस्य पादपैर्वृक्षैरपिहितं छादितं तस्य तादृशस्य ॥

अधिकतमोदात्ताभ्यां दर्शनमग्निर्ददौ च मोदात्ताभ्याम् ।
दग्धुं दावं दारूपेतमयाचत तौ तदा वन्दारू ॥ ३ ॥

अग्निर्दर्शनं ददौ । काभ्याम् । ताभ्यां श्रीकृष्णार्जुनाभ्याम् । कीदृशाभ्याम् । अधिकतमोदात्ताभ्यामधिकतममुदात्तौ महान्तौ ताभ्याम् । कस्मात् । मोदात् हर्षात् । अग्निर्वन्दारू प्रणतौ तौ श्रीकृष्णार्जुनौ दावं खाण्डवं वनं दग्धुमयाचत । कथंभूतम् । दारूपेतं दारुणा युक्तम् ॥

अग्निः श्रीकृष्णार्जुनौ किमयाचतेत्याह—

विपिनमिदं विलसद्भिर्बहुप्रकारैर्दुरासदं विलसद्भिः ।
सुरपतिरक्षति मत्तस्तक्षकसख्यात्सदैव रक्षति मत्तः ॥ ४ ॥

विलसद्भिर्बहुप्रकारैर्विलसद्भिर्विलेशयैः सर्वैर्दुरासदमिदं वनं खाण्डवाख्यं तक्षकसख्यात्तक्षकेन नागेन सह सख्यं तस्माद् हेतोर्मत्तो हृष्टः सन् सुरपतिरिन्द्रः सदैव सर्वदा सर्वकाले मत्तो मत्सकाशाद् [अक्षति यथा स्यात्तथा] रक्षति ॥

तद्वृकगोमायुवयोरङ्कुगणैर्भुजबलानुगोऽमा युवयोः ।
द्विरदवराहारहितं वनमशितुं प्रार्थये वराहारहितम् ॥ ५ ॥

तत्तस्मात्कारणाद् अहं युवयोर्द्वयोर्भुजबलानुगो भुजबलमनुगच्छतीति तादृक् अहं वृकगोमायुवयोरङ्कुगणैः वृका वनश्वानश्च गोमायवः शृगालाश्च वयांसि पक्षिणश्च रङ्कवो मृगविशेषाश्च तेषां गणैः समूहैः अमा सह । अमाशब्दः सहार्थे । तैः स्थितं वनम् । तथा—द्विरदवराहारहितम् । द्विरदा हस्तिनः,वराहाः सूकराः, तैररहितम् । सहितमित्यर्थः । तथा वराहारहितम् वरश्चासौ आहारस्तत्र हितं वनमशितुं भोक्तुम् । दग्धुमित्यर्थः । प्रार्थये ईहे ॥

इत्थं सादरमुक्तः प्रतिजज्ञे जिष्णुरञ्जसा दरमुक्तः ।
हृतरिपुरंहोमायः स्फीतस्य वनस्य सत्वरं होमाय ॥ ६ ॥

इत्थमनेन प्रकारेण सादरमादरसहितमुक्तः । अग्निनेति शेषः । जिष्णुरर्जुनो दरमुक्तो दरेण भयेन मुक्तः सन् प्रतिजज्ञे प्रतिज्ञां कृतवान् । कस्मै । सत्वरं शीघ्रं स्फीतस्य ऋद्धस्य वनस्य खाण्डवाख्यस्य होमाय । जिष्णुः कीदृशः । हृतरिपुरंहोमायः हृतं रिपूणां रंहो वेगः माया छलं च येन ॥

अर्जुनो वक्ति—

इह पवमानसखेदं किंचन कृत्ये करोति मानसखेदम् ।
मम पुनरासाद्यानि स्थिराणि शस्त्राणि शरशरासाद्यानि ॥ ७ ॥

इहास्मिन् वनदाहाख्ये कार्ये पवमानसखा पवमानस्य वायोः सखा अग्निः इदं किंचन किमपि कृत्ये करणीये वनदाहे मानसखेदं मनःखेदं करोति[1]। मनसि करोतीत्यर्थः । ममाग्रे न किंचिदेतदित्यर्थः । परं तु मम पुनः स्थिराणि शस्त्राण्यायुधानि शरशरासाद्यानि शरा बाणाः शरा अस्यन्तेऽनेन शरासो धनुः, तदाद्यानि आसाद्यानि प्राप्यानि चेत् तर्हि न किंचिदेतदित्यर्थः ॥

इति शुभमायाचित्रे गाण्डीवं नाम विविधमायाचित्रे ।
दैवतकार्यं तेन स्मृत्वा साध्यं रणेऽधिकार्यन्तेन ॥ ८ ॥
तस्मै चापं नगतः कर्कशमतिभीषणं रुचा पन्नगतः ।
स खलु ददावरुणेन स्फुरद्गुणेनाहृतं तदा वरुणेन ॥ ९ ॥

इति अनेन प्रकारेण शुभं जगद्धितमायाचित्रे प्रार्थयते तस्मै अर्जुनाय गाण्डीवं नाम चापं सोऽग्निर्ददाविति संबन्धः । किं कृत्वा । दैवतकार्यं देवकार्यं साध्यं साधनीयं भावि स्मृत्वा । केन । तेनार्जुनेन । कृतमित्यर्थः । कुत्र । रणे । कीदृशे । विविधमायाचित्रे विविधा या मायाः प्रस्वापनाद्यास्ताभिश्चित्रे । केन हेतुना । अधिकार्यन्तेन अधिकं योऽरीणां शत्रूणामन्तस्तेन । चापं कीदृशम् । नगतो नगात् पर्वतादपि कर्कशं कठिनम् । तथा—रुचा दीप्त्या पन्नगतः सर्पादप्यतिभीषणम् । चापं कीदृशम् । अरुणेन गुणेन मौर्व्या स्फुरत् । पुनः किंविशिष्टम् । वरुणेन लोकपालेन आहृतं दत्तम् । अग्नये इत्यर्थः । एतदाख्यानं चादिपर्वणि खाण्डवदाहे ज्ञेयम् ॥

अश्वांस्तान्वद्धवलान्सह शरधियुगेन भास्वता बद्धबलान् ।
स ददौ कपिलसितेन ध्वजेन युक्तं रथं च कपिलसितेन ॥ १० ॥

सोऽग्निस्तावत् प्राथम्ये, यद्वा तावन्तः पृथ्वाकाराः धवलाश्च तावद्धवलास्तान् सितानश्वान् बद्धबलान् बद्धं संपन्नं बलं येषां ते तादृशान् भास्वता दीप्तिमता । अक्षयेनेत्यर्थः । शरधियुगेन सह शरा धीयन्ते रक्ष्यन्तेऽत्र शरधिस्तूणं तूणयुगेन सह । तथा—रथं च कपिलसितेन कपेर्वानरस्य वानरश्रेष्ठस्य हनुमतो लसितं यत्र तादृशेन ध्वजेन । कपिलसितेन कपिलश्वेतवर्णेन सह तस्मै अर्जुनाय ददौ ॥

अभिभूताखण्डलतस्तद्बलतस्तदनु वेष्टिताखण्डलतः ।
दीप्तिमगादनलोऽलं बिभ्राणो हेतिशतमगादनलोलम् ॥ ११ ॥

तदनु तदनन्तरमनलोऽग्निः अभिभूताखण्डलतः पराभूतेन्द्रात् तद्बलतः श्रीकृष्णसखार्जुनबलात् हेतिशतं ज्वालाशतं बिभ्राणो वेष्टिताखण्डलतो वेष्टिता अखण्डा लता वीरुधो येन स तादृक् अलमत्यर्थं दीप्तिमगात् । हेतिशतं कीदृशम् । अगादनलोलम्

---

१ 'तत्संबोधनं हे पवमानसख' इत्यस्याधिकपाठस्य सत्त्वे न किंचिद्दूषणम्; 'करोति' इत्यत्रापि 'करोषि' इत्युचितम्.

अगस्य पर्वतस्य खाण्डवाश्रयस्य यददनं भक्षणं तत्र लोलस्तम् । अग्निचेष्टितं वर्णयत्याचार्यः ॥

कृतनिजकक्षेमहति क्षयमेष्यति तक्षकस्य कक्षे महति ।
अमुमारब्धारावान्घनान्नुदन्नवाप हरिरब्धारावान् ॥ १२ ॥

कृतनिजकक्षेमहति कृता निजस्य कस्य जलस्य क्षेमहतिः शुभक्षतिर्यत्र कर्मणि तत् । क्रियाविशेषणम् । यद्वा निज एव निजकः, कृता निजकानां स्वीयानां क्षेमहतिर्यत्र तत् एव तक्षकस्य नागस्य विशेषमहति कक्षे कच्छे तत्पार्श्वारण्ये वा । 'कक्षः स्मृतो भुजामूले कक्षोऽरण्ये च वीरुधि । कक्षः शुष्के तृणे प्रोक्तः कक्षः कच्छ उदाहृतः ॥' इति धरणिः । कक्षः जलप्रायगहनप्रदेशः । कक्षे क्षयमेष्यति सति आरब्धारावान् आरब्धा रावाः शब्दा यैस्ते तादृशान् घनान् मेघान् नुदन् प्रेरयन् अब्धारावान् अपां जलानां या धारा अविच्छिन्नप्रसररूपास्ता विद्यन्ते यस्य स तादृक् स हरिरिन्द्रोऽमुं खाण्डवदहनोद्यतमग्निमवाप प्राप्तः ॥

स्तब्धपतत्रिदशाशं शरगृहमकृतार्जुनः पतत्रिदशाशम् ।
रुद्धा बद्धारासा बहिरेव ततो[1] भवद्धारा सा ॥ १३ ॥

तत्र खाण्डवदाहे स्तब्धपतत्रिदशाशं स्तब्धाः पतत्रिणः पक्षिणो यासु ता एवंविधा दशाशा दशदिशो यस्मिंस्तादृशम् । तथा—पतत्रिदशाशं पतन्ती अधोगच्छन्ती नश्यमाना त्रिदशानामिन्द्रपक्ष्याणामाशा यस्मिंस्तादृशं शरगृहं शरैरतिघनतया कृतं गृहमर्जुनोऽकृत । रुद्धेति । ततोऽनन्तरं सा धारा जलधारा क्रोधोद्रेकादिन्द्रकृता बहिरेव रुद्धा अभवत् । कीदृशी । बद्धारासा बद्ध आसमन्ताद्रासो रावो यया सा ॥

तदनु घनोदकरोधात्क्रोधं विबुधाधिपोऽरिनोदकरोऽधात् ।
कृतसंनाहबलोऽभी रभसादागच्छदर्जुनाहवलोभी ॥ १४ ॥

तदनु तदनन्तरम् अरिनोदकरोऽरीणां नोदं व्यथां करोतीति तादृग् विबुधाधिप इन्द्रो घनोदकरोधाद् घनं कृत्वा य उदकरोधो घनस्य वोदकस्य रोधस्तस्मात् क्रोधमधात् क्रोधमकरोत् । अर्जुनं प्रतीति शेषः । ततश्च स इन्द्रोऽर्जुनाहवलोभी अर्जुनेन सह आहवे युद्धे लोभी लोभयुतः, अभीर्भयरहितः कृतसंनाहबलः कृतसन्नीकरणसैन्यो रभसाद् वेगादागच्छदागतः ॥

विजितावार्यमरुद्भिः शरनिकरैरश्विवसुशिवार्यमरुद्भिः ।
प्राप्तुं तुङ्गजवं तं जिगाय जिष्णुः शतक्रतुं गजवन्तम् ॥ १५ ॥

ततोऽनन्तरं जिष्णुरर्जुनो गजवन्तमैरावणहस्तियुक्तं तुङ्गजवं महावेगं प्राप्तुं तं शतक्रतुमिन्द्रं शरनिकरैर्बाणसमूहैर्जिगाय अजयत् । कीदृशैः शरनिकरैः । विजितावार्यमरुद्भिः

१. 'ततो गताभव' ग.

विजितोऽनार्योऽनारणीय उद्भटो मरुद् यैस्ते तादृशैः । वायोरप्याशुगतिभिरित्यर्थः । पुनः कीदृशैः । अश्विवसुशिवार्यमरुद्भिः अश्विनौ दस्रौ, वसवो वसुनामानो देवाः, शिवा रुद्राः, अर्यमा सूर्यः, ते अश्विवसुशिवार्यमाणस्तान् इन्द्रपक्ष्यानागतान् रुन्धन्ति तादृशैः ॥

तदनु समिद्धो महितं सपक्षिसंघं वनं समिद्धोमहितम् ।
सलिलं जलदे वर्षति स्वैरं वह्निर्ददाह जलदेवपतिः ॥ १६ ॥

तदनु जलदे मेघे इन्द्रेणोत्पादिते सति सलिलं जलं वर्षति वर्षति सति जलदेवपतिः जलदेवो वरुणः पतिः रक्षको यस्य तादृशः सन् समिद्धोमहितं समिधां होमे हितस्तादृशं सपक्षिसंघं महितं पूजितं वनं खाण्डवं स्वैरं स्वेच्छया ददाह । जलदेवपतिरिति । तथा चादिपर्वणि खाण्डवदाहे—'एवमुक्तस्तु भगवान्धूमकेतुर्हुताशनः । चिन्तयामास वरुणं लोकपालं महेश्वरम् ॥' इत्यादि ॥

तेन यदा समदाहिव्रातं वनमुत्थितापदा समदाहि ।
शिखिना सन्नागेन स्थितमत्र न तक्षकेण सन्नागेन ॥ १७ ॥

उत्थितापदा उत्थिता आपत् वनदाहरूपा यस्मात्तेन तादृशेन शिखिना अग्निना समदाहिव्रातं समदा अहिव्राताः सर्पसंघा यस्मिंस्तत् वनं यदा समदाहि सम्यग् अदाहि, तदा अत्र वने सन्नागेन सन्नः खेदं प्राप्तोऽगो वनाश्रयभूतः पर्वतो यस्य स तादृशेन सन्नागेन शोभननागेन तक्षकनाम्ना न स्थितम् । चलितमित्यर्थः ॥

तनयं माता तस्य व्यथितं विरहे ससंभ्रमा तातस्य ।
वसतिर्वत्सलताया निगीर्य वनराजितोऽद्रवत्सलतायाः ॥ १८ ॥

तातस्य तक्षकस्य विरहे व्यथितं तनयमश्वसेनाख्यं तस्य अश्वसेनस्य माता ससंभ्रमा सती तं निगीर्य निगरणेन संगोप्य वनराजितोऽद्रवत् । कथंभूताया वनराजितः । सलतायाः सवल्ल्याः । माता कीदृशी । वसतिः । कस्याः । वत्सलताया वत्सलभावस्य वसतिः ॥

तां च ततान नभोगां कृत्तगलामर्जुनस्तताननभोगाम् ।
तत्र समुत्सर्पं तं हृतपुच्छमपाद्धरिः समुत्सर्पन्तम् ॥ १९ ॥

नभोगां नभो गच्छतीति तां नभोगां तथा तताननभोगां ततं विस्तृतमाननं भोगः फणश्च यया सा तां तादृशीं पन्नगीं कृत्तगलां कृत्तो गलो यस्याः सा तां तादृशीं ततान । तत्र च समुत्सर्पन्तं धावन्तं तं सर्पं हृतपुच्छं हृतं कृत्तमर्जुनेन पुच्छं यस्य स तादृशं तं सर्पमश्वसेनं हरिरिन्द्रोऽपादरक्षत् । वातवर्षेणार्जुनान्मोक्षयित्वेति शेषः । हरिरिन्द्रः कीदृशः । समुत् सह मुदा हर्षेण वर्तते यः सः । एतदाख्यानमादिपर्वणि खाण्डवदाहे तत एवोह्यम् ॥

स्तब्धरविप्रभविष्णुः शरणागतमत्र वनभुवि प्रभविष्णुः ।
च्युतमनले नररक्षःखादिनि पार्थो मयं बलेन ररक्ष ॥ २० ॥

पार्थोऽर्जुनोऽत्र वनभुवि दह्यमानायां नररक्षःखादिनि नराश्च रक्षांसि च तानि खादतीति तादृशि अनलेऽग्नौ च्युतं मयं मयासुरं बलेन ररक्ष । कीदृशः पार्थः। स्तब्धरविप्रभविष्णुः स्तब्धोऽग्रे स्तब्धीभूतो रविप्रभः सूर्यतुल्यो विष्णुः श्रीकृष्णो यस्य सः। पुनः कीदृशः। प्रभविष्णुः प्रभावशीलः॥

विपिनमपातिततोयं दग्ध्वा तृप्ते तनूनपाति ततोऽयम्।
पार्थं दत्तक्षेमं दैतेयानां तदावदत्तक्षेमम्॥ २१॥

दैतेयानामसुराणां तक्षा वार्धकिर्मयस्तनूनपाति अग्नौ वनं खाण्डवमपातिततोयं न पातितमिन्द्रेण तोयं यस्य तत्तादृशं दग्ध्वा तृप्ते सति तदा तस्मिन् काले दत्तक्षेमं दत्तं क्षेमं मयस्य संरक्षणरूपं येन स तादृशमिमं पार्थमवदत्। वक्ष्यमाणप्रकारेणेति शेषः॥

मयासुरः किमवददित्याह—

वेष्टितवीरुच्चक्राद्दहनाद्दहतो महाटवीरुच्चक्रात्।
अपि च सुरासुरहन्तुः स्फुटं त्वया पालितः परासुरहं तु॥२२॥

भोः पार्थ, महाटवीर्महारण्यानि दहतः। 'अटव्यरण्यं विपिनम्' इत्यमरः। तथा—वेष्टितवीरुच्चक्रात् वेष्टितं वीरुधां चक्रं समूहो येन स तादृशात्। तथा—उच्चक्रादुद्गतं चक्रं ज्वालारूपं सैन्यं यस्मात्स तादृशात्। तथा—सुरासुरहन्तुः। तु पक्षान्तरे। एवंविधाद्दहनादग्नेः परासुर्मृतप्रायोऽहं त्वया स्फुटं पालितः॥

मयस्तं पार्थं पुनश्च किमवोचदित्याह—

तत्तव भवतादिष्टं मद्वचनं मनुजवीर भवतादिष्टम्।
इष्टं करवै भवतस्त्वष्टारं मामवेहि करवैभवतः॥ २३॥

हे मनुजवीर, मनुजानां मध्ये वीरस्तस्य संबोधनम्। हे पार्थ, तत्तस्मात्कारणात् तवेष्टं भवतादित्याशीः। हे अर्जुन, भवता मद्वचनमादिष्टमाज्ञप्तं त्वं ब्रूहीति भवतैवाज्ञप्तमित्यर्थः। तत्तस्मात्कारणात् भवत इष्टं करवै करवाणि। करवैभवतः करयोर्वैभवं कौशल्यं ततः करवैभवात् हस्तनैपुण्यात् त्वष्टारं वर्धकिं मामवेहि। दैत्यानामिति शेषः॥

इति वचनमनामयतः श्रुत्वा पार्थोऽथ शोभनमना मयतः।
उपपन्नाभिजनानामुचितमुवाचाभि नलिननाभिजनानाम्॥ २४॥

इत्यनेन प्रकारेण अनामयतः कुशलात् अथानन्तरं मयतो मयासुराद् वचनं श्रुत्वा शोभनमनाः सुचित्तः पार्थोऽर्जुनः उपपन्नाभिजनानां योग्यकुलजानां नलिननाभिजनानां श्रीकृष्णसेवकानामभि संमुखमुचितं वच उवाच॥

पार्थो मयं किमित्युवाचेत्याह—

न स्वयमसुर क्षणतः प्रत्युपकृतये वरेयमसुरक्षणतः।
जगदभिरामतमस्य क्रियतां कृष्णस्य मद्गिरा मतमस्य॥ २५॥

हे असुर मयासुर, क्षणतः क्षणमात्रमसुरक्षणतः, अर्थात् भवतोऽसुरक्षणाद् हेतोः प्रत्युपकृतये अर्थाद् भवत्प्रत्युपकाराय स्वयं न वरेयं न किंचिद्वृणोमि । परंतु भो मयासुर, जगत्सु त्रिजगद्विषये अतिशयेनाभिरामस्य श्लाघ्यस्य अस्य कृष्णस्य श्रीकृष्णस्य मतं मद्गिरा क्रियताम् । यदस्य जगदीशस्य मतं तदेव भवता क्रियतामित्येव वरेयमिति भावः ॥

तदनु च नरकान्तेन प्रोक्तं श्रुत्वैतदखिलनरकान्तेन ।
राज्ञो भासुरधाम्नः क्रियतामधिकप्रभा सभा सुरधाम्नः ॥ २६ ॥

तदनु तदनन्तरमेतत् श्रुत्वा अखिलनरकान्तेन अखिलनराणां कान्तेन प्रियतमेन नरकान्तेन नरकस्य भौमासुरस्य अन्तः श्रीकृष्णस्तेन प्रोक्तं मयं प्रत्याज्ञप्तमित्यर्थः । किमित्याह—राज्ञ इति । भोः मय, भवता भासुरधाम्नो भासुरं दीप्रं धाम तेजो यस्य स तादृशस्य राज्ञो युधिष्ठिरस्य कृते सुरधाम्नः देवानां गृहात् स्वर्गाद्वा अधिकप्रभा अधिकशोभावती सभा क्रियतां साध्यताम् ॥

देवसमोदन्ताभ्यामिति कृत्वा संविदं समोदं ताभ्याम् ।
भवदवसरसमयाभ्यां प्रापे धर्मात्मजोऽथ सरसमयाभ्याम् ॥ २७ ॥

इत्यनेन प्रकारेण संविदं समयं समोदं सहर्षं यथा भवति तथा कृत्वा देवसमोदन्ताभ्याम्, ताभ्यां श्रीकृष्णार्जुनाभ्यां देवानां समस्तुल्य उदन्तः कीर्तिरूपो वृत्तान्तो ययोस्तौ ताभ्याम्, तथा भवदवसरसमयाभ्यां भवत् अवसरसमयः तत्समीपगमनकालः ययोस्तौ ताभ्याम्, तथा सरसमयाभ्यां सरसः प्रागुद्दिष्टया श्रीकृष्णाज्ञया तत्सभासाधनोद्योगेन सरसो मयो मयासुरो ययोस्ताभ्यामथानन्तरं धर्मात्मजो युधिष्ठिरः ताभ्यां प्रापे । तत्समीपं तौ यातावित्यर्थः ॥

तेन च तरसा रचिता सभा नरेन्द्राय चारुतरसारचिता ।
तां च सदानन्दत्वादुद्गतपुलकोऽविशत्स दानं दत्त्वा ॥ २८ ॥

तेन च मयेन चारुतरसारचिता चारुतराणि साराणि वस्तूनि तैश्चिता व्याप्ता सभा नरेन्द्राय राज्ञे युधिष्ठिराय तरसा बलेन यावच्छक्ति रचिता कृता । स च युधिष्ठिरः सदानन्दत्वादुद्गतरोमाञ्चः सन् दानं दत्त्वा तां सभामविशत् ॥

द्रष्टुमना मयजातां समागमत्तां सभामनामयजाताम् ।
सततमुदारा जनता तस्थौ तत्रैव सा मुदा राजनता ॥ २९ ॥

उदारा महती कुलेन वृत्तेन वा जनता जनानां समूहस्तां मयजातां मयाज्जातां सभां द्रष्टुमनाः समागमत् । कीदृशीं ताम् । अनामयजाताम् अनामयेन कुशलेन जातां संपन्नाम् । सततं च उदारा कुलवृत्ताभ्यां जनता जनसमूहः तत्रैव मुदा हर्षेण तस्थौ । कीदृशी । राजनता राजभिः क्षत्रियैर्नता स्तुता । 'राजा स्यात्क्षत्रिये नृपे' इत्यमरः ॥

अमलीमसभावं तं द्रष्टुमना मुनिरनुत्तमभावन्तम्[1] ।
वीणाहस्तो भरतश्रेष्ठं समगाज्जगदनुग्रहस्तोभरतः ॥ ३० ॥

अनुत्तमभावन्तमविद्यमाना उत्तमा यस्याः सकाशात्सा अनुत्तमा तादृशी चासौ भा दीप्तिः सा विद्यते यस्य सोऽनुत्तमभावान् तादृशममलीमसभावं शुद्धभावयुक्तं तं द्रष्टुमनाः वीणाहस्तो वीणायुक्तो मुनिर्नारदमुनिर्भरतश्रेष्ठं युधिष्ठिरं समगात् समागतः । कीदृशः । जगदनुग्रहस्तोभरतो जगतोऽनुग्रहस्तोभः कृपाधिक्यं तत्र रतः ॥

स वचोभी राजनयं निगद्य निखिलं धियो गभीरा जनयन् ।
आत्तपरमसौमुख्यं नृपमशिषत्कर्तुमध्वरमसौ मुख्यम् ॥ ३१ ॥

सोऽसौ नारदमुनिर्निखिलं राजनयं राजनीतिं निगद्य अनुशास्य गभीराः सूद्रर्काः धियो बुद्धीर्वचोभिर्जनयन्नुत्पादयन् आत्तपरमसौमुख्यम् आत्तं परमसौमुख्यं सुमुखत्वं हृष्टवदनत्वं येन स तादृशं नृपं मुख्यमध्वरं राजसूयं कर्तुमशिषदाज्ञापयामास ॥

सोऽपि समुद्यदुपायः स्वं सूतं प्राहिणोत्समुद्यदुपाय ।
सद्यः सादरहसितं हरिरपि कुरुराजमाससाद रहसि तम् ॥ ३२ ॥

सोऽपि युधिष्ठिरः समुत् सह मुदा तया वर्तते यः सः । तथा समुद्यदुपायः समुद्यत् कर्तुं मनसि भ्रमन् उपायः कर्तव्यतादिः यस्येदृशः सन् यदुपाय यदून् पाति रक्षतीति यदुपः श्रीकृष्णस्तस्मै सूतं प्राहिणोत् । कथं कृत्वा । सादरहसितं सह आदरेण हसितेन च वर्तते यस्मिन् कर्मणि तथा प्राहिणोत् । हरिरपि तं कुरुराजं (राज)युधिष्ठिरं रहसि मिथ आससाद ॥

तथ्यगिरा संधाय प्रभुणा स प्राहिणोज्जरासंधाय ।
दधतमफल्गु नवं तं हार्दं हरिमेव भीमफल्गुनवन्तम् ॥ ३३ ॥

स युधिष्ठिरस्तथ्यगिरा तथ्या सत्या गीर्यस्य स तादृशेन प्रभुणा श्रीकृष्णेन संधाय मिलित्वा अफल्गु बृहत् नवं हार्दं सौहार्दं दधतं तं हरिमेव श्रीकृष्णमेव जरासंधाय प्राहिणोत् । वधार्थमिति शेषः । हरिं कीदृशम् । भीमफल्गुनवन्तं भीमश्च अर्जुनश्च तौ विद्येते यस्य स तादृशम् ॥

सोऽपि बृहद्रथजन्तु प्रविश्य मागधपुरं बृहद्रथजं तु ।
मारुतिना वधमनयन्निगडितनृपतिं रणावनावधमनयम् ॥ ३४ ॥

सोऽपि श्रीकृष्णो बृहद्रथजन्तु बृहन्तो रथा जन्तवो जनाश्च यस्मिंस्तत् तादृशं मागधपुरं प्रविश्य मारुतिना वायुपुत्रेण भीमेन करणेन बृहद्रथजं जरासंधं वधमनयत् । कस्याम् । रणावनौ रणभूमौ । कीदृशं बृहद्रथजम् । निगडितनृपतिं निगडिता बद्धा नृप-

1. 'रनुत्तमसभावन्तम्' ग.

तयो येन स तादृशम् । पुनः कीदृशम् । अधमनयमधमानां नयः अधमो वा नयो यस्य स तादृशम् ॥

अथ सदुपायनयोगामनुजैर्निर्जित्य लसदुपायनयो गाम् ।
स्वनिचयमतनुतयागं दधन्नृपो राजसूयमतनुत यागम् ॥ ३५ ॥

अथानन्तरं नृपो राजा युधिष्ठिरः सदुपायनयोगां सतां शोभनानामुपायनानां ढौकनकानां योगः यस्यां सा तादृशीं गां भूमिमनुजैर्भीमादिभिर्निर्जित्य राजसूयं यागं क्रतुमतनुत । कीदृशो नृपः । लसदुपायनयः लसन्त उपायाः सामादयो यस्य स तादृक् नयश्च यस्य सः । [1]कीदृशं यागम्—अतनुतया महत्त्वेन स्वनिचयमगं स्वस्य धनस्य निचयः समूहो यस्मिन् स तादृशमगं पर्वतं महान्तं धनराशिमिवेत्यर्थः ॥

तं गुरुतरकरभारप्रभुग्नकण्ठोष्ट्रकाश्वतरकरभार ।
वारिधिवेलापालीवेष्टितभूवेष्टसंभवेलापाली ॥ ३६ ॥

वारिधीनां या वेलास्तासां या पाल्यः पङ्क्तयस्ताभिर्वेष्टितो यो भूवेष्टो भूवलयस्तस्मात्संभवो येषां तादृशा ये इलापा इलां भूमिं पान्तीति इलापा राजानस्तेषामाली पङ्क्तिः सा वारिधिवेलापालीवेष्टितभूवेष्टसंभवेलापाली कर्त्री तं युधिष्ठिरमार ययौ । आरेति 'ऋ गतौ' इत्यस्य धातोर्लिटि रूपम् । कीदृशी । गुरुतरो यः करभारो राजदेयांशस्य यो भारस्तेन प्रभुग्नकण्ठाः उष्ट्राः क्रमेलकाः, अश्वतराः, करभाः उष्ट्रशावाः, रलयोरैक्यात् कलभाः करिशावा वा, यस्याः सा गुरुतरकरभारप्रभुग्नकण्ठोष्ट्रकाश्वतरकरभाः । 'गोभूवाचस्त्विला' इत्यमरः । राजग्राह्यांशमुष्ट्रादिभ्यो भारं विधाय राजावली तमुपाययावित्यर्थः ॥

अधिकतरामेयजने न्ययुङ्क्त धर्मात्मजोऽभिरामे यजने ।
अवगतनानामनुजं सहदेवं पूजने जनानामनुजम् ॥ ३७ ॥

धर्मात्मजो युधिष्ठिरोऽधिकतरामेयजने अधिकतरा अमेया मातुमशक्या जना यत्र स तादृशे अभिरामे रम्ये यजने राजसूये अवगतनानामनुजमवगताः विदिता नानाप्रकारा मनुजा यस्य स तादृशमनुजं कनिष्ठं भ्रातरं सहदेवं जनानां पूजने न्ययुङ्क्त आज्ञापयत् ॥

अपि च विरोचितवेदीभागमपृच्छद्गुरुं गिरोचितवेदी ।
इह शान्तनवैकस्मै वदार्घ(र्घ्य)पूजां नराय तनवै कस्मै ॥ ३८ ॥

अपि चेति पक्षान्तरे । स धर्मात्मजो युधिष्ठिरो गिरा वाचा उचितं वेत्तीति तादृक् गुरुं ज्येष्ठं भीष्ममपृच्छत् । कीदृशं गुरुम् । विरोचितवेदीभागं विरोचितो मण्डितो वेदीभागो यजनार्थं वेदीभागो येन स तादृशम् । किमित्यपृच्छदित्याह—हे शान्तनव हे

---

१. 'पुनः कीदृक् । अतनुतया महत्त्वेन स्वनिचयं स्वस्य धनस्य निचयः समूहस्तमगं पर्वतम् । धनराशिमिवेत्यर्थः । दधत्' इति व्याख्यानं वरं प्रतीयते.

भीष्म, एकस्मै कस्मै नराय इह मखे अर्घ(र्घ्य)पूजामग्र्यार्घ(र्घ्य)पूजां तनवै कुर्वे [इति वद] ॥

इति सदृशं तनुजेन प्रोक्ते धर्मस्य वचसि शंतनुजेन ।
उक्तं तोयजनेत्रप्रान्ते प्रश्नोऽयमनुचितो यजनेऽत्र ॥ ३९ ॥

इति एवंप्रकारेण धर्मस्य तनुजेन धर्मात्मजेन युधिष्ठिरेण वचसि उक्ते सति शंतनुजेन भीष्मेण उक्तम् । किमत्रोचदित्याह—तोयजेति । हे तोयजनेत्र तोयजवत् कमलवत् नेत्रे यस्य स तादृशे । अत्र यजने यज्ञे अयं प्रश्नः प्रान्ते अनुचितः किमित्याह ॥

पुनः किमाह—

किं तुलितामर साक्षादवतीर्णं भागमेव तामरसाक्षात् ।
दानवसेना घ्नन्तं स्वामिनमेनं न बुध्यसेऽनाद्यन्तम् ॥ ४० ॥

हे तुलितामर तुलिताः सत्त्वप्रकृतितया सदृशा अमरा यस्य स तादृश, तामरसाक्षात् पुण्डरीकाक्षात् श्रीविष्णोरेव साक्षाद्भागमंशमवतीर्णमनाद्यन्तमेनं स्वामिनं कृष्णं न बुध्यसे काका । पुनः कीदृशमेनम् । दानवसेना असुरचमूर्घ्नन्तं खण्डयन्तम् ॥

दशावतारैः श्रीकृष्णं स्तौति—

जननिलयो नित्या गा यश्च विचिक्ये कृताब्जयोनित्यागाः ।
कर्तुमिव स्वान्वेषस्फुटनिष्क्रयमक्षिजितविवस्वान्वेषः ॥ ४१ ॥

तमेनं स्वामिनं कम् । यश्चैष स्वामी कृताब्जयोनित्यागाः कृतोऽब्जयोनेर्ब्रह्मणस्त्यागो याभिस्ताः । दैत्येन्द्रैर्ब्रह्मणो हस्ताद्बलादाच्छिद्य वेदानां हरणात् । यद्वा ब्रह्मणापि तासां दुरधिगमत्वात् कृताब्जयोनित्यागाः, अनाद्यन्ता गा वाचो वेदरूपा विचिक्ये नु अन्वेषयदिव । किं कर्तुम् । स्वान्वेषस्फुटनिष्क्रयं स्वस्य योऽन्वेषस्तस्य यः स्फुटं निष्क्रयो मूल्यं तं कर्तुम् इव । यथाहमेताभिर्गोभिर्वेदरूपाभिरन्विष्टो मार्गितः तथाप्यहमेतासामन्वेषणं करोमीत्यत इव ता विचिक्ये । यः कीदृशः । जननिलयो जनानामाश्रयः । पुनः कीदृशः । अक्षिजितविवस्वान् अक्ष्णा तेजोमयत्वाजितः सूर्यो येन सः । प्रलयाम्भोधेर्वेदानुद्धारेत्यर्थः ॥

उदधिपयश्चक्रान्तः कच्छपवेशं विधाय यश्च क्रान्तः ।
पृष्ठेनागाभोऽगं मन्दरमुदधादुदूढनागाभोगम् ॥ ४२ ॥

तमेनं स्वामिनं कम् । य एष स्वामी उदधिपयश्चक्रान्तः उदधिपयसां यच्चक्रं समूहः

---

१. 'तोयजनेत्रस्य पुण्डरीकाक्षस्य प्रान्तं सामीप्यं यत्रैतादृशेऽत्र यजनेऽयं प्रश्नोऽनुचितः' इति व्याख्यानमपि वरम्. २. 'जलनिलयो' इति ग-पुस्तकपाठानुसारेण तु 'यश्चैष जलनिलयो मत्स्यो भूत्वा' इति व्याख्यानमुत्तरश्लोकानुसरण्या बोध्यम्.

तस्यान्तः[1] यः कच्छपवेशं कूर्मवेशं कृत्वा क्रान्तः विक्रान्तपादः सन् पृष्ठेन मन्दरमगं मन्दरपर्वतमुदधात् दधार। कीदृशो यः। अगाभः पर्वततुल्यः, आगाभो वा आसमन्तात् गच्छतीति आगा तादृशी आभा यस्य सः। मन्दरमगं कीदृशम्। उदूढनागाभोगमुदूढा धृता नागानां सर्पाणामाभोगाः फणाः काया वा येन स तादृशम्॥

यश्च धरण्याक्षेपस्फुटवैरिण्युपगते हिरण्याक्षेपः।
सपदि वराहवपुष्टां तामुद्धर्तुं दधौ वराहवपुष्टाम्॥ ४३॥

तमेनं स्वामिनं कम्। यश्चैष स्वामी धरण्याक्षेपस्फुटवैरिणि धरणेर्भूमेर्य आक्षेपो हरणं तेन स्फुटं वैरिणि शत्रौ हिरण्याक्षनाम्नि असुरे सति सपदि तत्क्षणं वराहवपुष्टां वराहवपुषि आदिसूकरवपुषि तिष्ठतीति वराहवपुष्ठा तां भूमिमुद्धर्तुमपो दधौ। याम्योऽद्भ्यः सा भूमिरुद्धृता इत्यर्थः। पुनः कीदृशीं तां भूमिम्। वराहवपुष्टां वराहवेषु उत्कृष्टयुद्धेषु दानवैः सह कृतेषु रक्षिता ताम्॥

धृतनरसिंहाकारं रिपुगणमानीय लसदसिं हाकारम्।
योऽस्तरुगरिमाशूरःस्थले नखैरभिनदधिकगरिमा शूरः॥ ४४॥

तमेनं स्वामिनं कम्। य एष स्वामी लसदसिं लसन् स्फुरन्नसिर्यस्य स तादृशमरिगणं शत्रुसमूहं हाकारं हा इति तर्जनाय हाकारमानीय संतर्ज्य अस्तरुग् अस्ता दूरं गता रुग् रोषो यस्य स तादृक् धृतनरसिंहाकारं धृतो नरसिंहाकारो यस्मिन् कर्मणि तत्। क्रियाविशेषणमेतत्। तथा आशु शीघ्रमुरःस्थले अरिं शत्रुं हिरण्यकशिपुं नखैरभिनद् बिभेद। यः कीदृशः। अधिकगरिमा अधिकं गरिमा गुरुत्वं यस्य सः। पुनः कीदृशः। शूरो महाशूरः॥

अवनतदेवामनतामातन्वानः सतां वामनताम्।
योऽधिकतरसन्नेहे दैत्यबले बलिमपास्तरसं नेहे॥ ४५॥

तमेनं स्वामिनं कम्। य एष स्वामी अवनतदेवाम् अवनता दारुवदवनता देवा यस्याः सा ताम्। तथा—अनतां न नता नम्रा कस्यचित् तादृशीम्। तां प्रसिद्धां वामनतां वामनावतारत्वम् आतन्वानः सः। यद्वा—सतां साधूनामनतामनस्य प्राणस्य भावः तां प्राणत्वं प्राणरूपाम्। सतां प्राणप्रियां वामनतामित्यर्थः। अधिकतरसन्नेहे अधिकतरं सन्ना अवसन्नेहा चेष्टा यस्य स तादृशे दैत्यबले सति। त्रिविक्रमरूपेणेत्यर्थः। अतश्चापास्तरसं त्यक्तत्रैलोक्यराज्यरसं बलिं बलिदानवं नेहे बबन्ध। 'णह बन्धने' धातुः॥

---

१. 'तस्यान्तर्मध्ये कच्छपवेशं' इति व्याख्यानं भवेत्. २. 'अप उपगते प्रविष्टे सति तां भूमिमुद्धर्तुं सपदि वराहवायोत्कृष्टयुद्धाय पुष्टां ससारां वराहवपुष्टामादिवराहशरीरत्वं दधौ' इति व्याख्यानं कुतो नाङ्गीकृतम्.

अजनि च यो गवि रामः कुले भृगूणामसंन्नियोगविरामः ।
यो धृतपरशू राज्ञश्चकर्त समरे निरस्तपरशूराज्ञः ॥ ४६ ॥

तमेनं स्वामिनं कम् । य एप स्वामी असन्नियोगविरामोऽसतां खलानां यो नियोग आज्ञारूपं शासनं तस्य विरामो नाशो गवि भूमौ भृगूणां मुनिवर्याणां कुले रामो भार्गवोऽजनि । यो निरस्तपरशूराज्ञो निरस्ता दूरीकृता परेषां शूराणामाज्ञा येन तादृशः । तथा—धृतपरशुः धृतः परशुः कुठारो येन तादृशः समरे युद्धे राज्ञः क्षत्रियान् चकर्त अच्छिनत् । 'राजा मृगाङ्के क्षत्रिये नृपे' इति मङ्खः ॥

अस्तसमस्तकलङ्कः कपिवलकम्पितसुवेलमस्तकलङ्कः ।
यश्च यमक्षयमनयन्निशाचराणां निकायमक्षयमनयम् ॥ ४७ ॥

तमेनं स्वामिनं कम् । य एप स्वामी अस्तसमस्तकलङ्कोऽस्तो दूरीकृतः समस्तः कलङ्कः पातकोदितो येन स तादृशः । निजभक्तजनस्येति शेषः । तथा—कपिवलेन सुग्रीवहनूमदादिवानरेन्द्रबलेन कम्पिता सुवेलाख्यस्य गिरेर्मस्तके लङ्का दशमुखनगरी येन स तादृशः । अक्षयं क्षयेन विनाशेन रहितम् अनयं नीतिरहितं निशाचराणां रावणादीनां निकायं समूहं यमक्षयं यमसदनम् अनयत् । 'क्षयो निलयकल्पान्तरोगापचयमृत्युषु' इति मङ्खः ॥

गुरुनियमारोहिण्यां जातो मुसलीति समहिमा रोहिण्याम् ।
योऽधित हालापरतामरिसेनामपि चकार हालापरताम् ॥ ४८ ॥

तमेनं स्वामिनं कम् । समहिमा सह महिम्ना वर्तते यः स तादृशो गुरुनियमारोहिण्यां गुरवो महान्तो ये नियमाः पातिव्रतादयस्तानारोहतीति तादृश्यां रोहिण्यां रोहिणीनाम्नि जनन्यां जातो मुसलीति प्रसिद्धः । हालापरतां हालायां सुरायां परस्तत्परस्तस्य भावस्तत्ता तामधित दधे । तथा—योऽरिसेनामपि रिपुचमूमपि हालापरतां हा इति य आलापः प्रसभमारणेन तत्र रता तां तादृशीं चकार ॥

निजमहसा धुतदनुजस्त्रातुं जगन्ति साधु तदनुजः ।
जननमयादवनिलये सति देवक्यां य एप यादवनिलये ॥ ४९ ॥

तमेनं स्वामिनं कम् । य एप स्वामी अवनिलये भूमेर्लये नाशे कल्पान्ते सति निजेन महसा तेजसा धुता दनुजा हिरण्याक्षहिरण्यकशिप्वादयो येन सः । प्राग्जन्मनीत्यर्थः । अत्रावनिलयेसतीति दूरस्थपदत्वेऽपि यमकादौ न दोपः । साधु शोभनं कृत्वा भूयोऽपि जगन्ति त्रातुं तदनुजः तस्य मुसलिनो बलभद्रस्य अनुजः श्रीकृष्णः यादवनिलये यदुगृहे देवक्यां जनन्यां जननं जन्म अयात् प्रापत् । 'या प्रापणे' धातुः ॥

---

१. 'सत्प्रयोग' ग.

दशावतारवर्णनमुपसंहरन्नाह—

जनताः कलिततमोहा भूयोऽप्ययमेव भक्तिकलिततमोहा ।
संहर्ता कल्यन्ते तमृते पूजाः क मतिमता कल्यन्ते ॥ ९० ॥

अयमेव स्वामी भक्तिकलिततमोहा भक्त्या तदेकतानतया ये कलिता भाविता । कलतिः कामधेनुः । तेषां तमोऽज्ञानरूपं हन्तीति तादृशः कलिततमोहाः कलितां युगेन कलहेन वा ततो विस्तृतो मोहोऽज्ञानं यासां ता जनता जनसमूहान् कल्यन्ते कलेस्तुरीयस्य युगस्यान्तस्तत्र भूयोऽपि संहर्ता । कल्किरूपधरत्वेनेत्यर्थः । तमेवमृते मतिमता पुरुषेण पूजा अर्चाः स्तुतिप्रणत्याद्याः क कस्मिन् कल्यन्ते विधीयन्ते ॥

वच इति शान्तनुतनयं माद्रीतनयो निशम्य शान्तनुतनयम् ।
भक्तधियामासाद्यं पुमांसमर्घ्येण पूजयामासाद्यम् ॥ ९१ ॥

माद्रीतनयः सहदेवो यो हि जनानां पूजने राज्ञा नियुक्तः स इत्यनेन प्रकारेण शान्तनुतनयं वचो भीष्मवचः शन्तनुतनयो भीष्मस्तस्येदं निशम्य आद्यं पुमांसमादिपुरुषं श्रीकृष्णमर्घ्येणाष्टाङ्गेन पूजयामास । वचः कीदृशम् । शान्तनुतनयं शान्तैः शमप्रधानैर्नुतः स्तुतो नयो यस्य तत् । आद्यं पुमांसं कीदृशम् । भक्तधियां भक्तजनमतीनामासाद्यम् ॥

अथ रिपुभासामन्तः शिशुपालः प्रविचलत्सभासामन्तः ।
माद्रेयं तमसोढः श्रियः पतिं नैव पूजयन्तमसोढ ॥ ९२ ॥

प्रविचलत्सभासामन्तः प्रविचलन्तः सभायां सामन्तास्तन्मण्डलान्तर्वासिनो राजानो यस्य सः । तथा—रिपुभासां शत्रुदीप्तीनामन्तो नाशः । तथा—तमसा अज्ञानरूपेणान्धकारेणोढो भृतः शिशुपालः चेदिराट् श्रियः पतिं श्रीकृष्णं पूजयन्तं माद्रेयं सहदेवं न असोढ न सेहे ॥

अरिणा कान्तारेण त्रिविक्रमस्त्रुटितशत्रुकान्तारेण ।
सपदि चकार स कृत्तं चेदिपतिं त्रिदशपटलिकारसकृत्तम् ॥९३॥

स त्रिविक्रमः श्रीकृष्णस्त्रुटितशत्रुकान्तारेण त्रुटिताश्छेदिताः शत्रव एव कान्तारा दूरशून्याध्वानो गहना येन तत्तादृशेन । तथा कान्तारेण कान्ता रम्याः शाणोपलसंस्कृता अरा धारा यस्य तत्तादृशेन, अरिणा अरा धारा विद्यन्ते यस्य तत् अरिचक्रं तेन, तं चेदिपतिं शिशुपालं सपदि तत्क्षणं कृत्तं छिन्नं चकार । तस्य शिरश्चिच्छेदेत्यर्थः । स श्रीकृष्णः कीदृशः । त्रिदशानां देवानां पटलिकाः समूहाः । पटल्येव पटलिका तस्या रसः प्रमोदरसस्तं करोतीति त्रिदशपटलिकारसकृत् ॥

स ज्ञानी चेदीने निहते राजा जने च नीचे दीने ।
प्रमुदितमानवराजं समापयत्कर्म हूयमानवराजम् ॥ ९४ ॥

स राजा युधिष्ठिरो ज्ञानी ज्ञानवान् चेदीने चेदीनां जनपदविशेषाणामिनः स्वामी तस्मिन् शिशुपाले निहते तथा नीचे जने च दीने सति प्रमुदितमानवराजं प्रमुदिता मानवराजा नृपा यत्र तत् कर्म राजसूययज्ञाख्यं समापयत्। कीदृशं कर्म । हूयमानव-राजं हूयमानो होमेन संतर्प्यो वरः श्रेष्ठोऽजो विष्णुर्यस्मिन् कर्मणि तत् । 'अजाविष्णुह-रच्छागाः' इत्यनेकार्थेष्वमरः ॥

सं[1] वृहदसूयाध्वरतः पाण्डुसुतस्याथ राजसूयाध्वरतः ।
अधिकधनोपायनतः प्रापत्तापं सुयोधनोऽपायनतः ॥ ९५ ॥

अथानन्तरं सुयोधनो दुर्योधनः पाण्डुसुतस्य युधिष्ठिरस्य राजसूयाध्वरतो राजसूयय-ज्ञाद् हेतोर्वृहदसूयाध्वरतो वृहती यासूयाक्षान्तिस्तस्या योऽध्वा मार्गस्तत्र रतः । तथा—अपायनतोऽपगतोऽयः शुभावहो विधिर्येषां तेऽपाया भाग्यहीनाः । नीचा इत्यर्थः । तैर्नतः प्रणतः, तथा अधिकधनोपायनतः अधिकधनानि यानि उपायनानि ढौकनकानि तेभ्यस्तापं हृदि संतापं प्राप ॥

स खलु सभा लोकनतः सुयोधनः संचरन्सभालोकनतः ।
स्फ[2]टिकमहासालस्य स्खलनेऽभूल्लम्भितापहासालस्यः ॥ ९६ ॥

स सुयोधनः सभाः सह भया दीप्या वर्तते यः स सभा । भाशब्दः क्विन्तः । तथा—लोकनतः लोकैर्नतः प्रणतः, सभालोकनतः सभालोकनार्थे संचरन् अज्ञानेन स्फटिकमहा-सालस्य गल्वर्कमहाप्राकारस्य स्खलने च सति लम्भितापहासालस्यो लम्भितोऽन्यतः प्राप्तोऽपहासश्च तेन हेतुनालस्यमुदासीनता च येन तादृशोऽभूत् ॥

स च वसुधामन्यत्र स्फटिकमयीं संप्रधार्य धामन्यत्र ।
निपपात महासरसः सलिले जनदत्तभूरितमहासरसः ॥ ९७ ॥

स च सुयोधनोऽत्र धामनि सभागृहे संचरन् अन्यत्र स्थले स्फटिकमयीं वसुधां भूमिं संप्रधार्य भ्रमेण निश्चित्य महासरसः सलिले निपपात जलेऽपि स्फटिकमयस्थलभ्रान्त्या पपात । कीदृशः । जनैर्दत्तो भूरितमो हासरसो हस्ततालिकादिना यस्य सः ॥

तं रिपुभीमोक्षान्तः पाञ्चालसुता तथैवभीमोऽक्षान्तः ।
पतितं सलिलेऽहसं[3]तामघृणां हास एव स लिलेह सताम् ॥ ९८ ॥

पाञ्चालसुता द्रौपदी, तथा—रिपुभीमोक्षान्तो रिपूणां या भीर्भयं तस्या मोक्षस्त-स्यान्तो मारणेन तेषां निर्मूलं विनाशक इत्यर्थः । तथा—अक्षान्तो न क्षमावान् भीमो भीमसेनश्चेत्युभौ तं दुर्योधनं सलिले जले पतितमहसताम् । अघृणामित्यादि । स दुर्योधनः सतां सज्जनानामपि तत्र सतां वा लोकानां हास एवाघृणाम् 'एतावानेव हास उचितः'

---

१. 'सुबृहदसूया' ग.　२. 'अधिक' क-ख.　३. 'सतामसूनृणां(?)' ग.

इत्यत्र या घृणा तदभावं लोकानां निर्घृणं कृत्वा जनहासमेव लिलेह आस्वादयत् । जनास्तमहसन्नित्यर्थः ॥

इत्थं वैलक्ष्याणि प्राप्याथ महाजनेन वै लक्ष्याणि ।
नृपतिं कल्यं शस्तं समनुज्ञाप्यागमत्स कल्यंशस्तम् ॥ ५९ ॥

इत्थमनेन प्रकारेण अथानन्तरं वै निश्चये महाजनेन लक्ष्याणि दृश्यानि वैलक्ष्याणि स्फाटिकसालतः स्खलनसरोऽन्तः पतनादीनि त्रपाकराणि प्राप्यापि कल्यं नीरोगं निश्चित्तं प्रशस्तं नृपतिं समनुज्ञाप्य सम्यक् अनुज्ञाप्य ज्ञात्वा स प्रसिद्धः कल्यंशः कलियुगांशः शकुनिस्तन्मातुलस्तं नृपतिं दुर्योधनमगमदुपाजगाम ॥

शकुनिर्मायावी तं पप्रच्छ सुयोधनं क्षमाया वीतम् ।
नृपसुत हेतुं गद मे त्वयि दुःखस्यारिदुःसहे तुङ्गदमे ॥ ६० ॥

क्षमायाः क्षान्तेर्वीतं पतितं सुयोधनं मायावी शकुनिः पप्रच्छ । किमिति । हे नृपसुत, अरिदुःसहे अरिभिर्दुःसहे, तथा तुङ्गदमे तुङ्गो महान् दमः शान्तिर्विनयो वा यस्य तादृशे त्वय्यपि दुःखस्य स्वस्य हेतुं मे गद । त्वन्मनसि किं दुःखमस्तीति मे वदेत्यर्थः ॥

निजदेहविरक्तेन श्रुत्वेति रुषाग्निनेव हविरक्तेन ।
छद्मवलाय निजगदे मूलं तेनापि सौबलाय निजगदे ॥ ६१ ॥

रुषा क्रोधेन हविरक्तेन हविषा घृतेनाक्तोऽभ्यक्तो योऽग्निस्तेनेव । अतिज्वलतेत्यर्थः । एवंभूतेन । तथा निजदेहे विरक्तेन निजशरीरे विरागवता तेन दुर्योधनेन इति श्रुत्वा निजगदे स्वरोगे मूलं निदानं छद्मवलाय छद्मैव बलं यस्य स तादृशाय सौबलाय शकुनये निजगदे उक्तम् ॥

वच्मि ममातुलरम ते रुजं मनो जीविते न मातुल रमते ।
दृष्ट्वा महितां तस्य द्विषतो यज्ञे समृद्धिमहितान्तस्य ॥ ६२ ॥

हे अतुलरम अतुला तुलारहिता रमा लक्ष्मीर्यस्य तस्य संबोधनम् । हे मातुल, रुजं स्वकीयं रोगं ते वच्मि मम मनो जीविते जीवनविषये न रमते । मरणमेव वरमित्यर्थः । अत्र हेतुमाह—अहितान्तस्य अहितानामन्तो यस्मात्तादृशस्य द्विषतो युधिष्ठिरस्य महितां पूजितां समृद्धिं दृष्ट्वा मम मनो जीवनविषयेऽपि न रमते । यद्वा—अो विष्णुस्तस्मात् हितस्यान्तो निश्चयो यस्येति वा ॥

सूचितलोभारत्या नुन्नस्तस्येति सौबलो भारत्या ।
कृतवानक्षरणाय व्यवसायं निजकजीवनक्षरणाय ॥ ६३ ॥

इत्थमनेन प्रकारेण सूचितलोभारत्या सूचिता प्रकटीकृता लोभेन समृद्धिलोभेन अरतिर्यया सा तादृश्या, तस्य दुर्योधनस्य भारत्या वाचा नुन्नः प्रेरितः सौबलः शकुनिरक्षरणाय अक्षो द्यूतं स एव परस्परविवादेन रणस्तस्मै व्यवसायमुद्योगं कृतवान् । वयं द्यूतेन

पाण्डुसुतान् जयेम इति दुर्योधनं सान्त्वयामासेत्यर्थः । अक्षरणाय कीदृशाय । निजकजीवनक्षरणाय निजं कं सुखं जीवनं च तयोः क्षरणाय निर्नाशकाय । सुखजीवितयोरन्तायेत्यर्थः । यद्वा—निजा एव निजका आत्मीयाः पाण्डुपुत्रास्तेषां जीवनं तस्य क्षरणाय नाशायेत्यर्थः ॥

कितवावेकमती तौ धृतराष्ट्रमुपागतौ विवेकमतीतौ ।
सोऽपि सुतस्यालस्यश्रवणान्मतमन्वगात्ततः स्यालस्य ॥ ६४ ॥

तौ शकुनिदुर्योधनौ द्वावपि कितवौ द्यूतविद्याकुशलौ विवेकं कार्याकार्यविचारमतीतावुल्लङ्घितवन्तौ धृतराष्ट्रमुपागतौ । सोऽपि धृतराष्ट्रः सुतस्य दुर्योधनस्यालस्यश्रवणादौदासीन्यश्रवणात् ततः तदनन्तरं स्यालस्य शकुनेर्मतमन्वगात् । अङ्गीचकारेत्यर्थः ॥

तेन च सुतमोदाय प्रचोदितः पाण्डवोऽपि सुतमोदाय ।
सत्वरमायादक्षैः कितवैश्च वृतां सभां स मायादक्षैः ॥ ६५ ॥

सुतमोदाय सुष्ठु तमोऽज्ञानरूपं ददातीति सुतमोदः तादृशाय सुतमोदाय सुतहर्षाय तेन धृतराष्ट्रेण प्रचोदितः प्रेरितः स पाण्डवोऽपि युधिष्ठिरोऽपि मायादक्षैर्मायाविद्भिर्द्यूतविद्यायां दक्षैः कुशलैः कितवैर्द्यूतविद्भिः, अक्षैः पाशकैश्च वृतां सभां स[त्वर] मायादागतः ॥

अथ विदितमहानिकृतिः स्वजीवितस्यैव परमहानिकृति ।
द्यूते भारततनयं जिगाय शकुनिर्विवेकभारततनयम् ॥ ६६ ॥

अथानन्तरं विदितमहानिकृतिः विदिता महानिकृतिर्महाशठत्वं यस्य स तादृक् शकुनिः स्वजीवितस्यैव परमहानिकृति अतिहानिकरे द्यूते भारततनयं युधिष्ठिरं जिगाय अजयत् । कीदृशम् । विवेकभारततनयं विवेकभारे ततो विस्तीर्णो नयो यस्य तम् ॥

सोऽपि च वसुधान्यस्य द्रव्यस्यान्ते पणाय वसुधां न्यस्य ।
भ्रातॄंश्चतुरो दारानात्मोपेतान्न्यधत्त चतुरोदारान् ॥ ६७ ॥

सोऽपि च युधिष्ठिरो वसुधान्यस्य वसुधाया भूमेः सकाशादन्यस्य गजतुरगरथादेर्द्रव्यस्यान्तेऽवसाने वसुधां भूमिं पणायाक्षग्लहाय न्यस्य चतुरो भ्रातॄन् भीमादीन्, तथा दारान् द्रौपदीम् आत्मोपेतान् आत्मानं चेत्यर्थः । पणाय न्यधत्तास्थापयत् । कीदृशान् भ्रातॄन् । चतुरोदारान् चतुरा निपुणाश्च ते उदारा उदारचित्ताश्च तान् ॥

अथ दुःशासनमुदितश्रीरित्यशिषन्नृपोऽरिशासनमुदितः ।
दर्परसादासीनः कृष्णां त्वमिहानयस्व सा दासी नः ॥ ६८ ॥

अथानन्तरं दुर्योधनो दुःशासनं भ्रातरमिति वक्ष्यमाणप्रकारेण अशिषदाज्ञापयामास । कीदृशः । उदितश्रीरुदिता श्रीर्यस्य । तथा—अरिशासनमुदितोऽरीणां पाण्डवानां यत् शासनं द्यूतजयेन नियमनं तेन मुदितः । तथा—आसीनः । कस्मात् । दर्परसादहंकार-

रसात्। किमित्याज्ञापयत्—हे दुःशासन, त्वं कृष्णां द्रौपदीमिहानयस्व, सा नोऽस्माकं दास्यस्ति॥

स च तुलिततमालेषु प्रवरावभृथाप्लुतेषु ततमालेषु।
जगृहे वक्रकचेषु द्रुपदसुतां सकलकौरवक्रकचेषु॥ ६९॥

स च दुःशासनो द्रुपदसुतां द्रौपदीं वक्रकचेषु कुटिलकेशेषु जगृहे। कीदृशेषु। तुलिततमालेषु तुलितानि तमालानि तमालपुष्पाणि अतिकार्ष्ण्यात् यैस्ते तादृशेषु। पुनः कीदृशेषु। ततमालेषु तता विस्तृता मालाः पुष्पमाला येषु ते तादृशेषु। पुनः कीदृशेषु। सकलकौरवक्रकचेषु सकलकौरवाणां क्रकचेषु। दारणेष्वित्यर्थः॥

सोऽथ दुरोदरतान्तां कौन्तेयानां विषादरोदरतां ताम्।
कर्षन्नचलज्जायां सभां प्रतिपदं न्यधत्त न च लज्जायाम्॥ ७०॥

अथानन्तरं स दुःशासनो दुरोदरतान्तां दुरोदरेण द्यूतेन तान्तां खिन्नाम्, तथा विषादरोदरतां विषादेन दुःखेन यो रोदो रोदनं तस्मिन् रता लग्ना तां तादृशीं कौन्तेयानां पाण्डवानां जायां द्रौपदीं कर्षन्नचलत्। तथा—सभां प्रतिपदं न्यधत्तास्थापयत्। न पुनर्लज्जायां पदं न्यधत्त। अत्र दुरोदरशब्दोऽपि द्यूतवाचकोऽनेकार्थेषु 'आश्लिष्य दुर्गं गिरिकन्दरोदरं क्रीडन्त्यमुष्मिन्सततं दुरोदरम्' इति यमकान्निरुक्तिकारोऽपीति गोवर्धन इति रायमुकुट्याम्॥

प्राणसमा जाया सा पार्थानां प्राप्तकुरुसमाजायासा।
अरुदद्बालापारं दुःखमुपेता सवैक्लवालापारम्॥ ७१॥

प्राप्तकुरुसमाजायासा प्राप्तः कुरुसमाजात् कुरुसमूहादायासः खेदो यया सा पार्थानां पाण्डवानां सा प्राणसमा प्रिया जाया द्रौपदी अपारं दुःखमुपेता प्राप्ता सवैक्लवालापा सदैन्यालापा सती अरमत्यर्थमरुदद्रुरोद॥

अयि निर्मर्यादान्ताः कुरुकुलवर्याः कुरुध्वमर्या दान्ताः।
मय्यनुकम्पापरतां मतिमेतां त्यजत चाधिकं पापरताम्॥ ७२॥

अयि इष्टामन्त्रणे। अयि कुरुकुलवर्याः कुरुकुले वर्या अग्रिमा अर्याः प्रभवो दान्ताः शान्तिस्वरूपाः तत्संबोधनम्। यूयं निर्मर्यादान्ता निर्गतो मर्यादान्तो मर्यादास्वरूपं येषां ते तादृशाः एतादृगवस्थामपि मां प्रेक्ष्यापालनात्। मयि मद्विषये अनुकम्पापरतां कृपापरतां कुरुध्वम्। तथा—एतामधिकमतिशयेन पापरतां मतिं बुद्धिं त्यजत च॥

राजन्दयितापत्य प्रियां स्नुषां त्वमपि तावदयि तापत्य।
कथमधुना सहसे मां विकृष्यमाणामसाधुना सहसेमाम्॥ ७३॥

अयि तापत्य तापतीवंशज, राजन् धृतराष्ट्र, दयितापत्य दयितानि अपत्यानि पुत्रा यस्य तत्संबोधनम् । त्वमपि सहसा तत्क्षणमेव असाधुना दुःशासनेन विकृष्यमाणामिमां मां प्रियां स्नुषामधुना कथं सहसे क्षमसे ॥

भरणीयाहं तव च श्वशुर न मे श्रूयते त्वया हन्त वचः ।
गान्धार्यम्ब तवार्ये न समोपेक्षा सुते स्वयं वत वार्ये ॥ ७४ ॥

हे श्वशुर धृतराष्ट्र, तव कर्तुरहं भरणीया रक्ष्या । हन्त कष्टे । त्वया मे वचो न श्रूयते । हे गान्धारि अम्ब मातः, हे आर्ये, वत कष्टे स्वयं वार्ये निवारणीये सुते दुःशासने (तव) उपेक्षा अवहेला न समा न सदृशी । न युक्तेत्यर्थः । एतं स्वसुतमीदृशेऽनर्हे कर्मणि रतं निवारयेत्यर्थः ॥

द्रौपदी च श्वश्रूश्वशुरयोः स्वावस्थां तादृशीं निवेद्येदानीं परोक्षमपि सन्तं त्रिजगत्साक्षिणं जगन्नाथं श्रीकृष्णमपि निजमत्राणत्वं निवेदयति—

सुखिता यदुपायेन त्रीणि रमन्ते जगन्ति यदुपा येन ।
क्षत्रसमाजानीतां साक्षात्पुरुषोत्तमः स मा जानीताम् ॥ ७५ ॥

येन यस्य श्रीकृष्णस्योपायेन हेतुना सुखिताः यदुपाः यदुनाथास्त्रीणि जगन्ति त्रीन् लोकान् सुखिता रमन्ते । ऐहिकामुष्मिकसुखभाज इत्यर्थः । साक्षात् स पुरुषोत्तमः पुरि शेते इति पुरुष आत्मा पुरुषोत्तमः परमात्मस्वरूपोऽयं श्रीकृष्णः तेनोपायेन क्षत्रसमाजानीतां क्षत्रसमाजे क्षत्रियसभायामानीतां मां जानीतां जानातु । मां रक्षतु इति भावः । त्रीणि जगन्ति 'कालभावाध्वदेश—'इति द्वितीया ॥

यदुवर हा गोविन्द त्वं हृदि मत्क्लेशजं महागो विन्द ।
व्यसनानामननुभवान्भक्तजनानां तनोति नाम ननु भवान् ॥ ७६ ॥

हे यदुवर हे गोविन्द, हा कष्टे, मत्क्लेशजं मत्कष्टोद्भूतं महागो महापराधं हृदि स्वकीयमनसि त्वं विन्द जानीहि । 'आगः पापापराधयोः' इति मङ्खः । नाम निश्चये । ननु प्रश्ने । भवान् भक्तजनानां भक्तलोकानां व्यसनानामननुभवान् तनोति । भवद्भक्तजनाः कदापि व्यसनं नानुभवन्तीत्यर्थः ॥

रुदती कृष्णा दरतः प्रारक्षिष्यत न यदीति कृष्णादरतः ।
घोरो नाशस्तस्य ध्रुवमभविष्यज्जनस्य नाशस्तस्य ॥ ७७ ॥

इत्यनेन प्रकारेण दरतो भयात् रुदती कृष्णा द्रौपदी अस्ति । कृष्णादरतः श्रीकृष्णादरात् । श्रीकृष्णेनादृतामित्यर्थः । यदि न मां यूयं प्रारक्षिष्यत, तर्हि तस्य मदुपेक्षकस्य अशस्तस्य अमङ्गलस्य जनस्य ध्रुवं निश्चयेन घोरः कठिनो नाशो न भविता काका । अपि तु भवत्येवेत्यर्थः ॥

द्रौपदी पुनः किमित्याह—

बुद्धावासीदेव स्फुटं प्रभो यदपि दूरवासी देवः ।
प्रतताप तदधिकर्णं भूत्वा तं भूय एव पतदधिकर्णम् ॥ ७८ ॥

प्रभो श्रीकृष्ण देवो जगन्नाथो दूरवासी, इतः सकाशाद्दूरस्थले स्थितः स्वयमस्तीति यदपि मे बुद्धावेव स्फुटमासीत् । तथापि तत् मम चिन्ता ध्यानमेतादृगवस्थवैश्वसोदितं मद्वचनं वा तस्य देवस्य अधिकर्णं कर्णे श्रवसि पतितं सत् अधिकर्णमधिकमृणमधिकर्णं भूत्वा संशोधनादनिर्यातनात् तं देवं दूरवासिनमपि भूय एव प्रतताप श्रुतं सत् अधिकमेवातापयत् इति जाने इत्यर्थः ॥

न मतिं सा रोदात्तामकम्पयद्धर्मजस्य सारोदात्ताम् ।
जयति तदा वै रिपुमांल्लोकाकुष्टो भवेद्यदा वैरिपुमान् ॥ ७९ ॥

सा द्रौपदी सारोदात्तां सारा श्रेष्ठा चासावुदात्ता च तां तादृशीं धर्मजस्य युधिष्ठिरस्य तां प्रसिद्धां मतिं रोदाद्रोदनाद्धेतोर्नाकम्पयत् । द्रौपदीरोदनेन धर्मराजमतिः किमपि विकारं नागमदित्यर्थः । अत्रार्थान्तरन्यासमाह—वै निश्चये पुरुषो रिपुमान् शत्रुयुक्तः संस्तदेव जयति । तदा कदा । यदा वैरिपुमान् वैरी चासौ पुमान् वैरिपुरुषो यदा लोकाकुष्टो भवति लोकेन आक्रुष्टो निन्दितो भवति तदैव जयति । शत्रुजनस्य लोकाक्रोश एव जयलक्षणं तत्स्पर्धिन इत्यर्थः ॥

प्रतिपन्ना सन्नार्या शरणार्थमभूदशोभनासन्नार्या ।
केवलमच्छविकर्णा निर्मलविदुरा सभेयमच्छविकर्णा ॥ ८० ॥

इयं सभा सन्नार्या सती चासौ नारी द्रौपदी तया शरणार्थं प्रतिपन्ना सती अशोभनासाधुरभूत् । कथंभूतापि । आसन्नार्या आसन्ना अर्याः प्रभवः, आर्या वा महान्तो यस्याम् । यद्वा—सन्नाः तत्समाचारं वीक्ष्य खिन्नचेतसः, अर्या यस्यां सा । परंतु केवलं सा सभा अच्छविकर्णा अच्छो निर्मलचित्तः सहृदयो विकर्णो धार्तराष्ट्र एक एव यस्यां सा । तस्य स्वभ्रातृंस्त्यक्त्वा पाण्डवपक्षाश्रयणात् । तथा—निर्मलः स्वच्छचित्तो विदुरो यस्यां सा । तथा—अच्छविः कलुषचित्तः कर्णो राधेयो यस्यां सा ॥

प्राप्तवराक्षसभा सा कृता विवस्त्रा च तेन राक्षसभासा ।
तत्स्यजनेऽनवसाना ददृशेऽन्यच्चाम्बरमनेन वसाना ॥ ८१ ॥

राक्षसभासा राक्षसस्येव भा दीप्तिर्यस्य स तादृशेन तेन दुःशासनेन सा द्रौपदी विवस्त्रा नग्ना च कृता । कीदृशी । प्राप्ता वरा 'मत्पतयः द्यूतदासा मा भवन्तु' इत्याद्या धृतराष्ट्रेण दत्ता प्राप्ता च अक्षसभा यया सा । तत्स्यजनेति । तदम्बरं त्यक्त्वा अनवसाना वस्त्राणामवसानरहिता अन्यदम्बरं वस्त्रं वसाना सानेन दुःशासनेन ददृशे ॥

तत्र सदस्युर्वसनं जातं जातं नयन्स दस्युर्वसनम् ।
विक्लवतावद्धास्यः श्रान्तो भूमौ पपात तावद्धास्यः ॥ ८२ ॥

स दुःशासनो दस्यू रिपुः । 'रिपुतस्करयोर्दस्युः' इति मङ्खः । तत्र सदसि सभायामुर्वसनमुरु.असनं क्षेपणं यस्य तदेवंविधं जातं जातं वसनं वस्त्रं नयन्नपनयन् श्रान्तः सन् विक्लवतया वद्धमास्यं मुखं यस्य स विक्लवतावद्धास्यो हास्यो लोकैर्हसनीयस्तावत् भूमौ पपात ॥

मुखजितविधुतामरसां कृष्णां दुःशासनेन विधुतामरसाम् ।
वीक्ष्य सभामानीतां भीमश्चुक्षोभ विपुलभा मानी ताम् ॥ ८३ ॥

मुखेन जितो विधुश्चन्द्रः, तामरसं पद्मं, यया सा तां मुखजितविधुतामरसाम् । तथा—दुःशासनेन विधुतां कम्पिताम् । तथा—अरसां कुत्रापि वस्तुनि रसरहिताम् । यद्वा रलयोरैक्यात् अरसामलसां तां द्रौपदीं सभां सदोऽभ्यन्तरमानीतां वीक्ष्य भीमश्चुक्षोभ क्षोभं प्राप । कीदृशः । विपुलभा विपुला भा यस्य सः । तथा—मानी मानवान् ॥

तरसैव क्षोभित्वादुपेत्य दुःशासनस्य वक्षो भित्त्वा ।
जनितरसं यतितस्य क्षतजं पास्यामि नैव संयति तस्य ॥ ८४ ॥
यद्यरिसेनाशमदः शतं नयिष्यामि वैशसे नाशमदः ।
क्रूराणामहितानां गतिं न यायां सुकर्मणा महितानाम् ॥ ८५ ॥
इत्थंवादी प्रसभं भीमः क्षुभितः क्षणादिवादीप्रसभम् ।
परिघममन्दारुणया दृष्ट्या प्रैक्षिष्ट पृथुतमं दारुणया ॥ ८६ ॥

इत्थं वदतीति इत्थंवादी । इत्थंप्रतिज्ञाकृदित्यर्थः । भीमो भीमसेनः प्रसभं बलात्कारेण क्षणादिव क्षुभितः सन् पृथुतमं महान्तं परिघमायुधविशेषं दारुणया कठिनया अमन्दारुणया बहुलोहितया दृष्ट्या प्रैक्षिष्ट आलोकयामास । कथम् । आदीप्रसभमादीप्रा दीपिता सभा यत्र तत् । तथा च सभापर्वणि—'इत्युक्त्वा भीमसेनस्तु कनिष्ठैर्भ्रातृभिर्वृतः । मृगमध्ये यथा सिंहो मुहुः परिघमैक्षत ॥' इति । इत्थंवादी कथमित्याह—तरसैवेति । अत्राग्रिमवृत्तस्थेन यदीत्यनेन संबन्धः । क्षोभित्वात् क्षोभयुक्तत्वात् तस्य प्रसिद्धस्य दुःशासनस्य वक्षस्तरसा बलेन भित्वा यतितस्य सयत्नस्य । युद्धे इत्यर्थः । जनितो रसो येन तत् जनितरसं क्षतजं रक्तं संयति युद्धे यदि न पास्यामि । तथा—अहम् अरिसेनाशमदः शत्रुचमूशान्तिदः वैशसे एवं कष्टे सति क्रूराणां कठिनानामहितानां शत्रूणामद एतत् शतम् अदः शतं धार्तराष्ट्राणां यदि न शमं नयिष्यामि हनिष्यामि, तदा सुकर्मणा सुकृतेन महितानां पूजितानां सुकृतिनां गतिं न यायां न गच्छामि । इत्थंवादी इत्थं प्रतिज्ञां कृत्वा परिघमैक्षतेति संबन्धः ॥

सोऽनलभाव्यापारैरङ्गानां निजमतं विभाव्यापारैः ।
शान्तिमनीयत तेन भ्रातापनयाद्यचेतनीयततेन ॥ ८७ ॥

अपारैरङ्गानामनलभाव्यापारैः अनलस्याग्नेर्या भा तस्या व्यापारैस्तैः । क्रोधाग्निज्वालाभिरित्यर्थः । निजमतं निजाभिप्रायं प्रागुक्तं विभाव्य प्रकटीकृत्य स्थितः स भीमसेनस्तेन भ्रात्रा युधिष्ठिरेण शान्ति शमं क्षमारूपमनीयत । कीदृशेन । अपनयाद्यचेतनीयततेन अपनयाद्यैर्दुर्व्यापारैरचेतनीयमबोधनीयम्। अगम्यमित्यर्थः। एवंविधं ततं विस्तारोऽर्थान्मतेर्थस्य तादृशेन ॥

तदनु स्मयमानेन द्रौपद्यै दर्पमधिकमयमानेन ।
स्वीकृतराष्ट्रेणोरुः प्रदर्शितः सदसि धार्तराष्ट्रेणोरुः ॥ ८८ ॥

तदनु तदनन्तरं स्वीकृतं द्यूतविधिना निर्जित्य स्वीकृतं राष्ट्रं येन स स्वीकृतराष्ट्रस्तेन, तथा—स्मयमानेन हसता, तथा—अधिकं दर्पं गर्वमयमानेन गच्छता धार्तराष्ट्रेण दुर्योधनेन सदसि सभायामुरुर्महान् सव्य ऊरुः सक्थि निज ऊरुर्द्रौपद्यै प्रदर्शितः । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः ॥

अचिराद्दूरावस्य स्यान्मृत्युर्दुर्मतेः सुदूरावस्य ।
इति समितावनलाभा शशाप तं द्रौपदी गतावनलाभा ॥ ८९ ॥

ऊरौ सक्थनि विषये सुदूरावस्य दुष्टो रावः शब्दो हस्ततालेन ध्वननं यस्य स दूरावः सुष्ठु दूरावः तस्य तादृशस्य अस्य दुर्मतेः दुष्टचित्तस्य मृत्युरचिरात् स्वल्पकालेन स्यात् भवेत् इति अनेन प्रकारेण तं दुर्योधनं समितौ सभायां द्रौपदी शशाप । कीदृशी । अनलाभा तेजसा वह्न्याभा । पुनः कीदृशी । गतावनलाभा गतो दूरीभूतोऽवनस्य रक्षणस्य लाभो यस्याः सा ॥

तस्यां क्रुद्धतमायां रुद्ध्वा जनतां वचोभिरुद्धतमायाम् ।
उचितारम्भी ततया धृतराष्ट्रो दत्तवान्वरं भीततया ॥ ९० ॥

एवंप्रकारेण क्रुद्धतमायामतिक्रुद्धायां सत्यामुद्धतमायामुद्भटच्छलां जनतां जनसमूहं वचोभिर्वाक्यै रुद्ध्वा निवर्त्योचितारम्भी युक्तिज्ञो धृतराष्ट्रस्ततया विस्तृतया भीततयोपलक्षितः सन् वरम् । जातावेकवचनम् । वरानित्यर्थः । तस्यै द्रौपद्यै दत्तवान् ॥

बहुभिरुपधियातेन प्रलोभ्यमाना वरैरुपधिया तेन ।
स्वपतीन्दासत्वेन व्ययोजयत्सा कृतास्पदा सत्त्वेन ॥ ९१ ॥

सत्त्वेन धैर्येण कृतास्पदा कृतस्थाना द्रौपदी उपधिया उपपन्ना धीर्यस्य स उपधीः सुधीः तेन तादृशेन तेन धृतराष्ट्रेण वरैर्वरदानैर्हेतुभिः प्रलोभ्यमाना सती उपधिया तेन उपधेश्छलस्य यातं यानमवगमनं छलोक्तिरूपं तेन स्वपतीन् युधिष्ठिरादीन् दासत्वेन व्ययोजयत् । द्यूतदासत्वमोचितानकरोदित्यर्थः ॥

अथ कौन्तेयानवतः सौभ्रात्रं गच्छतश्च ते यानवतः ।
तान्देवनवासनया स्फुटमाह्वासत परे सवनवासनयाः ॥ ९२ ॥

अथानन्तरं यानं रथादि तद्विद्यते येषां तादृशान् यानवतो गच्छतः, तथा—सौभ्रात्रमवतो रक्षतश्च तान् कौन्तेयान् युधिष्ठिरादीन् ते परे अन्ये कौरवाः स्फुटं प्रकटं देवनवासनया देवनस्य द्यूतस्य या वासना तद्बुद्धिस्तया[1] आह्वासत आमन्त्रयामासुः । कीदृशाः । सवनवासनयाः वनवासे नयो वनवासनयः सह तेन वर्तन्ते ये ते । एतान् द्यूतेन जित्वा वनवासं कारयाम इत्याशयेनेत्यर्थः ॥

विहिते पुनरक्षपणे वनवासादौ रतो रिपुर्नरक्षपणे ।
राजा देवनयोऽगात्पराजितोऽभूद्वनं च देवनयोगात् ॥ ९३ ॥

स राजा युधिष्ठिरः पुनरपि अक्षपणे अक्षाणां पणे वनवासादौ विहिते । आदिशब्देन वर्षमेकं निजगोपनं च । देवनयोगात् द्यूतेन पराजितोऽभूत् । कीदृशो राजा । रिपुः शत्रुभूतः । कुत्र । नरक्षपणे नराणां मर्त्यानां क्षपणं निरपराधं नाशो दूरीकरणं वा तत्र । च पुनः राजा वनमगात् । कीदृशः । देवनयः देववत् अमर्त्यवत् नयो नीतिर्यस्य ॥

स्फुटमन्तरचापलतां दधतो दोर्भिश्च चारुतरचापलताम् ।
तस्यावरजायातं[2] द्रुतमनुजग्मुस्तथैव वरजाया तम् ॥ ९४ ॥

अन्तर्मनसि स्फुटं व्यक्तमेव अचापलतामविद्यमानं चापलं यस्य सोऽचापलस्तस्य भावस्तत्ता तां दधतो धारयन्तः, तथा—दोर्भिर्भुजैश्च चारुतरचापलतां चारुतरामतिचार्वीं चापलताम् । जातावेकवचनम् । धनुर्लता इत्यर्थः । दधतस्तस्य युधिष्ठिरस्य अवरजाः कनिष्ठा भ्रातरो भीमाद्या द्रुतं शीघ्रं यातं तं युधिष्ठिरमनुजग्मुः । तथैव तेनैव प्रकारेण वरजायां वरा उत्कृष्टा चासौ जाया द्रौपदी[3] तां चानुजग्मुः । अनेन जायासहिता वनं जग्मुरित्यूहः ॥

प्रणयमृदुर्जननी तं क्लेशं विलोक्य दुर्जननीतम् ।
रुदती कलितसटानां तेषां पदमनुससार कलितसटानाम् ॥ ९५ ॥

तेषां युधिष्ठिरादीनां सुतानां दुर्जननीतं दुर्जनैः दुर्योधनादिभिः नीतं प्रापितं तं तादृशं क्लेशं वनवासगमनप्रायं विलोक्य प्रणयमृदुः प्रणयेन स्नेहेन मृदुरार्द्रचित्ता जननी रुदती अश्रु मुञ्चती सती कलितसटानां कलिः स्वदायादैः सह यः कलहस्तेन तसटानाम्, तथा—कलितसटानां कलिता बद्धाः सटा जटा यैस्ते कलितसटास्तेषाम् । वनवासव्रताय बद्धजटानामित्यर्थः । तादृशानां पदं प्रक्रममनुससार ।ताननुजगामेत्यर्थः । अत्र सटाशब्दो जटावाचकः । यथा 'सटाः सटाश्चतुन्दारुणकिरणनिभाः पातु बिभ्रत्रिनेत्रः' इति प्रयोगः ॥

---

१. 'तद्बुद्धिः' इत्यधिकं प्रतिभाति. २. 'यांतं' इति मूल०. ३. 'द्रौपदी च तमनुजगाम' इति पाठ उचितः.

अनलमिवाधायान्तस्तापं पार्थाः सकोपबाधा यान्तः ।

निदधुर्देवरहस्ते जननीं संचिन्त्य युगपदेव रहस्ते ॥ ९६ ॥

ते युधिष्ठिराद्या अन्तर्मनसि तापम् अनलमिवाग्निमिवाधाय गृहीत्वा सकोपबाधाः सह कोपेन या बाधा तया सह विद्यन्ते ये ते तादृशा यान्तो गच्छन्तो रहो मिथो युगपदेव संचिन्त्य वनगमनक्लेशादिकं, जननीं मातरं कुन्तीं देवरहस्ते देवरस्य विदुरस्य हस्ते । तत्सविधे इत्यर्थः । निदधुः स्थापयामासुः ॥

अथ वनगमनं तेषां वर्णयन्नाह—

रुरुपृषतीरङ्कुरवस्फीतमगुर्दिव्यसिन्धुतीरं कुरवः ।

तानुरुवीचीरवतः प्रतिजग्राहेव जाह्नवी चीरवतः ॥ ९७ ॥

कुरवो युधिष्ठिराद्या रुरवो मृगविशेषाः पृषतीर्मृगमातृकाः रङ्कवश्च मृगाः तेषां यो रवः तेन स्फीतं भृतं दिव्यसिन्धोर्गङ्गायास्तीरमगुर्जग्मुः । तांश्च चीरवतो वनवासव्रतेन वल्कलत्वग्युक्तान् जाह्नवी गङ्गोरुवीचीरवतो महदूर्मिशब्देन प्रतिजग्राहेव । स्वागतं भवतामित्यारवेण प्रत्युद्गगामेवेत्यर्थः ॥

कृतसंनाहा रजनेरन्ते गन्तुं जवादनाहारजने ।

दिनकृतमन्नरसार्थं शरणमिता भर्तुमुत्तमनरसार्थम् ॥ ९८ ॥

ते पाण्डवा रजने रात्रेरन्ते जवात् वेगात् गन्तुं कृतसंनाहाः सज्जाः सन्तोऽनाहारजने अनाहारे जने अनुयायिविप्रसङ्घे सति दिनकृतं श्रीसूर्यं शरणमिता गताः । किमर्थम् । अन्नरसार्थमन्नं च रसश्च पानादि तदर्थम् । तच्च किमर्थम् । उत्तमनरसार्थम् उत्तमनराणां समाजं स्वानुयायिनं भर्तुं पोषयितुम् । येन तत्पर्याप्तमन्नपानादिकं स्यात्तं वरं सूर्याय प्रार्थयामासुरित्यर्थः । तथा च आरण्यपर्वणि श्रीसूर्यस्य वरप्रदानसमय उक्तिः—'यत्तेऽभिलषितं राजन् सर्वमेतदवाप्स्यसि । अहमन्नं प्रदास्यामि सप्त पञ्च च ते समाः ॥ फलमूलमिमं शाकं संस्कृतं यन्महानसे । चतुर्विधं तदन्नाद्यमक्षय्यं ते भविष्यति ॥' इत्यादि ॥

लम्भितभोजनलाभा भाजनलाभेन भरतभोजनलाभाः ।

विविशुः काम्यकलापं विपिनं व्याकीर्णकेकि[काम्य]कलापम् ॥९९॥

ते पार्था भरतभोजनलाभाः भरतश्च भोजश्च नलश्च राजा तदाभास्तत्सदृशाः भाजनलाभेन पात्रलाभेन श्रीसूर्यदत्तवरात् लम्भितभोजनलाभाः प्राप्तभोग्यलाभाः काम्यकलापं काम्यकमिति लाप आलापो नाम यस्य तत् काम्यकाख्यं वनं विविशुः । कीदृशम् । व्याकीर्णकेकिकलापं व्याकीर्णा विस्तृताः केकिनां मयूराणां [काम्याः] कलापा बर्हा यस्मिंस्तत् । 'कलापः संहतौ बर्हे काञ्चीतूणीरयोरपि' इति मङ्खः ॥

---

१,२. 'रारितस्ती' काश्मी०. ३. 'भर्तुमुत्तमं नरसार्थम्' मूल०. ४,५. 'काश्मीरिकपुस्तकयोर्नास्ति.

अपि चलपादपवनतस्तस्मादेशादुदीर्णपादपवनतः ।
क्षुभितसमुद्रक्षोभि प्रोत्थितमशनिप्रभं समुद्रक्षोभि ॥ १०० ॥

चलपादपवनतश्चलाः पादपा येषां तादृशानि वनानि यस्य स तादृशात्तस्माद्देशात् । उदीर्णपादपवनत उदीर्ण उत्थितो यः पादपवनतः पादयोः पवनस्तस्मात् । क्षुभितसमुद्रवत्क्षोभि क्षोभयुक्तं क्षुभितसमुद्रक्षोभि, तथा अशनिप्रभं विद्युद्दीप्रम्, तथा समुत् सह मुदा वर्तते यत्तत् तादृशं रक्षः किन्दीराख्यमभि संमुखं तेषामुत्थितम् । तथा च वनपर्वणि—'तस्योरुवाताभिहतास्ताम्रपल्लववाहवः । विदूरजाताश्च लताः समाश्लिष्यन्त पादपान् ॥' इत्यादि ॥

काङ्क्षितकङ्कालेन स्फुटतडिदभ्रत्विषाधिकं कालेन ।
चलता सालातेन प्रचुक्षुभे भूः प्रभग्नसाला तेन ॥ १०१ ॥

काङ्क्षितकङ्कालेन काङ्क्षिताः कङ्काला नरशरीरास्थीनि येन स तादृशेन । 'स्याच्छरीरास्थि कङ्कालः' इत्यमरः । तथा स्फुटतडिदभ्रत्विषा व्यक्तविद्युन्मेघप्रभेन कालेन मेचको सालातेन सह आलातेन दीप्तोल्मुकेन यः स तादृशेन चलता गच्छता तेन रक्षसा भूर्भूमिः प्रचुक्षुभे कम्पिता । कीदृशी भूः । प्रभग्नसाला प्रभग्ना प्रकर्षेण भग्ना चूर्णीकृता साला वृक्षा यस्याः सा ॥

अधिकमसारं भीमं भुवने मृगयामि साहसारम्भीमम् ।
नृभुजं[1] कन्या येन स्पृष्टा दुष्टेन कामुकन्यायेन ॥ १०२ ॥
इत्थं विशदध्वानं भीमः किन्दीरनाम विशदध्वानम् ।
दत्तवसुमतीरक्षः क्षपयामास क्षणेन वसुमतीं रक्षः ॥ १०३ ॥

इत्थमनेन प्रकारेण विशदध्वानं विशदं ध्वानं शब्दो यस्य तत्, तथा अध्वानं मार्गं विशत् रक्षः किन्दीरनामकं कर्म भीमो भीमसेनः क्षपयामास । क्षणेन अहनत् । कीदृशो भीमः । दत्ता वसुमतीरक्षा भूमिरक्षा येन स तादृक् । पुनः कीदृशः । वसुमतिः वसुर्देवविशेषस्तद्वन्मतिर्यस्य सः । इत्थं कथमित्याह—साहसारम्भी साहसस्यारम्भोऽस्यास्तीति तादृशः । अहमिमं नृभुजं नॄन् मनुष्यान् भुनक्तीति नृभुक् राक्षसः तमिमं भीमं भयानकमसारमस्थिरं राक्षसं किन्दीरं भुवने जगति गृहे वा मृगयामि । तमिमं कमित्याह—येन दुष्टेन कन्याः परेषामप्राप्तद्वादशवर्षाः कुमार्यः कामुकन्यायेन स्वभर्तृवत् स्पृष्टाः । बलात्कारेणेति शेषः ॥

दत्तनरक्षोदेहे निपातिते पवनजेन रक्षोदेहे ।
पाण्डुसुतैः समहर्षिव्रातं परमाश्रमं गतैः समहर्षि ॥ १०४ ॥

---

१. 'नृभुजां' मूल०.

दत्तनरक्षोदेहे दत्तो नरक्षोदो नराणां कम्पो यया सा तादृशी ईहा चेष्टा यस्य स तादृशे रक्षोदेहे किन्दीरराक्षसदेहे पवनजेन भीमेन निपातिते सति आश्रमं गतैः पाण्डुसुतैः पार्थैः परमत्यर्थं समहर्षि संहृष्टम्। कथम्। समहर्षिव्रातं सह महर्षिव्रातेन यत्तत्। क्रियाविशेषणम्। न केवलं संहृष्टं पार्थैः, महर्षिव्रातेनापि संहृष्टमित्यर्थः॥

अथ कौरवकुद्यूतश्रवणात्कुपितः ससैन्यरवकुद्यूतः।
अचलद्भोजनगरतः कृष्णः कुपितः पुरेव भोजनगरतः॥ १०५॥

अथानन्तरं कौरवकुद्यूतश्रवणात्कौरवाणां दुर्योधनादीनां निन्द्यं द्यूतमक्षक्रीडा तच्छ्रवणात्कुपितः सन् ससैन्यरवकुद्यूतः सह सैन्यरवेण वर्तते यासौ कुः भूमिः, तथा द्युराकाशश्च ताभ्यामुतश्चुम्बितः। तत्समवेत इत्यर्थः। एवंविधः श्रीकृष्णो भोजनगरतो यदुनगरान्मधुपुर्या अचलत्। पार्थान्प्रतीति शेषः। किंविशिष्ट इव। पुरा पूर्वं भोजनगरतः तेभ्यः पार्थेभ्यो दत्तो यो भोजनगरो भोजने गरो विषं तेन कुपितः। यथा प्राक्तेन कुपितः तथानेनापि कुद्यूतेन कुपित इत्यर्थः। अत्र कुपित इत्युद्दिष्टपुनरुद्देशे न दोषः। यथा 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च' इत्यादि॥

वार्ष्णेयं कुर्वन्तं कर्तुमिव तदैव निश्चयं कुर्वन्तम्।
प्राप्तमशीशमदाभिर्वाग्भिर्जिष्णुः प्रभुं वशी शमदाभिः॥ १०६॥

तदैव तस्मिन्समये एव। क्रोधादिति शेषः। कुर्वन्तं कुरूणां दुर्योधनादीनामन्तः कुर्वन्तस्तं तमेव निश्चयं प्रतिज्ञारूपं कुर्वन्तं वार्ष्णेयं श्रीकृष्णं प्राप्तम्। वशी जितेन्द्रियो जिष्णुरर्जुनः शमदाभिः शमप्रदाभिर्विनीताभिराभिर्वक्ष्यमाणाभिर्वाग्भिस्तं प्रभुमशीशमत् दयार्द्रचित्तमकरोत्। सान्त्वयामासेत्यर्थः॥

ता एव स्तुतिवाच आह—

जय जगदामोदरते चरणौ शरणं गतोऽस्मि दामोदर ते।
त्यज रुषमरिपुं जगतां प्राप्नुहि चैव प्रसादमरिपुञ्जगताम्॥ १०७॥

हे दामोदर श्रीकृष्ण, जगदामोदरते जगतो य आमोदो हर्षस्तत्र रतिर्यस्य तस्यामन्त्रणम्। 'प्रमोदामोदसंमदाः' इत्यमरः। अहं ते तव चरणौ शरणं गतोऽस्मि। हे भगवन्, अरिपुञ्जगतां शत्रुसमूहगतां रुषं क्रोधं त्यज। जगतां लोकानामरिपुं प्रसादं निर्मलीकरणं भारोत्तारणेन जगत्याः प्राप्नुहि। अत्रार्थे रिपुशब्दस्य कथितपदत्वेऽपि यमकादौ न दोषः। यद्वा अरिपुञ्जगताम् अरा विद्यन्ते यस्य तत् अरि चक्रं सुदर्शनाख्यं तच्च पुमांसो मर्त्याश्च जगन्ति भुवनानि च तेषां प्रसादं प्राप्नुहि स्वयमेव। 'जगज्जङ्गमलोकयोः' इति मङ्खः॥

ता एव स्तुतिवाच आह—

ननु भवता पापनयः कंसो निहतः कृतश्च तापापनयः।
सुरमनुजानामिह ते सुकृतं कृतमेव तत्र जानामि हते ॥ १०८ ॥

हे भगवन्, ननु निश्चये पापनयः पापे नयो यस्य स तादृशः कंसः कंसासुरो भवता निहतः। तथा तापस्य क्लेशोद्भवस्यापनयः सुरमनुजानां देवानां मनुष्याणां च कृतः। तत्र च इह कंसे हते भवता सुकृतं कृतमेव जानामि। पापिनो वधः सुकृतमेवेत्यर्थः॥

पुनः स्तुतिवाच आह—

अपि भवता नरकलयः कृतस्तथान्ये निराकृता नरकलयः।
तद्देवारिजनेऽत्र क्षमस्व कतिचिद्दिनानि वारिजनेत्र ॥ १०९ ॥

हे वारिजनेत्र पुण्डरीकाक्ष, भवता नरकलयो नरकस्य भौमासुरस्य लयो नाशः कृतः, तथा भवता अन्येऽपि नरकलयो नराणां कलयः कलहा महाविघ्नस्वरूपा निराकृताः। तत्तस्मात्कारणात् हे देव, अत्रास्मिन् अरिजने शत्रुजने कुरुसैन्यनाम्नि कतिचिद्दिनानि क्षमस्व क्षमां कुरु। यावत्समयः कृतोऽस्माभिरित्यर्थः। अत्र कतिचिद्दिनानीति 'कालभावाध्वदेशे' इति द्वितीया॥

पुनस्ता एव वाच आह—

आसां शरदां तरणे स्थितोऽरिसैन्ये मदीयशरदान्तरणे।
अहमाशां तव देव पूरयिष्यामि तिष्ठ शान्तवदेव ॥ ११० ॥

हे भगवन् देव, मदीयशरदान्तरणे मदीया ये शरास्तैर्दान्तः खण्डितो रिपुसक्तो (?) रणो यस्य तादृशे अरिसैन्ये निमित्ते आसां शरदामेषां द्वादशवर्षाणां तरणे स्थितः। समयस्थित इत्यर्थः। अहं तवाशां पृथ्वीभारावतरणरूपां पूरयिष्यामि। 'पूजयिष्यामि' इति पाठे तदैव तवाशां पूजयिष्यामि प्रशंसामि। हे देव, शान्तवदेव तावत्तिष्ठ॥

पूर्वोक्ताख्यानोपसंहारमाह—

अतिमत्तासुरसमितिध्वंसाय विजृम्भिजल्पता सुरसमिति।
कोपादवशमनेन प्रभोर्मनो घटितम[भवद]वशमनेन ॥ १११ ॥

इति अनेन प्रकारेण अतिमत्तासुरसमितिध्वंसाय अतिमत्ता ये असुरा दुर्योधनादिच्छद्मना स्थितास्तेषां या समितिः सभा तस्या ध्वंसाय सुरसं सुष्ठु रसो यत्र कर्मणि तथा विजृम्भि स्फुटं जल्पतानेनार्जुनेन कर्त्रा कोपात् क्रोधेन अवशं व्याकुलं प्रभोः

१. 'खण्डितरिपुसंघः' इति पाठो भवेत्. २. कश्मीरलिखितसटीकपुस्तकयोर्नास्ति.

श्रीकृष्णस्य मनोऽवशमनेन अव निश्चयेन यच् शमनं शमः, तेन घटितं संयोजितम् ॥

सौभद्रोही रोपितसौभद्रोऽहीशवैरिकेतौ स रथे ।
द्वारवतीपुरमलिमृद्वारवतीरद्रुमाधिमध्यगमगमत् ॥ ११२ ॥

स सौभद्रोही सौभाय साल्वराज्ञे द्रुह्यतीति सः, अथवा सौभाय साल्वनगराय द्रुह्यति चूर्णयतीति यः स सौभद्रोही श्रीकृष्णः, अहीशवैरिकेतौ अहीशानां नागेन्द्राणां यो वैरी गरुडः स एव ध्वजो यस्य तादृशे रथे स्वरथे रोपितसौभद्रो रोपित आरोपितः सौभद्रो भागिनेयोऽभिमन्युर्येन स तादृक् अलिमृद्वारवतीरद्रुमाधिमध्यगम् अलीनां भ्रमराणां मृदुः कोमल आरवो येषां ते तादृशा ये तीरद्रुमास्तालतमालादयस्तेषामधिकं मध्यं गच्छतीति तादृशं द्वारवतीपुरं द्वारिकाख्यं नगरमगमत् ॥

चतुरम्बुधिमध्यगता जगतोऽपरमा परमा परमाप रमा ।
अपि पाण्डुसुता गहने विपिने मधुरामधुरामधु रामधुरा ॥११३॥

पाण्डुसुतेषु वनंगतेषु जगतः सकाशात् अपरमा अपगतो रमो रमणं यस्याः सा तादृशी परमा उत्कृष्टा रमा लक्ष्मीः परं श्रीकृष्णमाप । परं शत्रुं दुर्योधनमिति वा । कीदृशी रमा । चतुरम्बुधिमध्यगता चतुरम्बुधीनां मध्यं गता रमा यशःश्रीर्वा । अपीति । पाण्डुसुताः पार्था अपि गहने विपिने वने रामधुरा रामस्य श्रीरामचन्द्रस्य धूर्भारोऽध्यत्वरूपा तया रामधुरा उपलक्षिताः सन्तः आमधु मधोर्वसन्तात् आ आमधु वसन्तर्तुपर्यन्तं मधुरां मधुरानगरीम् । अधुरधारयन् । अर्थात्तत्रैवासन्नित्यर्थः । अथवा आमधुरा आसमन्तात् मधुरा रम्या पाण्डुसुतास्तत्र गहने विपिने मधुरामधुरा मधुर्वसन्तस्तस्य रामो रमणं रामः । वसन्तोत्सव इत्यर्थः । तस्य धूर्ध्यता तामधुः । साक्षान्मूर्ता वसन्तोत्सवा इवासन्नित्यर्थः । यद्वा मधु स्वादुकृता या रामधुरा रामचन्द्राध्यता तामधुः । यथा रामचन्द्रेण निजसमयप्रतिपालनाय वनवासोऽङ्गीकृतस्तैरपि तद्वदित्यर्थः । शेषं प्राग्वत् ॥

इति श्रीमहाकविवासुदेवविरचिते युधिष्ठिरविजये महाकाव्ये श्रीकश्मीरदेशवास्तव्यमहामाहेश्वरविद्वद्वरराजानकशंकरकण्ठात्मजराजानकरत्नकण्ठविरचितायां शिष्यहिताभिधानायां टीकायां च खाण्डववनदाहार्जुनशस्त्रप्राप्तिसभावर्णनराजसूययज्ञविधानद्यूतलीलावनवासवर्णनं नाम तृतीय आश्वासः ।

---

चतुर्थ आश्वासः ।

अथ पाण्डवानां वनगमनानन्तरं धृतराष्ट्रस्य वृत्तं वर्णयन्नाह—

अथ रिपुराज्यन्तनये गतवति पाण्डोर्विहाय राज्यं तनये ।
स नृपो निर्वेदमयात्स्खलनादिव कृत्यतो मुनिर्वेदमयात् ॥ १ ॥

अथानन्तरं रिपुराज्यन्तनये रिपुराजेः शत्रुपङ्क्तेरन्तोऽन्तरूपो नयो नीतिर्यस्य तादृशे पाण्डोस्तनये युधिष्ठिरे राज्यं विहाय गतवति वनं गते सति स नृपो धृतराष्ट्रो निर्वेदमुद्विग्नतामयात् आप । इव यथा वेदमयात् क्रतुतः वैदिकायथोक्तकर्मतः स्खलनात्स्खलितात् हेतोर्मुनिर्निर्वेदमाप्नोति । तद्वदित्यर्थः ॥

प्रेक्ष्य सदाहं तातं सुयोधनः संपदां सदा हन्ता तम् ।
कर्ता कुन्यायानामाशंसितवान्क्षयं शकुन्यायानाम् ॥ २ ॥

सुयोधनो दुर्योधनः तं तातं धृतराष्ट्रं तेन हेतुना सदाहं सान्तस्तापं प्रेक्ष्य संपदां श्रियां सदा हन्ता घातकः शकुन्यायानां शकुनेर्मातुलाद् आय आगमनं येषां ते तादृशानां कुन्यायानां द्यूतच्छलानां कर्ता क्षयम् आशंसितवान् । शत्रुभ्य आगतं निजक्षयमशङ्कतेत्यर्थः ॥

अथ परमत्सरवेगामसये दत्त्वा भृशं समत्सरवे गाम् ।
कर्णो दुर्वादरतः सुयोधनं दीनमलपदुर्वादरतः ॥ ३ ॥

अथानन्तरं कर्णो राधेयः परमत्सरवेगां पर उत्कृष्टो मत्सरस्य रोषस्य वेगो यस्याः सा तादृशीं गां वाचं समत्सरवे समः त्सरुः खड्गमुष्टिर्यस्य स तादृशाय समत्सरवे असये खड्गाय अस्यते क्षिप्यते असिः खड्गः तस्मै निमित्ताय दत्त्वा 'सर्वथा शूराणां खड्ग एव जयसाधनम्' इति सरोषं वागुक्त्वेत्यर्थः । दुर्वादे दुष्टवादे रतः । दीनं पूर्वोक्तप्रकारेण सदैन्यं सुयोधनं दुर्योधनमुर्वादरतो महता आदरेण अलपत् जगाद ॥

कर्णः किमवोचदित्याह—

त्यज कलुषामस्थिरतां पश्यासिलतां मम द्विषामस्थिरताम् ।
चापधरा यास्यामः स्वरिपून्हत्वेश्वरा धरायाः स्यामः ॥ ४ ॥

हे राजन्, कलुषामाविलामस्थिरतां 'वयं पार्थानां पुरतः स्थातुं न शक्नुमः' इत्येतद्रूपां त्यज जहि । द्विषां शत्रूणामस्थिरतामस्थनि रता लग्ना तामस्थिनलकपर्यन्तमन्तर्गामिनीं मम असिलतां खड्गलतां पश्य । वयं चापधरा धनुर्धरा यास्यामः । रिपून् प्रतीति शेषः । स्वरिपूंश्च हत्वा धराया भूमेरीश्वराः प्रभवः स्यामः ॥

इत्थं सहराभस्यः श्रुत्वाधिरथेर्वचांसि स हराभस्य ।
रथमापद्युद्धाय स्वधनुर्दुर्योधनः स्वमुद्धाय ॥ ५ ॥

हराभस्य हरवत् आभा दीप्तिर्यस्य स हराभो रुद्रतुल्यस्तस्य अधिरथेः कर्णस्य इत्थमनेन प्रकारेण वचांसि श्रुत्वा सहराभस्यः सह रामस्येन साहसेन वर्तते यः स तादृक् स दुर्योधनः स्वधनुः स्वं धनुरुद्धाय धारयित्वा युद्धाय युद्धार्थं रथमापत् ॥

१. 'सपद्युद्धाय' मूल०.

अथ कुरुसेना ध्वानं विदधानोपेत्य साहसेनाध्वानम्।
रोषपराशरजातं ददर्श दधती मुनिं पराशरजातम्॥ ६॥

अथानन्तरं साहसेन अध्वानं मार्गमुपेत्य ध्वानं शब्दं विदधाना रोषपरा सती, तथा आशरजातम् आशृणाति आशरः। 'शॄ हिंसायाम्'। आशरा राक्षसास्तेषां जातं समूहं दुर्योधनशकुन्यादिछद्मना अलम्बुसादिराक्षससमूहं वा दधती कुरुसेना पराशरजातं मुनिं पाराशरं श्रीव्यासमुनिं ददर्श॥

यो दलिताञ्जनकायः स्वयमसै कुरुमहीभृतां जनकाय।
कुरवो भूमौ लीनां विदधुस्ते विततिमंसभूमौलीनाम्॥ ७॥

दलिताञ्जनकायः दलितं चूर्णीकृतं यदञ्जनं तद्वत्कायः श्यामसुन्दरो यस्य स यः श्रीव्यासमुनिरस्ति तस्मै कुरुमहीभृतां कुरुराज्ञां (?) जनकाय वंशकर्त्रे कुरवो दुर्योधनाद्याः स्वयं कृत्वा अंसभूमौलीनाम् अंसभुवो अंसस्थानानि च मौलयश्च तेषां विततिं पङ्क्तिं भूमौ भुवि लीनां विदधुश्चक्रुः। अंसभू इति अष्टाङ्गत्वात् प्रणामस्य॥

स मुनिरुरुध्वानं तं क्षत्रसमूहं क्षणेन रुद्ध्वानन्तम्।
नृपतिनिवेशनमद्भिः कृतार्घपाद्यं विवेश नमद्भिः॥ ८॥

स मुनिः श्रीव्यासमुनिरुरुध्वानमुरुर्महान् ध्वानः शब्दो यस्य स तमनन्तं क्षत्रसमूहं क्षत्रियव्रजं क्षणेन रुद्ध्वा नमद्भिर्जनैरद्भिर्जलैः कृतार्घपाद्यं यथा भवति तथा नृपतिनिवेशनं राजागारं विवेश॥

मुखशोभावशकुनयस्थिरमतिराधासुतैकभावशकुनयः।
कुरवो रिपुरोधाय स्वबलं चेरुश्चलत्करि पुरोधाय[1]॥ ९[2]॥

कुरवो दुर्योधनाद्याः। मुखशोभेति। मुखे आमुखे, न तु परिणामे, या शोभा तस्या वशो यः कुनयस्तत्र स्थिरमती राधासुतः कर्णः, तथा तत्रैव एकभावः शकुनिश्च येषां तादृशा मुखशोभावशकुनयस्थिरमतिराधासुतैकभावशकुनयः एवंभूताः सन्तः चलत्करि चलद्गजं स्वबलं स्वसैन्यं पुरोधाय अग्रे कृत्वा रिपुरोधाय रिपूणां पाण्डवानां रोधस्तस्मै चेलुः॥

तव भूपापास्तनयाः पाण्डवनिधनाय यान्ति पापास्तनयाः।
करिण इवालाने तान्भवन्निदेशे कुरुष्व बालानेतान्॥ १०॥
सरभसमायातीतः शमाय मैत्रेय एष मायातीतः।
मनुजेशापेशलभा मा भूवंस्तेऽनलेऽस्य शापे शलभाः[3]॥ ११॥

---

१. 'चेलुः' मूल०  २. 'मुखेति नवममिदं पद्यं 'इत्थं सहराभसः—' इति पञ्चमपद्योत्तरं पठनीयम्। एतस्य तत्रैवोपयोगात्' इति मूलपुस्तकटिप्पणी.  ३. 'मा भूतानलनिभे' मूल०.

वीथ्या वायव्या स प्रययौ प्रोच्येति पार्थिवाय व्यासः ।
अतिकुपितो मैत्रेयः प्रादुरभूत्प्राणिनां रतो मैत्रे यः ॥ १२ ॥

(तिलकम्)

इत्यनेन प्रकारेण पार्थिवाय धृतराष्ट्राय प्रोच्योक्त्वा स व्यासः श्रीव्यासमुनिर्वायव्या वीथ्या आकाशयानेन प्रययौ । ततश्च प्राणिनां जन्तूनां चराचराणां मैत्रे मित्रत्वे अनुकम्पायां यो रतः सोऽतिकुपितोऽतिकुद्धो मैत्रेयो मैत्रेयनामा ऋषिः प्रादुरभूत् प्रादुर्भूतः । इति किमित्युक्त्वा । तवेति । हे भूप, तव तनयाः सुता दुर्योधनाद्याः पापाः पापिनः, तथा अपास्तनयाः अपास्तो नयो नीतिर्यैस्ते तादृशाः पाण्डवनिधनाय पार्थवधाय यान्ति । तत्तस्मात्कारणात् तान् बालान् मन्दमतीन् आलाने गजबन्धने इव करिणो गजान् भवन्निदेशे त्वं कुरुष्व । निजाज्ञया एतस्मादनर्हादुद्योगान्निवर्तयस्वेत्यर्थः । सरभसमिति । हे भूप, मायाम् असति सद्रूपत्वावधारणरूपामतीतः एष मैत्रेयः ऋषिः शमाय भवत्तनयानामनुशमाय सरभसं वेगमायाति । हे मनुजेश, तथा कार्यं यथा अपेशलभा अपेशला कठिना भाश्चेतनरूपा दीप्तिर्येषां तादृशास्ते भवत्तनयाः अस्य मैत्रेयस्य शापे अनले अग्निस्वरूपे शलभाः पतङ्गा मा भूवन् ॥

स सकलमानवदत्तं सान्त्वमनादृत्य दीप्तिमानवदत्तम् ।
शासितुमाशु भवन्तं संप्राप्तोऽहं कुरूत्तमाशुभवन्तम् ॥ १३ ॥

स मैत्रेयो मुनिर्दीप्तिमान् सकलमानवदत्तं सकलमानवैः स्त्रीयैः परैर्वा दत्तं सान्त्वं साम एतत्कार्योद्यमनिवृत्तिपरमनादृत्य स्थितं तं दुर्योधनमवदत् । किमित्याह—हे कुरूत्तम दुर्योधन, अशुभकार्योद्योगादशुभवन्तं भाव्यशुभं भवन्तं शासितुमनुशासितुमाशु शीघ्रमेव। भवत्स्नेहादित्यर्थः । अहं संप्राप्तः ॥

मैत्रेयो दुर्योधनं पुनः किमन्वशादित्याह—

कष्टा राजसभा वः कष्टोऽयं वंश एव राजसभावः ।
ग्रहणं केशान्तानां साध्वीनां लालयन्ति के शान्तानाम् ॥ १४ ॥

हे नृप, एषा वो युष्माकं राजसभा। द्यूतार्थे परिकल्पितेत्यर्थः । कष्टा । तथा अयं वंशोऽपि वः राजसभावः राजसो रजोगुणात्मको भावो यस्य स तादृक् कष्टः । हे राजन्, शान्तानां शमप्रधानानां साध्वीनां पतिव्रतानां स्त्रीणां ये मुक्ताः केशान्ताश्चिकुरान्ताः तेषां ग्रहणं के जनाः पामरा अपि लालयन्ति मानयन्ति । साध्वीकेशग्रहणं सर्वथानर्हमनायुष्यमित्यर्थः ॥

मैत्रेयो मुनिर्दुर्योधनं पुनः किमन्वशादित्याह—

इयमपि देवनचेष्टा मतिमद्भिः सज्जनैर्नृदेव न चेष्टा ।
राज्यं देहि तदेभ्यः पार्थेभ्यः सकलसंपदे हितदेभ्यः ॥ १५ ॥

हे नृदेव नरदेव राजन्, इयमपि देवनचेष्टा द्यूतव्यापाररूपा मतिमद्भिः सज्जनैर्न च इष्टा। तत्तस्मात्कारणात् हितदेभ्यः भवद्धितकर्तृभ्य एभ्यः पार्थेभ्यः पाण्डवेभ्यः सकलसंपदे सकललोकहिताय राज्यं देहि॥

मैत्रेयः पुनस्तं किमन्वशादित्याह—

अपि हितमारभसे न त्वं दुर्योधन यदस्यमा रभसेन।
असतामस्वन्तेभ्यः प्रदीयतां भरतसत्तम स्वं तेभ्यः॥ १६॥

भो दुर्योधन, अपि प्रश्ने त्वं हितं स्वं हितं नारभसे तत्। तत्किमित्याह—यत् त्वम् अमा सह रभसेन साहसेन सह असि। अमाशब्दोऽव्ययं सहार्थे। भो भरतसत्तम भरतश्रेष्ठ, असतां खलानामस्वन्तेभ्यः सु शोभनोऽन्तो येषां ते स्वन्ताः, न स्वन्ताः अस्वन्तास्तादृशेभ्यः तेभ्यः पार्थेभ्यः स्वं धनं राज्यरूपं राज्यांशरूपं वा प्रदीयताम्॥

इत्थं तापसमेतं कुपितं क्षिपता तपः[1]प्रतापसमेतम्।
नृपसमितावज्ञेन स्वोरुस्तेनाहतः कृतावज्ञेन॥ १७॥

इत्यमनेन प्रकारेण तपःप्रभावसमेतं तपःप्रभावेण तपोमहत्त्वेन युक्तमेतं तापसं मुनिं मैत्रेयं कुपितं सन्तं क्षिपता दूरीकर्तुमिच्छता तेन अज्ञेन मूढेन दुर्योधनेन नृपसमितौ नृपसभायां स्वोरुः स्वो निज ऊरु इतिहासे पाठात् दक्षिण आहतः सगर्वमिति॥

तामूरौ द्रागदया द्विषो हनिष्यन्ति हन्त रौद्रा[2] गदया।
इति कुपितेनाशापि क्षितिपसुतोऽत्र संमता च तेनाशापि॥१८॥

यद्यस्मादवज्ञया मत्समक्षं निजोरुमहनः(न्) इति शेषः। तत्तस्मात्कारणात् हन्त कष्टे अदया निष्कृपा रौद्रा द्विषो रिपवः ताम् ऊरौ सक्थनि गदया आयुधविशेषेण हनिष्यन्ति इत्यनेन प्रकारेण तेन मैत्रेयेण कुपितेन क्षितिपसुतो दुर्योधनोऽशापि शप्तः। तेन च मैत्रेयेण मुनिना आशापि कदाचिच्छापमोक्षरूपापि च संमताङ्गीकृता। तथा च वनपर्वणि मैत्रेयेणोक्तः धृतराष्ट्रं प्रति—'शमं यास्यति चेत्पुत्रस्तव राजन्यदा तदा। शापो न भविता तात विपरीते भविष्यति॥' इति। अदया रौद्रा इति पुनरुक्तोऽपि श्लेषयमकादौ न दोषः॥

शापावेकत्रासौ लब्ध्वापि च नागमद्विवेकत्रासौ।
अपि पुनरासेदे वै रभसेन कृते मनोनिरासे दैवैः॥ १९॥

असौ दुर्योधनः एकत्रैव शापौ द्वौ शापशापान्तप्रतीकाररूपौ लब्ध्वापि विवेकत्रासौ विवेकभयं च नागमत्। वै निश्चये। दैवैस्तदीयान्तःकरणे निविष्टैस्तस्य मनोनिरासे विवेकान्मनोभ्रंशे विहिते रभसेन व्यर्थसाहसेन पुनरप्यसौ दुर्योधनः आसेदे आश्रितः॥

---

१. 'प्रभाव' इति काश्मीरिकपाठः. २ 'नूनं गदया' इति काश्मीरिकमूलपाठः.

फलशाकालम्बनतः कंचन पार्थो व्यतीत्य कालं वनतः ।
तस्मादापावनतः स द्वैतवनं वनं तदापावनतः ॥ २० ॥

स पार्थो युधिष्ठिरः फलशाकालम्बनतः फलं च शाकश्च तौ आलम्बनं शरीरयात्राधारः यस्मिंस्तत् तादृशात् वनतः तस्मात् कंचन कालं व्यतीत्य आपावनतः आसमन्तात् पावनात्तस्माद्वनतः तत् द्वैतवनं नाम वनमाप । कीदृशः । अवनतः विनीतः ॥

दत्तरसे वनसरसस्तीरे तस्मिन्महर्षिसेवनसरसः ।
संनतिमानवसदयं मनो दधानः समस्तमानवसदयम् ॥ २१ ॥

समस्तमानवसदयं समस्तमानवेषु सदयं सकृपं मनो मानसं दधानः संनतिमान् बहुविनीतः तथा महर्षिसेवने सरसः सैकतानः तस्मिन् द्वैतवने दत्तरसे दत्तः रसः उत्कण्ठा येन तादृशे वनसरसस्तीरे अयं युधिष्ठिरोऽवसत् ॥

दधतं चीरमयं तं वसनं मुनिसंहतीः शुची रमयन्तम् ।
प्रतिपन्नाशङ्कार्यं कृष्णोचे वीक्ष्य शत्रुनाशं कार्यम् ॥ २२ ॥

चीरमयं वसनं वस्त्रं दधतम्, तथा शुचीः पवित्रा मुनिसंहतीः मुनिपङ्क्तीः रमयन्तं तोषयन्तं तमर्यं स्वामिनं कृष्णा द्रौपदी ऊचे । किं कृत्वा । शत्रुनाशं कार्यं रिपुनाशमेव कार्यं सर्वथा करणीयं वीक्ष्य विशेषेण ईक्ष्य निश्चित्य । कीदृशी कृष्णा । प्रतिपन्नाशङ्का प्रतिपन्ना प्राप्ता शङ्का शत्रुपराभवरूपा यया ॥

नृप रिपुबाधी ननु ते धर्मोऽपि हितोऽयमाहवाधीननुते ।
तत्तव योग्यं नादस्तिष्ठसि यत्काननेषु योग्यन्नादः ॥ २३ ॥

हे आहवाधीननुते आहवे युद्धविषये अधीना नुतिः स्तुतिर्यस्य स तादृश हे नृप, ननु निश्चये, अयं ते धर्मोऽपि रिपुबाधी रिपुघातक एव हितः । नान्यो धर्मो रिपुवधादित्यर्थः । तत्तस्मात्कारणात् यत्त्वं योग्यन्नादः योगिनां यतीनामन्नं नीवारादि अत्तीति योग्यन्नादः सन् काननेषु वनेषु तिष्ठति तत् अद एव तव न योग्यं न युक्तम् ॥

इह नतनानायतिना सिद्धिर्ध्रियते त्वयाधुना नायतिना ।
सत्यगिरा जपता का केवलमाप्ता जनाधिराजपताका ॥ २४ ॥

इह वने नतनानायतिना नता संकुचिता नानाप्रकारा आयतिरुदर्के आगामि फलं यस्येदृशेन त्वया आयतिना न यतिरयतिः तद्व्यतिरिक्तेन अधुना इदानीं सिद्धिः स्वसमीहितसिद्धिः न ध्रियते न प्राप्यते । केवलं सत्यगिरा सत्यवादिना, तथा जपता स्वाध्यायनिष्ठेन पुरुषेण का जनाधिराजपताका जनाधिराजस्य पताका महाराजसौभाग्यश्रीः प्राप्ता न कापि । सत्यगिरा इति द्वादशवर्षावधिसमयप्रतिपालनसत्यवादित्वमुद्दिष्टम् । 'पताका वैजयन्त्यां च सौभाग्येऽङ्के ध्वजेऽपि च' इति विश्वः ॥

भवति महाराज नता तीक्ष्णे न मृदौ कृतोपहारा जनता।

त्रिजगद्भानुं नमति त्रिसंध्यमिन्द्रं न तत्प्रभानुन्नमति ॥ २५ ॥

हे महाराज, जनता जनसमूहः तीक्ष्णे क्रूरे एव पुरुषे नता नम्रा, तथा कृतोपहारा कृतः उपहारो ढौकनकं यया सा तादृशी भवति, न पुनः मृदौ कोमले। अत्रैतत्संवादायार्थान्तरन्यासमाह—भानुं तीक्ष्णांशुं त्रिसंध्यं त्रिजगदतिशयेन नमति (यतः) तत्प्रभानुन्नं तत्प्रभया नुन्नं प्रेरितम्। इन्द्रं नातिशयेन नमति ॥

न दधति राजनयं ते शत्रुषु सततं नरेश्वराजनयन्ते।

ये भूप क्षान्तत्वं तस्माद्युध्यस्व शत्रुपक्षान्त त्वम् ॥ २६ ॥

हे नरेश्वर नृप, ये ते प्रसिद्धा अपि अर्थात् भवादृशा भूपाः शत्रुषु विषये सततं क्षान्तत्वं क्षमायुक्तत्वमजनयत्। ते राजनयं राजनीतिं न दधति। तस्मात्कारणात् हे नृप शत्रुपक्षान्त, शत्रुपक्षस्यान्तः तद्रूपत्वाद् युध्यस्व। राजनयं ते, नरेश्वराजनयन् ते इति नकारमकारयोरभेदः। 'न नकारमकारयोः' इत्युक्तेः ॥

सोऽयमहो मोहस्ते कृतोदयो जनितयज्ञहोमोहस्ते।

भ्रातृजनेनात्याजि क्लिष्टेन यदेकदेवनेनात्याजि ॥ २७ ॥

हे नरेश्वर, अहो आश्चर्ये सोऽयं ते तव मोहः अज्ञानं शत्रुषु औदासीन्यरूपो मोहः। स क इत्याह—कृतोदय इत्यादि हे जनितयज्ञ होम, जनिता विरचिता यज्ञाः पञ्चयज्ञा होमाः क्रतवश्च येन तस्य संबोधनं तादृश, कृतोदयः कृत उदयो निजोदयो येन तादृक् ऊहो विचारः ते भ्रातृजनेन अत्याजि। क्लिष्टेन अतिसमरखिन्नेन सता एकदेवनेन एकद्यूतक्रीडनेनैव यत् अत्याजि स तवैव मोहः अहो इत्यर्थः ॥

सकलमवन्यायेन त्वं नीतो विघटनामवन्या येन।

सपदि नरेश कुनिरयं नेयः परिपीड्य संगरे शकुनिरयम् ॥२८॥

हे नरेश राजन्, अवन्यायेन अवगतो न्यायो विवादो येन स तादृशेन शकुनिना येन त्वम् अवन्या भूमेः सकाशात् विघटनां वियोगं सकलं कृत्वा नीतः। यद्वा सकलमवन्याः सह कलमैः धान्यविशेषैः वनीभिः अल्पवनैश्च विद्यते या सा सकलमवनी तस्याः (अर्थात्) अवन्या भूमेः विघटनां वियोगं त्वं येन नीतः। अवी(अवनी)शब्दस्य ईकारान्तस्य रूपम्। सोऽयं शकुनिर्नृपः सपदि त्वया संगरे युद्धे निपीड्य कुनिरयं कुत्सितो निरयो नरकस्तं कुगतिं नेयः कुत्सितवधेन निरयं सपदि तत्क्षणं नेय इत्यर्थः ॥

---

१. 'अजनयन्+ते' इत्यत्र 'नश्छव्यप्रशान्' इति रुत्वे यमकभङ्गः स्यात्, अतो नकारे मकाराभेदमाश्रित्य रुत्ववारणेन यमकाभङ्ग आश्रितः. २. अस्मिन्पक्षे द्वितीयचरणे 'अवन्यायेन' इत्येकं पदमाश्रित्य विशेषणबलेन विशेष्यभूतपृथिवीवाचकपदमाक्षेपणीयम्। अन्यथा 'येन' इत्यस्य पौनरुक्त्यं स्यात..

विरचितनरकङ्काले समरे प्रतिपाद्य नृवर नरकं काले ।
अचिरादेव स नेयः परामृशन्मां हि सुविशदे वसने यः ॥ २९ ॥

हे राजन्, विरचितनरकङ्काले विरचिता राशीकृताः नरकङ्काला मनुष्यशरीरास्थीनि यस्मिन् स तादृशे समरे युद्धे काले कालरूपे प्रतिपाद्य लब्ध्वा अचिरात् शीघ्रमेव स दुःशासनः नरकं नेयः । स क इत्याह—हि निश्चये यः सुविशदे शुचौ वसने वाससि मां परामृशत् पस्पर्श ॥

आत्ततरा जन्याय स्या राजन्विधुतवैरिराजन्याय ।
सार्यो राजन्यायः स्वीकर्तव्यः स यः पुराजन्यायः ॥ ३० ॥

हे राजन्, विधुतवैरिराजन्याय विधुता निर्जिता वैरिराजन्या वैरिक्षत्रियनृपा यस्मिंस्तत् । तादृशाय जन्याय युद्धाय आत्ततरा आत्तं गृहीतं तरो वेगो येन स तादृक् स्या भव । यद्वा आत्तराजन्याय आत्ततरम् अतिगृहीतमत्युत्पादितं यत् अजन्यमुत्पातः महासंग्रामरूपः तस्मै त्वं स्याः । आशु स्थिरीभवेत्यर्थः । हे नृप, त्वया स राजन्यायो राजव्यवहारः स्मार्यः । यः आयः तव य उदर्कः पुरा अजनि उत्पन्नः स एव स्वीकार्यः ॥

इति शुभपदकन्यायामभिहितवत्यां गिरं द्रुपदकन्यायाम् ।
दत्तमनोदाहारित्रातेन च वातसूनुनोदाहारि ॥ ३१ ॥

इत्यनेन प्रकारेण शुभपदकन्यायां शुभानि पदकानि स्वल्पपदानि यस्मिन् स तथाविधो न्यायो विवादो यस्यां सा तादृशीं गिरं वाचम् अभिहितवत्यां द्रुपदकन्यायां द्रौपद्यां सत्यां दत्तमनोदाहारित्रातेन दत्तः मनोदाहः यस्य तत् एवंविधमरित्रातं रिपुसमाजः यस्य स तादृशेन वातसूनुना भीमसेनेन उदाहारि उदाहृतम् । वक्ष्यमाणमिति शेषः ॥

स्फुटतरमाह वरा गा द्रुपदतनूजेयमुत्तमाहवरागा ।
संरम्भी मतमस्याः प्रगृह्य राजन्पुरेव भीमतमः स्याः ॥ ३२ ॥

हे राजन्, उत्तमाहवरागा उत्तमाहवे महासंग्रामे रागोऽभिलाषो यस्याः सा इयं द्रुपदतनूजा द्रौपदी स्फुटतरं प्रकटमेव वरा उत्कृष्टा गा वाचः आह उक्तवती । अस्या द्रौपद्या मतं प्रगृह्य संरम्भी क्रुद्धः सन् त्वं पुरा इव प्राग्वत् भीमतमो अतिभयानकः स्या भव । शत्रून् प्रतीति शेषः ॥

अनृशंस द्वादश ते समा निरर्था रिपावसद्वादशते ।
तस्मात्सत्वरणाय क्रियतां बुद्धिर्महेन्द्रसत्त्व रणाय ॥ ३३ ॥

हे राजन्, अनृशंस अघातुक दयालो, असद्वादशते असन्ति असत्यानि अयुक्तानि वादशतानि यस्य स तादृशे तव रिपौ दुर्योधने द्वादश समा द्वादशाब्दा निरर्थाः । तत्समयं

१. काश्मीरिकपुस्तके नोपलभ्यते.

प्रतिपालनं व्यर्थमित्यर्थः । तस्मात् हेतोः हे महेन्द्रसत्त्व महेन्द्रस्य शक्रस्येव सत्त्वं धैर्यं यस्य स तादृश, राजन्, रणाय संग्रामाय बुद्धिः क्रियताम् । कीदृशाय रणाय । सत्वरणाय सह त्वरणेन शीघ्रतरसंपादनेन वर्तते यः स तादृशाय ॥

नैव गदाधारस्य स्थितस्य मम वीर्यसंपदाधारस्य ।
स्यादवशं कार्यं ते तस्मात्कार्या च नैव शङ्कार्यन्ते ॥ ३४ ॥

हे राजन्, ते तव कार्यं रिपुक्षयरूपं वीर्यसंपद आधारस्य आश्रयभूतस्य, तथा गदाधारस्य गदामायुधविशेषं धारयतीति तादृशस्य गदाहस्तस्य स्थितस्य मम अवश्यं न वशमायत्तम् अवशमनायत्तं नैव स्यात् । किं तु वशमायत्तमेव कार्यं स्यादित्यर्थः । तस्मात् हेतोस्त्वया अर्यन्ते अरीणां शत्रूणामन्तो नाशः तत्र शङ्का नैव कार्या । विलीनानेवारीन् जानीहि ॥

अचिरादाहत्य जनं ससुयोधनकर्णमादाहत्यजनम् ।
भ्रियतां भूयानायः स्थिरो भवाद्यैव राष्ट्रभूयानाय ॥ ३५ ॥

हे राजन्, आदाहत्यजनं दाहाद् आरभ्य त्यजनपर्यन्तम् । दग्ध्वा संत्यक्ते(ज्य) चेत्यर्थः । अचिरात् शीघ्रमेव ससुयोधनकर्णं सदुर्योधनराधेयं जनं रिपुजनमाहत्य भूयान् बहुतर उदर्क आगामिफलरूपस्त्वया भ्रियताम् । हे नृप, अद्यैव राष्ट्रभूयानाय निजराष्ट्रमहीप्रस्थानाय स्थिरो भव ॥

इत्थं मतिमानाभ्यामभिहितमाकर्ण्य वचनमतिमानाभ्याम् ।
मधुरं च क्षेमहितं धर्मसुतो वचनमाचचक्षे महितम् ॥ ३६ ॥

इत्थमनेन प्रकारेण अतिमानाभ्याम् अतिशयेन मानयुक्ताभ्यामाभ्यां द्रौपदीभीमसेनाभ्यामभिहितमुक्तं वचनमाकर्ण्य मतिमान् बुद्धिमान् धर्मसुतो युधिष्ठिरो महितं पूजितं मधुरं मधुराक्षरं क्षेमं शुभं हितं वचनमाचचक्षे उक्तवान् ॥

पाण्डव पक्षो भवतोः श्रुतो मया शत्रुभूमिपक्षोभवतोः ।
अतिसंरम्भी मम न स्फुटमत्रार्थे कृतादरं भीम मनः ॥ ३७ ॥

हे पाण्डव भीमसेन, शत्रुभूमिपक्षोभवतोः शत्रवो ये भूमिपा राजानः तेषु क्षोभवतोः क्षोभयुक्तयोर्भवतोः द्रौपद्यास्तव चेति भवतोः पक्षः संग्रामरूपः श्रुतः । कीदृशः । अतिसंरम्भी अतिशयेन संरम्भः क्रोधरूपः साहसरूपश्च अस्यास्तीति तादृशः । हे भीम, अत्रार्थेऽस्मिन्नर्थे मम मनश्चित्तं स्फुटं व्यक्तमिव कृतादरं सादरं न भवति ॥

पूर्वोक्तमेव स्वमतं समर्थयति—

इह नाम तनुमहे यं गुर्वनुचर्येति धर्ममतनुमहेयम् ।
अत्र सबाधाः स्यामः स्फुटं यदि रणं क्षणादिवाधास्यामः ॥ ३८ ॥

हे भीमसेन, इह वनवासे गुर्वनुचर्या गुरूणां चिरंतनानां गुरूणां मनुप्रभृतीनां चानु-

चर्या अनुसारः इति हेतोः अहेयम् अत्याज्यम् । अतनुं महान्तं यं धर्मं तनुमहे विस्तारयामहे । अत्र धर्मे स्फुटं व्यक्तमेव तदा सबाधाः स्यामः । निजधर्मोज्झिताः स्याम इत्यर्थः । सदा कदेत्याह—यदि रणं भवदभिमतं क्षणादिबाधासामो ग्रहीष्यामः ॥

अपि समरे सत्यस्य स्याद्बाधा गुरुजनान्तरे सत्यस्य ।
तस्मात्साहसमासु प्रधनं पश्यामि शत्रुसाहसमासु ॥ ३९ ॥

हे भीम, समरे सति युद्धे अङ्गीकृते सति गुरुजनान्तरे भीष्मादयोऽस्मद्गुरवः तज्जनमध्ये अस्य सत्यस्य निजसमयप्रतिपालनरूपस्य बाधा स्यात् भवति तस्माद्धेतोः आसु शत्रुसाहसमासु शत्रुषु रिपुषु यः साहः सहनं साहः तदुपरिक्षमा तस्या याः समा द्वादशवर्षाणि तासु मध्ये प्रधनं युद्धं साहसमेव पश्यामि । साहसमनार्यसंमतमित्यर्थः ॥

भीमसेनाय पूर्वोक्तप्रकारेण धर्मवचनं श्रावयित्वा इदानीं महारथेभ्यः परपक्षसेनानीभ्यो भीष्मादिभ्यः सुरैरपि जेतुमशक्येभ्यस्त्रासं दर्शयितुमाह—

उचितारम्भी मत्वा पुनः प्रवक्ष्यामि परं[1] भीम त्वा ।
द्विषतामवलोपाय स्यादपि नूनं जनोऽयमबलोपायः ॥ ४० ॥

हे भीम, उचितं कार्यमारभते यः स उचितारम्भी अहं पुनः मत्वा ज्ञात्वा त्वा त्वां परमन्यत् प्रवक्ष्यामि । अयं जनोऽस्मल्लक्षणः नूनं निश्चये द्विषतां शत्रूणामवलोपाय नाशाय अबलोपायः बलं च उपायश्च तौ अविद्यमानौ यस्य स तादृशः स्यादपि भवत्यपि अस्माभिर्द्विषन्तः न बलेन नाप्युपायेन जेतुं शक्या इत्यर्थः ॥

पूर्वोक्तमेवोपोद्बलयति—

प्रतिहतपरशुभरणतः ख्यातं रामं समेत्य परशुभरणतः ।
अरिवलहा रेजे यः कथं नु भीष्मः संप्रहारे जेयः ॥ ४१ ॥

हे भीम, प्रतिहतपरशुभरणतः प्रतिहतं परेषां शत्रूणां शुभं येन स तादृशो नु रणो येन तत् प्रतिहतपरशुभरणं तादृशात् परशुभरणतः परशोः स्वधितेर्भरणं धारणं तस्माद्धेतोः ख्यातं रामं परशुरामं युद्धे समेत्य अरिवलहा अरेः शत्रोः अर्थात् परशुरामस्यैव बलहा जेता यो रेजे स भीष्मो अस्माभिः संप्रहारे युद्धे कथं नु जेयः । नैव जेय इत्यर्थः ॥

यत्र च सांनिध्यमितौ क्षात्रो ब्राह्मस्तथाम्भसांनिध्यमितौ ।
द्वावपि वेदाचार्यः क्षत्राचार्यः स कथं भवेदाचार्यः ॥ ४२ ॥

हे भीम, यत्र च द्रोणाचार्ये अम्भसांनिध्यमितौ अम्भसां निधिवत् समुद्रवद् अमितौ अपारौ क्षात्रो धर्मः तथा ब्राह्मो धर्मश्च द्वावपि सदा सांनिध्यमितौ गतौ, स वेदाचार्यो वेदाध्यापकः क्षत्राचार्यः क्षत्राणां क्षत्रियाणां धनुर्वेदाचार्यश्च स द्रोणाचार्यः अस्माभिः आचार्यः गम्यो रणाभिमुखं कथं भवेत् । 'चर' गत्यर्थो धातुः । आचरितुमभिगन्तुं शक्य

---

१. 'चापरं' मूलपुस्तकपाठः.

आचार्यः । आच अ(आ)र्य इति पदच्छेदो वा । आ समन्ताद(दा)र्यो गम्यः । 'ऋ गतौ' धातुः ॥

युधि शलशल्यकृपाणां कुरुपृतनां प्राप्य निशितशल्यकृपाणाम् ।
अचिरादेव च मूढः पुमान्प्रयात्यन्तमपि च देवचमूढः ॥ ४३ ॥

निशितशल्यकृपाणां निशितानि तीक्ष्णानि शल्यानि शस्त्रफलकानि कृपाणाः खड्गाश्च यस्यां सा तादृशीं शलशल्यकृपाणां शलश्च शल्यो राजा च कृपः कृपाचार्यस्य तेषां संबन्धिनीं कुरुपृतनां कौरवसेनां युद्धे प्राप्य देवचमूढोऽपि देवानां चमूर्देवचमूः तया ऊढो धारितः । रक्षित इति यावत् । तादृशोऽपि मूढः मूर्खः पुमान् अन्तं नाशं प्रयात्येव ॥

पुनः सक्रोधो युधिष्ठिरः भीममरिभ्यस्त्रासयितुमाह—

अरिभिः सह जेयस्य स्मर कवचं कुण्डलं च सहजे यस्य ।
संरम्भी मानी ते कर्णो विद्धः कथं नु भीमानीते ॥ ४४ ॥

हे अनीते अविद्यमाना नीतिर्नयो यस्य स तादृश, हे भीम, अरिभिः शत्रुभिः दुर्योधनाद्यैः सह सार्धं जेयस्य अस्माभिर्जेतुमुद्युक्तस्य तस्य कर्णस्य कर्मभूतस्य त्वं स्मर । स्मृत्यर्थानां कर्मणि षष्ठी । तस्य कस्येत्याह—यस्य कवचं कुण्डलं च सहजे सहस्रांशुवरात् प्राप्ते । वज्रादिभिरप्यभेद्ये कुण्डलकवचे इत्यर्थः । ते तव संरम्भी क्रोधी तथा मानी च कर्णः कथं नु विद्धः हतः स्यादिति । यस्य तादृशे कवचकुण्डले स्तः स कथं विद्धो भवेदिति चिन्तयेत्यर्थः । स्मरेत्यनेनैव पृथक्संबन्धः । हे भीम, त्वं स्मर एतत्स्मरेत्यर्थः । अरिभिः सार्धं जेतुमिष्टस्य यस्य सहजे कवचं कुण्डलं च स्तः स ते तवोपरि संरम्भी क्रोधी तथा मानी च कर्णः कथं नु विद्धो भवेदिति । अत एव सक्रोधम् अनीते इत्युक्तम् ॥

पूर्वोक्तं संक्षेपेणोपसंहर्तुमाह—

इह मे सन्नाशाय त्वया ह्युपायान्तराणि संनाशाय ।
अहितानामुच्यन्तां तदन्यथा वाक्यविरचना मुच्यन्ताम् ॥ ४५ ॥

हे भीम, तत्तस्मात्कारणात् इह अत्र वस्तुनि शत्रुविनाशरूपे सन्नाशाय सन्ना लीना आशा यस्य स तादृशाय मे मह्यं हि निश्चये । 'त्वयापि' इति पाठः । अहितानां शत्रूणां दुर्योधनादीनां संनाशाय सम्यक् नाशः संनाशः तस्मै उपायान्तराणि अन्ये उपाया उच्यन्तां कथ्यन्ताम् । अन्यथा चेदत्रोपायो नास्ति । तर्हि वाक्यविरचनाः वाक्यानां कल्पना मुच्यन्तां त्यज्यन्तामित्यर्थः ॥

इत्थं मानसमेतौ बोधयति नराधिपे स्वमानसमेतौ ।
पुर आविरभूद्देवः श्रीमान्व्यासो जगत्स्थविरभूदेवः ॥ ४६ ॥

---

१. 'वध्यः' मूल०.

इत्थमनेन प्रकारेण नराधिपे राज्ञि युधिष्ठिरे एतौ द्रौपदीभीमसेनौ स्वमानसं स्वचित्तं बोधयति सबोधं कुर्वति सति । द्विकर्मकोऽयं णिजन्तः । जगत्स्थविरभूदेवः जगति जङ्गमे स्थविरे स्थावरे च या भूः तस्या देवो देवतुल्यः । यद्वा तत्र भूदेवः ब्रह्मा श्रीमान् व्यासो व्यासमुनिः पुरोऽग्रे आविरभूदेव । तेषामिति शेषः । 'जगज्जङ्गमलोकयोः' इति मङ्खः ॥

राज्ञे स त्वच्छाय स्वयमदिशन्मन्त्रमधिकसत्त्वच्छायः ।
रिपुरोधी मान्येन स्थाणुं पार्थो भजेत धीमान्येन ॥ ४७ ॥

तु पक्षान्तरे स श्रीव्यासमुनिः अच्छाय निर्मलाय शुचये राज्ञे युधिष्ठिराय तं मन्त्रमदिशत् ददौ । कीदृशः स मुनिः । अधिकसत्त्वच्छायः अधिकं सत्त्वं सत्त्वगुणः धैर्यं वा छाया शोभा यस्य स तादृशः । तं मन्त्रं कमित्याह—रिपुरोधीति रिपून् रुणद्धीति रिपुरोधी पार्थोऽर्जुनः येन क्रमादवाप्तेन मान्येन पूज्येन मन्त्रेण स्थाणुमीश्वरं भजेत । सेविष्यते इत्यर्थः ॥

सुतरामाराध्यन्तं धर्मसुतः प्राप्य मन्त्रमाराध्यं तम् ।
स पराशरदायादात्पार्थाय च शत्रुसैन्यशरदायादात् ॥ ४८ ॥

धर्मसुतो युधिष्ठिरः सुतरामतिशयेन आराध्यमाराधनीयं तथा आराध्यन्तम् अरीणां समूह आरम् तस्मात् य आधिः मनःपीडा आराधिस्तस्य अन्तः । तत्स्वरूपमित्यर्थः । पराशरदायादात् पराशरमुनिपुत्रात् श्रीव्यासमुनेराप्तं पार्थाय च अर्जुनाय च अदात् । कीदृशाय । शत्रुसैन्यशरदाय शत्रुसैन्याय शरान् ददातीति तस्मै । 'दायादौ सुतबान्धवौ' इत्यमरः ॥

तस्यावाचश्चरणे गलमालिङ्गन्नुवाच वाचश्च रणे ।
अर्जुन रक्षा मम ते भरश्च शत्रोश्च हानिरक्षाममते ॥ ४९ ॥
स गुडाकेशानन्तं भगवन्तं भज शमाधिकेशानं तम् ।
स हि बहुधाराधयता सुखदृश्यः शंकरोऽम्बुधारा धयता ॥ ५० ॥
इति तं तरसादिशता स्मरतारिचमूश्च चारुतरसादिशताः ।
धृतममुना दोलाभं मनो स्मरद्राज्यमपि स नादो लाभम् ॥ ५१ ॥

तस्य अर्जुनस्य चरणे अङ्घ्रौ अवाचः नम्रस्य गलं कण्ठमालिङ्गन् स युधिष्ठिरस्तं पार्थं वाच उवाच । किमिति । हे अर्जुन, रणे युद्धे मम रक्षा ते भरः भारोऽस्ति । मद्रक्षाभरस्तव स्कन्धे इत्यर्थः । हे अक्षाममते, अक्षामा महती मतिर्यस्य तत्संबोधनं हे पार्थ, शत्रोर्हानिश्च ते भरः त्वयैव सा विधेया इत्यर्थः । स गुडाकेशेति । गुडाका निर्निद्रता तस्या ईशः तस्य संबोधनं हे गुडाकेश, हे शमाधिक, शमेन शान्त्या अधिकः तस्य संबोधनम् । त्वं तं त्रिजगत्प्रसिद्धम् अनन्तं न विद्यते अन्तो यस्य स तं भगवन्तमीशानं

शंभुं भज। हि निश्चये। बहुधा बहुप्रकारैराराधयता। तथा अम्बुधारा एव धयता पिबता। 'धेट् पाने' धातुः । त्वया स शंकरः । शं त्रिजगतो निःश्रेयसं करोतीति शंकरो विभुः सुखदृश्यः सुखेन दृश्यः । इत्यनेन प्रकारेण तमर्जुनं तरसा शीघ्रमेव आदिशता तथा चारुतरसादिशताः चारुतराणि अतिचारूणि सादिनामश्ववाराणां शतानि यस्यां सा तादृशीररिचमूश्च स्मरता अमुना युधिष्ठिरेण दोलाभं दोलायितं मनो धृतम् । तथा स युधिष्ठिरोऽदो राज्यमपि लाभं नास्मरत् । अर्जुनवियोगेन शोकविह्वलः सन् सर्वं तृणमिव मेने इत्यर्थः ॥

श्रुतकौरवमधुराज्ञः पार्थो मङ्गल्यपूर्ववरमधु राज्ञः ।
सरसं चापीयातश्चीरी जटिलः शरासिचापी यातः ॥ ९२ ॥

अथानन्तरं श्रुतकौरवमधुराज्ञः श्रुता कौरवस्य कुरुवंश्यस्य युधिष्ठिरस्य मधुरा आज्ञा येन स तादृशः पार्थो राज्ञो युधिष्ठिरात् मङ्गल्यपूर्ववरमधु मङ्गल्यं स्वस्त्ययनं तत्पूर्वो यो वरः आशीर्वचनरूपः स एव मधु तत् सरसं कृत्वा आपीय । श्रुत्वा इत्यर्थः । चीरी चीरवान् जटिलश्च । तथा श्रीमुन्याज्ञया शरासिचापी च धृतखड्गचापशरश्च अतोऽस्मात्स्थानाद्यातो गतः ॥

रुरुपृषतापीतरसा विलङ्घ्य सरितस्ततः प्रतापी तरसा ।
दिव्यजनाभोऽगस्य प्रस्थं स प्राप स तुहिनाभोगस्य ॥ ९३ ॥

रुरवो मृगविशेषाः पृषताश्च तैरापीतो रसो जलं यासां ता मनुष्यैरदुर्लङ्घ्यत्वात्तैरेव पीतजलाः सरितो नदीस्तरसा बलेन विलङ्घ्य ततोऽनन्तरं प्रतापी प्रतापवान् सोऽर्जुनो दिव्यजनाभो देवजनतुल्यस्तुहिनाभोगस्य तुहिनमयो हिममय आभोग आकृतिर्यस्य स तादृशस्य अगस्य पर्वतस्य हिमाचलस्य प्रस्थं शिखरमाप ॥

स ज्वलदाशाकाशस्तस्थौ तत्रार्जुनस्तदाशाकाशः ।
श्रितशंभूवाह रहश्चेतस्तपसा कृशो बभूवाहरहः ॥ ९४ ॥

ज्वलदाशाकाशः ज्वलन्त्य आशा दिशः, आकाशः गगनं यस्मात्सः । अतितेजोमयत्वादित्यर्थः । सोऽर्जुनस्तत्र हिमवति तदाशाकाशः सा चासावाशा तदाशा ईश्वरप्रसादनाशा तां काशति मनसि ध्यायतीति तादृशस्तत्रैव तस्थौ । स चार्जुनो रहो विजने एकाकी सन् श्रितशंभु वाङ्मनःकर्मभिः श्रितः शंभुस्त्रिजगन्नाथो येन तत् तादृशं चेतः स्वचित्तमुवाह आधारयत् । तथा अहरहः प्रतिदिनं कृशः तपसा हेतुना कृशः अतिक्षीणो बभूव ॥

दलितमहावप्रोऽथ स्थिरखुरपातेन परमहावप्रोथः ।
तं समदारात्यन्तं क्रूरः कोलः कदाचिदारात्यन्तम् ॥ ९५ ॥

अथानन्तरं स्थिरखुरपातेन स्थिरो यः खुरपातस्तेन दलितमहावप्रः दलितानि महा-

वप्राणि वृहन्तस्तटा येन । तथा परमहावप्रोथः परमोऽद्भुतो हावो लीला यस्य स तादृक् प्रोथो मुखाग्रं यस्य स तादृशोऽत्यन्तं क्रूरः कोलः सूकरः कदाचित्तमर्जुनमार उपाययौ । कीदृशं तम् । समदारात्यन्तं समदा ये अरातयः शत्रवस्तेषामन्तस्तत्स्वरूपम् ॥

तदनु हसन्नादाय त्वरितो गाण्डीवमतुलसन्नादाय ।
सोऽनलभा वरविशिखानमुञ्चदस्मै हृतप्रभावरविशिखान् ॥ ९६ ॥

तदनु तदनन्तरं सोऽर्जुनः हसन् त्वरितः सन् गाण्डीवं धनुरादाय अनलभा अनलवत् अग्निवत् भा दीप्तिर्यस्य तादृशोऽस्मै वराहाय वरविशिखान् उत्तमशरान् अमुञ्चत् चिक्षेप । अस्मै वराहाय कीदृशाय । अनुलसन्नादाय अनुलसन् नादो शब्दो यस्य स तस्मै । कीदृशान्वरविशिखान् । हृतप्रभावरविशिखान् हृतप्रभावा रविशिखाः सूर्यज्वाला, यद्वा रस्य अग्नेः विशिष्टाः शिखा वा येभ्यस्ते तादृशान् ॥

बाणवरा हेमहिता यदा तदा निपतिता वराहे महिताः ।
चापशरी रोधरतः शबरो ददृशे महाशरीरो धरतः ॥ ९७ ॥

तदा तस्मिन्काले महिताः पूजिताः, तथा हेमहिता हेम्ना सुवर्णेन हिताः । सुवर्णपुङ्खाः इत्यर्थः । बाणवरा उत्तमशराः यदा वराहे निपतिताः । यद्वा—अतदा अतं सततगमनं द्यन्ति खण्डयन्ति ते अतदाः.अतदाः बाणवराः । 'अत सातत्यगमने' । 'दो अवखण्डने' धातुः । तदा तेनार्जुनेन रोधरतो रोधे रोधने रतो व्याधश्चापशरी धनुःशरवान् महाशरीरो महाकायो धरतः पर्वतात् ददृशे । आगच्छन्निति शेषः ॥

ताडय मा मे कोलं हन्तुमहं मेदिनीमिमामेकोऽलम् ।
अस्त्रैरङ्गेह त्वा तृप्तिं यास्यामि युद्धरङ्गे हत्वा ॥ ९८ ॥
रुद्धदिगुर्वि व्याधः स्फुरदिपुवृष्ट्येति परुपगुर्विव्याध ।
असुभिर्विकलं कोलं धनंजयोऽपि व्यधत्त विकलङ्कोऽलम् ॥ ९९ ॥
(युग्मम्)

इत्यनेन प्रकारेण परुषगुः परुषा गावो वाचो यस्य स तादृक् व्याधः शबरः स्फुरदिपुवृष्ट्या स्फुरन्ती या इपुवृष्टिः तया रुद्धदिगुर्वि रुद्धा दिशः उर्वी च पृथ्वी यया स्यात्तथा कोलं वराहं विव्याध अताडयत् । इति किमित्याह—अङ्ग आमन्त्रणसामान्येऽपि । अङ्ग वीर[१], मे मम कोलं वराहं मा ताडय, इमां मेदिनीं भूमिं सकलामेकोऽहं हन्तुम् अलं समर्थः । अङ्ग वीर, अहं त्वा त्वां युद्धरङ्गे युद्धरूपे नाट्यस्थले अस्त्रैर्मन्त्रप्रयुक्तशस्त्रैः हत्वा तृप्तिं यास्यामि । अस्त्रैरित्यनेन स्वस्य महारथत्वं सूचयति । असुभिरिति । धनंजयोऽपि अर्जुनोऽपि विकलङ्कः कलङ्करहितः असुभिः प्राणैर्विकलं हीनं परासुं तं कोलं व्यधत्त ॥

---

१. 'नमुचत्तस्मै' मूल०

स परुषगीर्वाणानां श्रेणिममुञ्चद्वरेऽत्र गीर्वाणानाम्।
उग्रतरा जव्याजेरजिरे धारितकिरातराजव्याजे ॥ ६० ॥

सोऽर्जुनः परुषगीः क्रूरवाक् सन् जवी वेगवान्। तथा—उग्रतराः कठिनं तरो वेगो यस्य स आजेरजिरे संग्रामाङ्गणे बाणानां शराणां श्रेणिं धारितकिरातराजव्याजे धारितः किरातराजव्याजो येन स तादृशे अत्र गीर्वाणानां वरे श्रेष्ठे शंभौ अमुञ्चत् ॥

अरिसमितावक्रशितास्तयोस्ततस्तैलपायिता वक्रशिताः।
पर्यगुरुग्रा बाणाः[1] संक्षुण्णगिरिगुरुग्रावाणाः[2] ॥ ६१ ॥

ततस्तदनन्तरं तयोरर्जुनकिराताधिपयोः उग्राः कठिनाः, तथा संक्षुण्णगिरिगुरुग्रावाणाः संक्षुण्णाश्चूर्णीकृता गिरीणां पर्वतानां ये गुरुग्रावाणाः महापाषाणाः तेषामाणो गतिर्यैस्ते। 'अण रण गतौ'। अणनम् आणः। तथा—अरिसमितौ रिपुसङ्ग्रामे अक्रशिताः न कृशीभू(कृ)ताः। तथा—तैलपायितास्तैलेन पायिताः शोधिताः निर्मलीकृताः। तथा—वक्रशिताः वक्राश्च तीक्ष्णाश्च बाणाः शराः पर्यगुः परितः अगुः विससृपुः। अत्र संगरे। 'सङ्गे सभायां समितिः' इत्यमरः ॥

कुपितः कैरातपतिः स्मयमानस्तत्र सायकैरातपति।
अरिदम्भक्षयदस्तान्किरीटिनो मार्गणानभक्षयदस्तान् ॥ ६२ ॥

अरिदम्भक्षयदोऽरीणां दम्भश्छलं तस्य क्षयदः, तथा कुपितः स कैरातपतिः किरातानां समूहः कैरातं तस्य पतिः, तत्र तस्मिन् अर्जुने सायकैः शरैरातपति संतापयति सति, स्मयमानः ईषद्धसमानः, अस्तान् क्षिप्तान् तान् किरीटिनोऽर्जुनस्य मार्गणान् बाणान् अभक्षयत् निःशेषीचकारेत्यर्थः ॥

सुबृहदुरस्त्राणान्ते रणे गणा न प्रसेदुरस्त्राणां ते।
सकलकलापेतस्य स्थितिं न जग्मुः कलापे तस्य ॥ ६३ ॥

सुबृहदुरस्त्राणान्ते सुबृहतः उरस्त्राणस्य कवचस्य अन्तो यत्र तस्मिन् रणे सकलकलापेतस्य युद्धविषये याः सकलाः कलास्ताभ्योऽपेतस्य तस्यार्जुनस्य ते प्रसिद्धा अस्त्राणां गणा न प्रसेदुः न सिद्धिं गताः। तथा—तस्यार्जुनस्य शराः कलापे तूणीरे अक्षयेऽपि स्थितिं न जग्मुः। निःशेषीभूता इत्यर्थः। 'कलापो भूषणे बर्हे तूणीरे संहतेऽपि च' इत्यमरः ॥

स शिलीमुखरहितायां कार्मुकयष्ट्यां रणेषु मुखरहितायाम्।
तस्मै दिव्याय तया ताडनमददादथापदि व्यायतया ॥ ६४ ॥

सोऽर्जुनो रणेषु संग्रामेषु मुखरहितायां मुखरा प्रौढा, हिता च तस्याम्। तथा—शिलीमुखरहितायां शररहितायां कार्मुकयष्ट्यां धनुर्लतायां सत्यां दिव्याय तस्मै किरातव्या-

---

१. 'बाणश्रेण्यः' मूल०. २. 'ग्रावाणः' मूल०.

जधराय शंभवे तया धनुर्यष्ट्या ताडनमददात् प्रददौ । कस्याम् । आपदि तादृशसंकटे । कीदृश्या तया । व्यायतया दीर्घया ॥

गुर्वी दुर्वारा सा किरातराजेन युगपदुर्वारासा ।
नागसमा नागारिप्रतिमेन जवान्निपात्यमानागारि ॥ ६५ ॥

तेन किरातार्जुनेन गुर्वी महती । तथा—दुर्वारा दुःखेन वारयितुं शक्या । तथा—नागसमा सर्पसदृशी । तथा—उर्वारासा उरुर्महान् आसमन्तादासः शब्दो यस्याः सा जवाद्वेगेन निपात्यमाना सती अगारि निगीर्णा । 'गृ निगरणे' धातुः । कीदृशेन किरातराजेन । नागारिप्रतिमेन नागारिर्गरुडस्तत्सदृशेन । यथा गरुडेन नागो निगीर्यते तद्वत्किरातराजेनापि सा धनुर्यष्टिर्निगीर्णेत्यर्थः ॥

उपहृतकाननमग्नेः स्फुटलब्धे धनुषि लुब्धकाननमग्ने ।
स द्रुतमहिमन्युरसिद्वितीयमपतद्द्विषः समहिमन्युरसि ॥ ६६ ॥

उपहृतमुपहारीकृतम् । दग्धमित्यर्थः । काननं खाण्डवाख्यं यत्र तस्मिन् कर्मणि । तथा अग्नेः सकाशात् स्फुटं वरदानात् लब्धे धनुषि लुब्धकाननमग्ने लुब्धकस्य व्याधस्य यत् आननं मुखं तत्र मग्ने मुद्रिते सति निगीर्णे सति सोऽर्जुनोऽहेः क्रुद्धस्येव मन्यू रोषो यस्य स तादृशः सन् असिद्वितीयम् असिः खड्गो द्वितीयः सहस्थायी यस्मिन् कर्मणि तत् । तथा कृत्वा द्विषः शत्रोः किरातराजस्य उरसि द्रुतं शीघ्रं न्यपतत् । कीदृशे उरसि । समहिमनि सह महिम्ना वर्तते यत्तत् तादृशे ॥

सोऽपि च समुदग्रासिप्रवरः शबरेश्वरेण समुदग्रासि ।
अभिनदशङ्कोपेतं मुष्ट्यापार्थोऽपि कर्कशं कोपे तम् ॥ ६७ ॥

शबरेश्वरेण किरातराजेन सोऽपि पूर्वोद्दिष्टः समुदग्रासिप्रवरः समुदग्रो महान् असिप्रवरः खड्गश्रेष्ठः समुदग्रासि संग्रस्तः । यद्वा समुदग्रासिप्रवरः समुदग्रोऽसिप्रवरो यस्य स तादृशः । सोऽपि अर्जुनोऽपि समुदग्रासि संग्रस्तः । ततश्च पार्थोऽपि अर्जुनोऽपि कोपे क्रोधे सति कर्कशं क्रूरमशङ्कोपेतं न शङ्कया उपेतं सहितं तं किरातराजं मुष्ट्या अभिनत् अहनत् । मुष्टिशब्दो द्वयोः ॥

न्यपतच्चण्डालस्यः स्फुटिततनुर्मुष्टिभिश्च चण्डालस्य ।
स ववन्दे वेदमयं नाथं जगतां मनश्च देवे दमयन् ॥ ६८ ॥

स पार्थश्चण्डालस्य वनचण्डालस्य किरातस्य मुष्टिभिः स्फुटिततनुः स्फुटिता हता तनुर्यस्य स तादृशो न्यपतत् । भुवीति शेषः । कीदृशः । चण्डालस्यः चण्डमालस्यं यस्य सः । ववन्दे इति । अनेन च तस्मिन्नर्जुने निपतिते दयालुस्त्रिजगत्पतिः शंभुस्तस्य गोचरं गत इति प्रकटीकरोति । स चार्जुनः वेदमयं वेदरूपं जगतां नाथं श्रीशिवं दृष्टिगोचरं गतं ववन्दे । किं कुर्वन् । देवे श्रीशंकरे मनश्चित्तं दमयन् नियमयन् । सावधानं कुर्वन् इत्यर्थः ॥

अथ रिपुकेसरिदम्भस्तम्भकरं बिभ्रतं च के सरिदम्भः ।
भक्तजनाधिकचपलं मनः शिरोमण्डलं च नाधिकचपलम् ॥ ६९ ॥
धृतभूमिश्रीभूतं भगवन्तं भस्मराशिमिश्रीभूतम् ।
कलितं चोरगलतया शबलं शरदम्बरांशुचोरगलतया ॥ ७० ॥
पितृवनसदनं गहनं सुगाहमसतां सतां च सदनङ्गहनम् ।
मूर्धनि सोमाभरणं पार्श्वोद्देशे तथैव सोमाभरणम् ॥ ७१ ॥
जितनीचरणं हरिणा श्रितकरमभिवन्द्यमानचरणं हरिणा ।
अहरवसाननटं कं यमिनो गमयन्तमुद्गताननटङ्कम् ॥ ७२ ॥
स दधद्दमरसमग्रे स्थितं जनौघे विराजदमरसमग्रे ।
कौशिकिरातङ्कान्तं ददर्श देवं न तं किरातं कान्तम् ॥ ७३ ॥
(पञ्चभिः कुलकम्)

स कौशिकिः कौशिकसेन्द्रस्यापत्यं कौशिकिरर्जुनः । 'महेन्द्रगुग्गुलूलूकव्यालग्राहेषु कौशिकः' इत्यमरः । एवंविधमग्रे स्थितं देवं श्रीशंकरं स्थितं ददर्शेति संबन्धः । कीदृशः कौशिकिः । दमरसं दमो बाह्येन्द्रियनिग्रहः तस्य रसस्तं दधत् । कीदृशं देवम् । रिपुकेसरिदम्भस्तम्भकरम् । रिपवः शत्रव एव केसरिणः सिंहास्तेषां दम्भं स्तम्भं निश्चेष्टत्वं करोति स तादृशम् । पुनः कीदृशम् । के मूर्ध्नि सरिदम्भः सरितो गङ्गाया अम्भो जलं बिभ्रतम् । 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः' इत्यमरः । पुनः कीदृशम् । मनश्चित्तं भक्तजनाधिकचपलम् । भक्तजने सेवकजने अधिकं चपलं तादृशं न दधत् । तेषु स्थिरानुग्रहं मनो दधदित्यर्थः । तथा शिरोमण्डलं शिरसां मण्डलं समूहं देवस्य पञ्चमुखत्वात् अधिकचपलं कचाः केशाः पलं मांसं च तत् कचपलम् अधिकं कचपलं यस्य तदधिकचपलं तादृशं शिरोमण्डलं न दधत् । समकेशं नातिस्थूलं नातिकृशं मांसं चेत्यर्थः ॥ पुनः कीदृशं देवम् । धृतभूमिश्रीभूतं भूमिः पृथ्वी च श्रीः लक्ष्मीः भूतानि प्राणिनश्च धृतानि तानि येन स तादृशम् । धृतपृथ्वीमण्डलं धृतश्रीकम् । धृतविश्वं चेत्यर्थः । पुनः कीदृशम् । भगवन्तम् । 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्यस्य च मोक्षस्य षण्णां भग इति स्मृतः ॥' तद्गुणयुक्तम् । पुनः कीदृशम् । भस्मराशिमिश्रीभूतम् । भस्मराशिना भस्माङ्गरागेण मिश्रीभूतं सेवितम् । पुनः कीदृशम् । उरगलतया उरगः सर्प एव या लता हारलता तया कलितं भूषितम् । पुनः कीदृशम् । शबलं श्वेतकृष्णवर्णम् । कया । शरदम्बरांशुचोरगलतया शरदम्बरस्य शरत्कालगगनस्य अर्थात् अतिनीलस्य स्वच्छस्य च ये अंशवः किरणाः तेषां चोरः स्तेनो यो गलस्तस्य भावस्तत्ता तया । स्वतो विभूतिस्वच्छदेहस्य नीलगलत्वात् । 'चोरश्चौर' इति द्विरूपकोशे ॥ पुनः

कीदृशम् । पितृवनसदनं पितृवनं शवास्पदं तदेव सदनं गृहं यस्य स तादृशम् । पुनः कीदृशम् । असतां खलानां दुष्टचित्तानां गहनं दुष्प्रापम्, सतां च भक्तजनानां सुगाहं सुलभम् । पुनः कीदृशम् । सदनङ्गहनम् । सन् सुकुमाराङ्गो योऽनङ्गः कामस्तं हन्तीति सदनङ्गहा तादृशम् । पुनः कीदृशम् । मूर्धनि शिरसि सोमाभरणं सोमश्चन्द्र एवाभरणं भूषणं यस्य स तादृशम् । पुनः कीदृशम् । तथैव तेनैव प्रकारेण पार्श्वोद्देशे वामाङ्गभागे सोमाभरणम् उमायाः पार्वत्या भरणं धारणमुमाभरणं सह उमाभरणेन वर्तते यः स सोमाभरणम् । 'डुभृञ् धारणपोषणयोः' धातुः ॥ पुनः कीदृशं देवम् । जितो नीचानां दुष्टानां दैत्यानां रणो येन स तादृशम् । पुनः कीदृशम् । श्रितकरं श्रितः करो हस्तो यस्य स तादृशम् । केन । हरिणा चन्द्रेण । मृत्युंजयस्य चन्द्रधारणात् करे । 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥' इत्यमरः । पुनः कीदृशम् । हरिणा विष्णुना इन्द्रेण अर्केण वा अभिवन्द्यमानचरणम् । पुनः कीदृशम् । अहरवसाननटम् । अहरवसाने संध्यासमये नटं जगदुद्भूत्यै नाट्यं विदधानमित्यर्थः । पुनः कीदृशम् । यमिनो योगरतान् कं सुखं परमानन्दरूपं गमयत् प्रापयत् यस्तम् । 'सुखशीर्षजलेषु कम्' इति विश्वः । पुनः कीदृशम् । उद्गताननटङ्कम् । उद्गता उत्पन्ना आननानां पञ्चानां तत्पुरुषाघोरवामदेवसद्योजातेशानरूपाणां टङ्कोऽद्भुता विच्छित्तिः तं दधानम् । पुनः कीदृशम् । अमरसमग्रे अमरैर्निर्जरैर्ब्रह्मादिभिः समग्रे पूर्णे जनौघे स्थितमासीनम् । एवंविधं देवमग्रेस्थितम् अर्जुनो ददर्शेति संबन्धः । पुनरर्जुनस्तं प्रागनुभूतं किरातं शबरं न ददर्श । किंविशिष्टम् । कान्तं रम्यम् ॥

प्रेक्ष्य च सुरवं शबरं पार्थेन प्रेक्ष्य चैव सुरवंशवरम् ।
व्रणजातत्यक्तेन प्रोत्थितमानन्दबाष्पततत्यक्तेन ॥ ७४ ॥

पार्थेन अर्जुनेन सुरवं सु शोभनो रवः शब्दो यस्य स तादृशं शबरं किरातमादौ प्रेक्ष्य प्रोत्थितम् । कीदृशेन । व्रणजातत्यक्तेन व्रणजातेन व्रणसमूहेन त्यक्तः । निर्व्रणीभूत इत्यर्थः । तादृशेनोत्थितम् । पुनश्च पार्थेनार्जुनेन सुरवंशवरं वंशः समूहः ब्रह्मविष्ण्वादिः तत्र वरः श्रेयान् श्रीशंकरः तं प्रेक्ष्योत्थितम् । कीदृशेन । आनन्दबाष्पततत्यक्तेन आनन्दबाष्पाणां या ततिः समूहस्तया अक्तोऽभ्यक्तस्तेन ॥

स ततो मानं दमयन्निरीक्षमाणः पुमांसमानन्दमयम् ।
तुष्टाव महादेवं तुष्टं बीभत्सुराहवमहादेवम् ॥ ७५ ॥

ततोऽनन्तरं स बीभत्सुरर्जुन आनन्दमयं परमानन्दमयं पुमांसं श्रीशिवभट्टारकं निरीक्षमाणो नितरामीक्षमाणः सन् मानमहंकारं दमयन् खण्डयन् एवं पूर्वोक्तप्रकारेण आहवमहात् विभुना कृतो य आहवो युद्धं स एव मह उत्सवस्तस्मात् तुष्टं श्रीमहादेवं तुष्टाव ॥

किमिति श्रीशंकरं तुष्टाव—

दलिताञ्जननीलाभस्कन्ध न वन्ध्यो ममाद्य जननीलाभः।
जन्म स तावल्लभते कारुण्यं यत्र[1] गिरिसुतावल्लभ ते॥ ७६॥

हे दलिताञ्जननीलाभस्कन्ध दलितं खण्डितं यदञ्जनं तद्वन्नीलाभः स्कन्धः स्कन्धरोपान्तभागो नीलगलत्वादस्य एवंभूत हे विभो, अद्य अस्मिन् काले जननीलाभः जनन्या मातुर्लाभः मम वन्ध्यो निष्फलो न। किं तु सफल एव। ननु पुनरावृत्तेर्निष्फल एव किं नास्तीत्याह—हे गिरिसुतावल्लभ पार्वतीप्राणनाथ, यत्र जन्तौ तव कारुण्यं कृपाधिक्यम्, स तावज्जन्म लभते सदैव श्रीशिवभक्तिरसपीयूषपानपवित्रितकलेवराणां देहिनां जन्मैवेति स्पृहणीयम्। न पुनर्गौतमशापेनाहल्यायाः शिलामयीभवनमिव सर्वतो निर्वृत्तिरूपशान्तरसप्रायं वैकल्यमित्यर्थः॥

उदितः सच्चित्तत्त्वं ब्रह्मेति दधद्भिरच्छसच्चित्तत्वम्।
गुरुमहिमा ननु परमस्त्रय्या त्वं बोधितः पुमाननुपमरमः॥ ७७॥

हे विभो, अच्छसच्चित्तत्वम् अच्छं पौनःपुन्येन विवेकवारिणा धौतम्, अत एव सत्स्थिरं चित्तं यस्य स तस्य भावः तत्त्वं दधद्भिर्धारयद्भिः तदेकतानैर्भावुकैः साधुजनैस्त्वं तत्साचित् चैतन्यरूपं ब्रह्म बृंहतीति ब्रह्म। 'बृहि वृद्धौ' धातुः। परं ब्रह्म त्वमसीति उदितो व्याख्यातः। यद्वा त्वं ब्रह्मेति ख्यातः। ब्रह्मापि त्वमेव। जगत्स्रष्टृत्वं रूपान्तरेणासी(स्ती)ति। तदुक्तम्—'बृहदंस्य शरीरं यदप्रमेयं प्रमाणतः। बृहद्विस्तीर्णं इत्युक्तं ब्रह्मा तेन स उच्यते॥' बृहयति प्रज्ञामिति वा ण्यन्तः। ब्रह्मा त्वमसीति तैस्त्वमुदितः। ननु निश्चये। हे विभो, त्रय्या वेदत्रय्या गुरुमहिमा महामहिमयुक्तः। तथा—परम उत्कृष्टः पुमान् पुरुषः परमात्मरूपः। तथा—अनुपमरमः अनुपमा अनन्यगामिनी रमा श्रीर्यस्य स तादृशो बोधितः निश्चितः। यद्वा—त्रय्या देवानां त्रय्या ब्रह्मविष्णुरुद्ररूपया त्वं खलु त्वयैव परमेश्वरेण जगतः सृष्टिस्थितिसंहृतिकर्मणि प्रेरितया त्वं परमात्मा बोधितः निर्णीतः। त्रय्या अकारोकारमकाररूपया वर्णत्रय्यापि वा ओमिति परं तत्त्वं त्वं परमपुरुषो बोधित इति वा॥

यदि देव सुधाभानुः खं मरुदात्मानलोऽम्बु वसुधा भानुः।
प्रतिपन्ना भवदन्तः परं वराकाः शरद्घनाभ वदन्तः॥ ७८॥

हे देव त्रिजगत्पते, एते सुधाभानुप्रभृतयः सुधा सुधामया भानवः किरणा यस्य स सुधाभानुश्चन्द्रः, खं वियत्, मरुद्वायुः, आत्मा यजमानः, अनलोऽग्निः, अम्बु जलम्, वसुधा मही, भानुः सूर्यः, एता अष्ट मूर्तयो देवस्य यद्यपि सन्ति, तथाप्येते चन्द्रप्रभृतयः भवदन्तः भवतः अन्तर्मध्यं तत्प्रतिपन्ना अग्नेरिव ज्वलतः स्फुलिङ्गास्तवामी

१. 'यत्र' मूल०.

सुधाभानुप्रभृतयस्त्रिजगत्प्रतिपालनाय समहिमोद्द्योतांशाः त्वदन्तरेव सृष्टिसंहारक्रमेण नियताः सन्तीति भावः । हे शरद्घनाभ विभूतिभूषिताङ्गत्वात्स्वच्छशरदभ्रप्रतिम, वराकाः शोच्या परमन्यत् वदन्तः सन्ति । ते सुधाभानुप्रभृतयः अन्ये सन्तीति वदन्तो बालिशा एवेत्यर्थः ॥

विग[1]लितनरकेशे ते निन्दावानिन्द्र एव नरके शेते ।
मुदितमना देव त्वं कृमयेऽपि ददासि चिन्तनाद्देव त्वम् ॥ ७९ ॥

हे त्रिजगत्पते, ते निन्दावान् भवन्निन्दकः, कदाचित् इन्द्र एव निजाभाग्यवशात् दुष्टचित्तः सन् विगलितनरकेशे विगलिताः पतिताः नरकेशा मनुष्यकेशा यत्र तादृशि नरके निरये शेते लुठति । तथा चोक्तं महाभारते शान्तिपर्वण्युत्तरगीतासु श्रीव्यासमुनिना—'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमवज्ञाय दुःखस्यान्तो भविष्यति ॥' इति । अवज्ञाय निन्दया अवगण्येत्यर्थः । हे देव जगन्नाथ, चिन्तनादहर्निशं त्वद्ध्यानान्मुदितमना मुदितं मनो यस्य स तादृशः सन् त्वं कृमयेऽपि स्वल्पकीटायापि देवत्वममरत्वं ददासि वितरसि ॥

न जगति वै भव मत्तः पुमान्प्रमत्तोऽस्ति वीर्यवैभवमत्तः ।
सततं यो मे शरणं तेन हि कृतवांस्त्वयोमेश रणम् ॥ ८० ॥

हे उमेश पार्वतीप्राणनाथ हे भव, भवति अस्मात्सर्वं जगदिति भवः तत्संबोधनम् । जगति अत्र संसारे वीर्यवैभवमत्तः वीर्येण पराक्रमेण वैभवेन लक्ष्मीमदेन च मत्तः क्षीबः मत्तः सकाशादन्यः पुमान् प्रमत्तः प्रमादवान् नास्ति । य[त]स्त्वं स्वामी सततं सदा मे मम शरणं रक्षिता असि, तेन त्वया किरातरूपधरेण सह रणं संग्राममहं कृतवान् । अतोऽहं प्रमत्तोऽस्मीत्यर्थः ॥

अपि परिभवदे वादे यदपकृतं संगरे च भव देवादे ।
मयि खलु घनमोहरते क्षन्तव्यं तत्त्वयानघ नमो हर ते ॥ ८१ ॥

हे देवादे देवानां ब्रह्मादीनामादिस्तत्संबोधनम्, हे भव शंकर, परिभवदे पराभवप्रदेऽपि वादे मया यदपकृतं तव किरातवेशधारिणः अपभ्रष्टमुक्तम् । तथा—संगरे त्वया सह युद्धेऽपि यदपकृतमपभ्रष्टमुक्तम् । हे विभो, खलु निश्चये, घनमोहरते घनो यो मोहोऽज्ञानं निर्विवेकत्वं तत्र रते लीने मयि हे हर, हरति पापं त्रिविधमिति हरः तत्संबोधनम् । त्वया विभुना तत्सर्वं क्षन्तव्यम् । हे अनघ निष्कलङ्क हे हर, ते तुभ्यं नमः प्रणतिरस्तु ॥

भक्तिरसादीशस्तं नमन्तमिति पाण्डवं प्रसादी शस्तम् ।
ऊचे भागवतं स त्वयि प्रसन्नोऽस्मि पुण्यभागवतंस ॥ ८२ ॥

इत्यनेन प्रकारेण भक्तिरसात् नमन्तं शस्तं प्रशस्तं तमर्जुनं भागवतं भगवान् शिवो

---

१. 'विरचित' मूल०. २. अत्र पक्षे 'चिन्तनाद्देव त्वम्' इति पाठोऽनुमीयते.

देवतास्येति भागवतस्तं देवं प्रसादी प्रसन्नः ईशः स्वामी शिव ऊचे। किमित्याह—हे पुण्यभागवतंस पुण्यभाजां नराणामवतंसः शिरोभूषणं तत्संबोधनम्। अहं त्वयि प्रसन्नोऽस्मि॥

अरिलोपार्थमुदारं मदीयमस्त्रं गृहाण पार्थ मुदारम्।
इति जगदालोकगुरुस्तदस्त्रमस्मै ददौ तदा लोकगुरुः॥ ८३॥

हे पार्थ, त्वं मदीयं मत्संबन्धि उदारं महत् अस्त्रं पाशुपतं ब्रह्मास्त्रं मुदा प्रीत्या अरं शीघ्रं गृहाण इत्यनेन प्रकारेण उक्त्वा लोकगुरुः लोकानां गुरुः शासकः जगदालोकगुः जगतस्त्रिभुवनस्य आलोकाः प्रकाशाः तद्रूपा गावो नेत्राणि सूर्येन्दुवह्निरूपाणि यस्य स जगदालोकगुः। 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः' इत्यमरः। यद्वा जगदालोकभूता गावो रश्मयः निजांशरूपा यस्य स जगदालोकभूता गावो वाचो यस्येति वा एवंभूत उः शिवोऽस्मै अर्जुनाय अस्त्रं प्रागुद्दिष्टं ददौ व्यतरत्। उशब्दः शंभुवाचकः। तथा च कविशिक्षायाम्—'अः विष्णुः, आ स्वयंभूः, इः कामः, ईः श्रीः, उः ईश्वरः' इति॥

शरचापासीनस्य प्रभुरुद्गीर्य क्षणादुपासीनस्य।
स्वं च बुधामेयाय प्रदर्श्य तस्मै वपुः स्वधामेयाय॥ ८४॥

प्रभुः श्रीशिवः उपासीनस्य समीपवासिनोऽस्यार्जुनस्य शरचापासीन् शरा इषवश्च चापं चासिश्च तान् क्षणादुद्गीर्य आदौ किरातवेषधारिणा प्रभुणा निगीर्णास्तानेव पुनरुद्गीर्य दत्त्वेत्यर्थः। बुधैः पण्डितैरमेयाय मातुमशक्याय यशोविक्रमादिप्रस्तावे स्तोतुमशक्याय तस्मै अर्जुनाय स्वं वपुः प्रदर्श्य स्वधाम स्वं च तत् धाम स्थानं भुवनं स्वधाम इयाय गतवान्॥

प्राप्तवरमुमापतितः सुरेन्द्रयन्तानिनीषुरमुमापतितः।
सह तेनाकाशं स प्रतिपेदे पाण्डवः सनाकाशंसः॥ ८५॥

उमापतितः श्रीशिवात्प्राप्तवरं प्राप्तो वरो येन सतादृशममुमर्जुनं निनीषुः स्वर्गं निनीषुः सुरेन्द्रयन्ता सुरेन्द्रस्येन्द्रस्य यन्ता सूतः मातलिरापतित आगतः। तेन सह पाण्डवोऽर्जुनः स आकाशं प्रतिपेदे। कीदृशः। स नाकाशंसः नाके स्वर्गे आशंसा इच्छा नाकाशंसा, सह नाकाशंसया वर्तते यः स सनाकाशंसः॥

सोऽथ सभानुग्रहतः प्रापन्नभसः सुरर्षभानुग्रहतः।
वसतिं नाकेशानां परिमलसुरभिं सुराङ्गनाकेशानाम्॥ ८६॥

अथानन्तरं सोऽर्जुनः सभानुग्रहतः भानुः श्रीसूर्यः, ग्रहा भौमादयश्च, सह तैर्वर्तते सभानुग्रहं तस्मात्तादृशान्नभस आकाशात् नाकेशानां त्रिदिवेशानां वसतिं स्वर्गं सुरर्षभा-

नुग्रहतः इन्द्रानुग्रहात् प्रापत् । कीदृशीं वसतिम् । सुराङ्गनाकेशानामप्सरःकेशानां परिमलेन विमर्दोत्थेन गन्धेन सुरभिम् ॥

मधुलवमन्दोलिततः कल्पतरोर्मारुतोऽतिमन्दोऽलिततः ।
मुहुरादायादाय व्यजनसुखमदान्महेन्द्रदायादाय ॥ ८७ ॥

अतिमन्दोऽतिशयेन मन्दः, तथा अलिततः सौगन्ध्यागतैरलिभिर्भ्रमरैः ततो विस्तीर्णः, एवंविधो मारुतो वायुरन्दोलितः प्रेङ्खितात् कल्पतरोर्मधुलवम् । जातावेकवचनम् । परागकणान् मुहुरादायादाय गृहीत्वा महेन्द्रदायादाय महेन्द्रस्य दायादः सुतस्तस्मै व्यजनसुखं तालवृन्तकसुखमदात् ॥

हृदयेऽपि तरङ्गेहे स्नेहादासीनमेव पितरं गेहे ।
प्राप्य शमर्जु ननाम ब्रुवन्स लोकप्रकाशमर्जुननाम ॥ ८८ ॥

स्नेहाद्धेतोस्तरङ्गेहे तरङ्गवदीहा चेष्टा यस्य तत् तादृशेऽपि हृदये स्थितं पितरमिन्द्रं गेहे सुरसद्मनि सोऽर्जुनः ननाम प्रणनाम । किं कुर्वन्सः । शमर्जु शमेन ऋजु सरलं लोकप्रकाशं लोकप्रसिद्धमर्जुननाम अर्जुन इति नाम स्वं ब्रुवन् सोऽहमर्जुनः प्रभुचरणरेणुं प्रणमामीति कथयन् ॥

तस्मात्साम रचयतः संगृह्णन्नस्त्रकर्म सामरचयतः ।
नन्दितसुरसेनाके पञ्च समा न्यवसदेष सुरसे नाके ॥ ८९ ॥

साम सान्त्वं रचयतः कुर्वतः, तथा सामरचयतः सह अमरचयेन देवगणेन वर्तते यः स तादृशात्तस्मात्स्वपितुरिन्द्रात् अस्त्रकर्म अस्त्रविद्या संगृह्णन् सम्यक् गृह्णन् सोऽर्जुनः नन्दितसुरसेनाके नन्दिताः सुरसेना देवचम्वो यस्मिन् तादृशे नन्दितसुरसेनाके । कप् समासान्तः । तथा—सुरसे सुष्ठु शोभनो रसः प्रीतिर्यत्र तादृशे नाके स्वर्गे पञ्च समाः पञ्च वर्षाणि न्यवसन्निवासं चक्रे ॥

असुरसदस्त्राणान्तं पार्थं पारंगतं सदस्त्राणां तम् ।
ज्ञात्वा सामरसेनः स्वयं महेन्द्रो जगाद सामरसेन ॥ ९० ॥

असुरसदस्त्राणान्तम् असुरसदसो दैत्यसभायाः यत्त्राणं रक्षणं तस्यान्तस्तद्रूपं तथा सदस्त्राणां शोभनास्त्राणां पारंगतं तं पार्थमर्जुनं ज्ञात्वा सामरसेनः सह अमरसेनया देवसेनया वर्तते यः स तादृश इन्द्रस्तमर्जुनं स्वयं सामरसेन सान्त्वरसेन जगाद ऊचे ॥

सुकटुकवचना मानस्थिता निवातोपपदकवचनामानः ।
सन्ति सुराणामरयः पार्थ गणस्तेषु चामराणामरयः ॥ ९१ ॥
त्वरितममूनन्तेन त्वं योजय तत्र वीर्यमूनं ते न ।
स्यादरिराशिक्षयतः कृता च मम दक्षिणा परा शिक्षयतः ॥ ९२ ॥

इत्थं सज्जनकवचः श्रुत्वा पार्थोऽथ सकलसज्जनकवचः ।
रथमुत्तमसारहयं निजपितुरारुह्य तं च तरसा रहयन् ॥ ९३ ॥
शक्त्या चापीवरया पुरमसुराणां समेत्य चापी वरया ।
पाटितविकटकवाटं विपाटवर्षैर्व्यधत्त विकटकवाटम् ॥ ९४ ॥

(चक्कलकम्)

इन्द्रः पार्थमुवाच । हे पार्थ, सुकटुकवचनाः सुष्ठु कटुकं तीक्ष्णं वचनं येषां ते तादृशाः, तथा—मानस्थिताः माने स्थिताः निवातोपपदकवचनामानः निवात इति शब्द उपपदं यस्य तादृशं कवचं कवचपदं येषां ते । निवातकवचाख्या इत्यर्थः । सुराणामरयो देवानां शत्रवोऽसुराः सन्ति । पाताले इति शेषः । तेषु च निवातकवचेषु अमराणां देवानां गणः अरयः अविद्यमानो रयो वेगो यस्य सोऽरयो निर्बल इत्यर्थः ॥ **त्वरितमिति ।** हे पार्थ त्वममून् निवातकवचान् अन्तेन नाशेन योजय । जहीत्यर्थः । तत्र तेषु ते तव वीर्यम् ऊनं हीनं न भवति । एवं कृते सति अरिराशिक्षयतः निवातकवचाभिधो योऽरिराशिः शत्रुसमूहः तस्य क्षयतो नाशात् शिक्षयतः शस्त्रविद्यानुशासकस्यापि मम परा दक्षिणा त्वया कृता च दत्ता च स्यात् ॥ **इत्थमिति ।** इत्थमनेन प्रकारेण सत् शोभनं जनकवचः जनकस्य पितुरिन्द्रस्य वचः वचनं श्रुत्वा सकलसज्जनकवचः सकलस्य सतां जनस्य कवचः । 'कङ्कटकः कवचोऽस्त्रियाम्' इत्यमरः । सोऽर्जुन उत्तमसारहयमुत्तमश्रेष्ठवाजिनं निजपितुरिन्द्रस्य रथमारुह्य तं च पितरमिन्द्रं तरसा वेगेन रहयन् दूरस्थं कुर्वन् ॥ **शक्त्येति ।** वरया उत्कृष्टया आपीवरया महत्या शक्त्या सामर्थ्येन असुराणां पूर्वोद्दिष्टानां निवातकवचाख्यानां पुरं नगरं विपाटवर्षैः शरवर्षैः पाटितविकटकवाटं पाटिता विकटाः कवाटा अरराणि यस्य तत्तादृशं व्यधत्त । पुनः कीदृशं पुरम् । विकटकवाटं विगतः कटकरूपः सैन्यरूपो वाटो वृत्तिर्यस्य तत् तादृशम् ॥

अथ पार्थशिलीमुखकृत्तगलैर्नगराजनिभैरवनी चपला ।
सुरवैरिगणैः ससमुद्रसरिन्नगराजनि भैरवनीचपला ॥ ९५ ॥

अथानन्तरं ससमुद्रसरिन्नगरा सह समुद्रैः सरिद्भिर्नदीभिः नगरैश्च वर्तते या सा तादृशी अवनी भूमिश्चपला शब्दायमाना अजनि उत्पन्ना । कैः । सुरवैरिगणैर्दैत्यसंघैः । कीदृशैः । पार्थशिलीमुखकृत्तगलैः पार्थस्यार्जुनस्य ये शिलीमुखाः शरास्तैः कृत्ता गलाः कण्ठा येषां तादृशैः । पुनः कीदृशैः । नगराजनिभैः पर्वतराजतुल्यैः । अवनी कथंभूता भैरवनीचपला भैरवं भयानकं नीचं पलं मांसं यस्याः सा ॥

समरे दनुवंशभुवां नगरं सकलं सकलङ्कबलं कवलम् ।
स विधाय शिलीमुखहव्यभुजा वरदे वरदेवबले बवले ॥ ९६ ॥

सोऽर्जुनो दनुवंशभुवां दानवानां सकलङ्कबलं सह कलङ्केन दुष्टत्वाख्येन वर्तते यत्तत् । सकलङ्कं बलं यस्मिन् तत्तादृशं सकलं सर्वं नगरं शिलीमुखहव्यभुजा शराग्निना कवलं ग्रासं विधाय निर्बलीकृत्य वरदे वरप्रदे वरदेवबले उत्कृष्टदेवकटके ववले वलितं प्रत्यावृत्य देवकटकमध्ये वलितम् ॥

त्रिविष्टपं स चागतः पराजितः पराजितः ।
अपूजयज्जगत्त्रयं सदैव तं सदैवतम् ॥ ९७ ॥

परा उत्कृष्टा चासावाजिः संग्रामः तस्याः पराजितः उत्कृष्टसंग्रामात् परैः शत्रुभिः अजितो न जितः पराजितः सोऽर्जुनः त्रिविष्टपं स्वर्गं पुनरागतः । सदैवतं सह दैवतैर्देवैर्वर्तते यत्तत् सदैव तं तादृशमर्जुनं जगत्त्रयमपूजयत् तुष्टाव ॥

इति श्रीमहाकविवासुदेवविरचिते युधिष्ठिरविजये महाकाव्ये कश्मीरदेशवास्तव्यराजानकशंकरकण्ठात्मजराजानकरत्नकण्ठविरचितायां शिष्यहिताभिधानायां टीकायां धृतराष्ट्रनिर्वेददुर्योधनकर्णसंवादव्यासागमनतदनुशासनमैत्रेयमुन्यागमनदुर्योधनानुशासनतत्क्षोभमैत्रेयदत्तशापद्वैतवनयानद्रौपदीभीमसेनवाक्ययुधिष्ठिरानुशासनश्रीव्यासमुन्यागमनार्जुनमन्त्रप्रदानार्जुनप्रस्थानकिरातार्जुनयुद्धवर्णनास्त्रप्राप्तिपार्थत्रिदिवप्रस्थानेन्द्रदत्तास्त्रप्राप्तिनिवातकवचवधपुनःस्वर्गागमनवर्णनं नाम चतुर्थ आश्वासः ।

**समाप्तं चेदमस्य ग्रन्थस्य पूर्वार्धं सटीकम् ।**

पञ्चम आश्वासः ।

अभयवरोद्दीप्रकरो देवोद्धतसमस्तपातकप्रकरः ।
वामे भागे सशिवः पायान्नः सर्वदा स शिवः ॥

अथार्जुनस्य त्रिदिवयानानन्तरं युधिष्ठिरादीनामुदन्तं वर्णयन्नाह—

अथ नरदेवनिदेशात्पार्थे संप्राप्तसुरपदेऽवनिदेशात् ।
तापसवेशमवन्तस्तन्वानाः शत्रुपराभवं शमवन्तः ॥ १ ॥
संभृतलोमशकुन्ता राक्षसघाताय तेऽनुलोमशकुन्ताः ।
प्रययुर्जायावन्तस्तीर्थगणान्भूप्रदेशजा यावन्तः ॥ २ ॥

अथानन्तरं नरदेवस्य राज्ञो युधिष्ठिरस्य निदेशादाज्ञया पार्थेऽर्जुने अवनिदेशात् भूमिदेशात् संप्राप्तसुरपदे संप्राप्तं सुरपदं सुरलोको येन स तादृशे सति शेषा युधिष्ठिराद्याः तापसवेशं मुनिवेशमवन्तो रक्षन्तः । तथा—शत्रुपराभवं शत्रूणां पराभवं तन्वानाः करिष्यमाणाः । तथा शमवन्तः शमप्रधानाः । तथा—राक्षसानां घाताय संभृतलोमशकुन्ताः संभृताः सज्जीकृता लोमशाः सपक्षाः कुन्ता आयुधविशेषा येषां ते तादृशाः । तथा—अनुलोमशकुन्ताः अनुलोमाः प्रस्थानसमये यथोचितदिक्स्थानुरावेण शुभफलदाः शकुन्ताः पक्षिणः येषां ते । तथा—जायावन्तः द्रौपदीसहिताश्च तीर्थगणान् तीर्थसमूहान् जग्मुः । कानित्याह—यावन्तो यत्परिमिताः भूप्रदेशजाः भूलोकसंस्था आसन्, तांस्तीर्थगणान् जग्मुः ॥

ते हि कृतागस्त्यागा व्यतियातमहेन्द्रपर्वतागस्त्यागाः ।
प्रतिपन्नाहिमवन्तं सत्त्वसमूहं सुकोपनाहिमवन्तम् ॥ ३ ॥

हि निश्चये । युधिष्ठिराद्याः कृतागस्त्यागाः कृत आगस अपराधस्य त्यागो यैस्ते तादृशाः, तथा व्यतियात उल्लङ्घितो महेन्द्रपर्वतो महेन्द्राख्यो नगस्तथा अगस्त्यागः अगस्त्यमुनेरगः पर्वतो विन्ध्यश्च यैस्ते तादृशाः सुकोपनाहिं सुष्ठु कोपनाः क्रुद्धा अहयः सर्पा यस्मिन् स तादृशं सत्त्वसमूहं प्राणिसमूहमवन्तं रक्षन्तं हिमवन्तं हिमाचलं गिरिं प्रतिपन्नाः प्राप्ताः ॥

तस्य च पादे वनगैः परीतमायुः परंतपा देवनगैः ।
जनितानन्दं शिखरैर्गगनलिहं गन्धमादनं दंशिखरैः ॥ ४ ॥

तस्य हिमवतश्च पादे प्रत्यन्तपर्वतसविधे वनगैः वनगतैः देवनगैः वनगतैर्देवनगैः सुरतरुभिः परीतं युक्तं, तथा दंशिखरैः दंशिभिः । 'दंशस्तु वनमक्षिकाः' । वनमक्षिकायुक्तैः अत एव खरैः कठिनैः । यद्वा दशन्तीति दंशिनः व्यालास्तैः कठिनानि साधुभिर्जनिता-

१. 'मापुः' मूल०.

नन्दं गगनलिहमाकाशव्यापकं गन्धमादननाम गिरिमायुः आगमन् । कीदृशाः ते । परंतपाः शत्रुसंतापकाः ॥

तं गन्धमादनं कमित्याह—

शिरसो भागे यस्य क्रोधवशो नाम सुरसभागेयस्य ।
तिष्ठन्नलिनीलोऽभाद्राक्षसलोकः कुवेरनलिनीलोभात् ॥ ५ ॥

सुरसभागेयस्य सुराणां देवानां सभा परिषत् तया गेयस्य स्तुत्यस्य यस्य गन्धमादनगिरेः शिरसः शिखरस्य भागे एकान्ते तिष्ठन् अलिनीलः अलिवत् भ्रमरवत् नीलो मेचकः क्रोधवशो नाम क्रोधवशनामा राक्षसलोकः कुवेरनलिनीलोभात् वैश्रवणपुष्करिणीलोभात् तिष्ठन् अभात् शोभते स्म ॥

तं गन्धमादनं कमित्याह—



हारपदे व्याललताकलितः श्लिष्टः करेण देव्या ललता ।
यं प्रीततमोऽनुदिनं धूर्जटिरधिवसति लङ्घिततमोऽनुदिनम् ॥ ६ ॥

हारपदे हारस्य पदं स्थानं तत्र अर्थात् कण्ठे व्याललताकलितो व्यालः सर्पः वासुकिः स एव लता हारलता तया कलितो युक्तः, तथा—ललता भ्रमता देव्याः पार्वत्याः करेण हस्तेन श्लिष्टः आलिङ्गितः, तथा—प्रीततमोऽतिसंतुष्टो धूर्जटिः शिवः यं गन्धमादनमनुदिनं प्रत्यहमधिवसति आश्रयति । यं कीदृशम् । लङ्घिततमोनुदिनम् । लङ्घितं तमस्तमोगुणो मोहो वा यैस्ते लङ्घिततमसः तमोऽतीताः सात्विकास्तान् नुदति प्रेरयति अतिविविक्तत्वात् लङ्घिततमोनुत् तेषामिनः स्वामी तम् ॥

तं गन्धमादनं गिरिं कमित्याह—

वहति युवा यो वायुः कल्पावधि येन सान्ववायो वायुः ।
यत्राधिकपीनांसः पतिरप्यास्ते नभोरुधि कपीनां सः ॥ ७ ॥

यो वायुश्च युवा तरुण एव कल्पावधि आयुर्वहति । तथा येन कपीनां पतिना हनुमता वायुर्मरुत्वान् सान्ववायः सवंशः प्रख्यातवंशोऽस्ति । तस्य मरुत्तनयत्वात् । स कपीनां वानराणां पतिः हनुमानपि अतिप्रसिद्धो यत्र गिरौ आस्ते । कीदृशः । अधिकपीनांसः अधिकं पीनावंसौ स्कन्धौ यस्य स तादृशः । यत्र कीदृशे । नभोरुधि नभ आकाशं रुणद्धि अत्युन्नतत्वात्तादृशे ॥

तं गन्धमादनं कमित्याह—

लीनमृगीशावदरीसंघं सततोपगतदिगीशा बदरी ।
यं विविधर्षिततारं राजयते तुङ्गशृङ्गधर्षिततारम् ॥ ८ ॥

लीनो मृगीणां शावः शावको यस्य तादृक् दरीसंघः गुहाव्रजो यस्य स तादृशम्, तथा—तुङ्गशृङ्गधर्षिततारम् तुङ्गानि यानि शृङ्गाणि शिखराणि तैर्धर्षिताः पराभूता अ-

र्थात् पिहिताः तारास्तारका येन स तादृशं यं गन्धमादनं वदरी वदर्याश्रमः अरमत्यर्थं राजयते मण्डयते । कीदृशी वदरी । सततोपगतदिगीशा सततमुपगता दिगीशा इन्द्राद्या अतिपावनत्वात् यत्र सा तादृशी । पुनः कीदृशी । विविधर्षिततता विविधा ये ऋषयो मुनयस्तैस्तता व्याप्ता ॥ चतुर्भिः कुलकम् ॥

तत्र शिवे दमहर्षौ दधद्भिरभ्यस्यमानवेदमहर्षौ ।
मुनिभिरमेह तदोषे तैर्नरनारायणाश्रमे हतदोषे ॥ ९ ॥

तत्र गन्धमादनगिरौ अभ्यस्यमानवेदमहर्षौ अभ्यस्यमानाः पाठ्यमानाः वेदाश्चत्वारः यैस्ते तादृशा महर्षयो यस्मिन् स तादृशे । तथा— हतदोषे हता दोषाः कायिकायास्त्रयो येन स तादृशे । इह नरनारायणाश्रमे नरनारायणयोर्महतोराश्रमे वदर्याश्रमे दमहर्षौ दमोऽन्तरिन्द्रियोपशमः हर्षः संतोषः तौ दधद्भिर्धारयद्भिर्मुनिभिः ऋषिभिः अमा सह तदा तस्मिन् काले तैः पार्थैस्तत्र ऊषे ऊषितम् ॥

निपतितमादाय ततः कदाचिदार्तवमगोत्तमादायततः ।
सस्पृहमगदत्तरसा पाञ्चाली भीममगदत्तरसा ॥ १० ॥

कदाचित्काले आयततः आयतात् ततः अगोत्तमात् गन्धमादनात् आर्तवं पुष्पं सौगन्धिकाख्यं रक्तोत्पलविशेषम् अग्रे वक्ष्यमाणं भूमौ निपतितमादाय गृहीत्वा सस्पृहं सलोभमगदत्तरसा अगे पर्वते दत्तो रसः कौतुकं यया सा तादृशी पाञ्चाली द्रौपदी तरसा शीघ्रमेव व्यक्तं वा भीमं भीमसेनमगदज्जगाद ॥

द्रौपदी भीमं किमवोचदित्याह—

नहि पुष्पं नामेदृग्रमणीयतरं फलोपपन्ना मे दृक् ।
मारुतजानेयानि त्वयेदृशान्यद्भुतानि जाने यानि ॥ ११ ॥

हे मारुतज वायुसुत भीमसेन, नाम निश्चये ईदृक् पुष्पं रमणीयतरमतिरम्यं नहि भवति । अतश्च मे मम दृक् दृष्टिः फलोपपन्ना फलं जन्मफलं उपपन्ना प्राप्ता । मद्दृष्ट्या स्वजन्मफलमस्य पुष्पस्य दर्शनेन प्राप्तमित्यर्थः । हे भीम, ईदृशानि एतत्तुल्यानि यानि अद्भुतानि वस्तूनि भूमौ सन्ति तानि त्वयैवानेयानि आनेतुं शक्यानि । नान्येनेति जाने ॥

इति सरसं रम्भोरूवचनेन दृशौ विवृत्य संरम्भोरू ।
स खलु गभीरगदावानभ्यपतद्वेगभागभीरगदावान् ॥ १२ ॥

इत्यनेन प्रकारेण सरसं सोत्कण्ठं रम्भोरूवचनेन रम्भोर्वाः द्रौपद्या वचनेन संरम्भोरू तदुपोद्बलनेन यः संरम्भस्तदुद्योगस्तेन पृथ्व्यौ दृशौ विवृत्य विस्तार्य खलु निश्चये गभीरा अतिमहती या गदा आयुधविशेषः तद्वान्, तथा—वेगभाक् जवभाक्, अभीः भयरहितः स भीमः अगदावान् अगस्य गन्धमादनाख्यस्य दावा वनानि तान् अभ्यपतज्जगाम । 'दवदावौ वनारण्यवह्नी' इत्यमरः ॥

स वने कुसुमान्यस्य प्रविचिन्वन्पर्वतस्य कुसुमान्यस्य ।
पथि वलवानरसत्वं दृशि विदधानं ददर्श वानरसत्त्वम् ॥ १३ ॥

कुसुमानि सौगन्धिकाख्यानि कुसुमान्यस्य कौ भूमौ सुष्ठु मान्यस्य पूज्यस्य अस्य गन्धमादनस्य वने प्रचिन्वन् मार्गयन् स भीमो वलवान् दृशि नेत्रविषये अरसत्वमलसत्वं विदधानं विशेषेण दधानं वानरसत्त्वं वानरप्राणिनं हनूमन्तं पथि मार्गे ददर्श । वानरसत्वमित्यत्रैकव्यञ्जनत्वेऽपि यमकादौ न दोषः ॥

निद्रापरमध्वनि तं भीमः प्लवगं जगाद परमध्वनितम् ।
वानर पापापेहि प्रयच्छ मार्गं न मे कृपा पापे हि ॥ १४ ॥

अध्वनि मार्गे निद्रापरं निद्रारतं प्लवगं वानरं भीमो जगाद । कथम् । परमध्वनितम् । परमुच्चैस्तरं ध्वनितं यस्मिन् कर्मणि तत् । किमिति जगादेत्याह—हे पाप पापिष्ठ वानर त्वमपेहि दूरं गच्छ । मार्गं मे प्रयच्छ देहि । हि निश्चये पापे पापिनि जने कृपा मे मम नास्ति ॥

इति रिपुमानस्तेनः स्वयं प्लवगः प्रभर्त्स्यमानस्तेन ।
मन्दं वद्ध्वा नेत्रद्वितयं निजगाद भैरवध्वानेऽत्र ॥ १५ ॥

रिपुमानस्तेनो रिपूणां यो मानो गर्वस्तस्य स्तेनः प्रसह्य हारकः स प्लवगो हनुमान् तेन भीमेन स्वयं प्रभर्त्स्यमानः प्रकर्षेण भर्त्स्यमानः सन् नेत्रद्वितयमक्षियुगलं मन्दमलसं वद्ध्वा तद्वीक्षणोत्तानं कृत्वा भैरवध्वाने अत्र भीमे सति निजगाद । वक्ष्यमाणमिति शेषः॥

हनूमान् भीमं किमवोचदित्याह—

अङ्ग महानिद्रोऽहं जरया च गतो वहून्यहानि द्रोहम् ।
उद्धृतवालधि याहि क्षन्तव्यं मादृशेष्ववालधिया हि ॥ १६ ॥

अङ्ग भो भीम, महानिद्रो महती निद्रा यस्य स तादृशोऽहं जरया च हेतुभूतया च द्रोहमतिशयेन हतवलत्वं वहूनि अहानि गतः । 'कालभावाध्व–' इति द्वितीया । तत्तस्मात्कारणात् अङ्ग हे भीम त्वं याहि । कथम् । उद्धृतवालधि उद्धृत उत्क्षिप्तो वालधिः पुच्छो यस्मिन् कर्मणि तत्तथा कृत्वा याहि गच्छ हि निश्चये । यतो वा अवालधिया न वाला मुग्धा धीर्यस्य सोऽवालधीरज्ञस्तेन पुरुषेण मादृशेषु जरया ग्रस्तेषु एतादृगवस्थेषु क्षन्तव्यम् ॥

इति वीरः सत्त्वस्य श्रुत्वा वचनं वृकोदरः स त्वस्य ।
व्यतनुत दुर्वालस्य स्पर्शमकर्षच्च तावदुर्वालस्यः ॥ १७ ॥

इत्यनेन प्रकारेण । तु पक्षान्तरे । अस्य सत्त्वस्य प्राणिनो हनुमतो वचनं श्रुत्वा वीरः

१. 'कृतो' काश्मी०

स वृकोदरो भीमो दुर्वालस्य दुष्टास्तीक्ष्णा वाला रोमाणि यस्य स दुर्वालः पुच्छस्तस्य स्पर्शं व्यतनुत अकरोत् । तथा तं च पुच्छं तावदकर्षत् उत्सारयामास । कीदृशो भीमः । उर्वालस्यः उरु महत् आलस्यं यस्य स महदवज्ञयेत्यर्थः । आदौ वामेन पाणिना तदीयपुच्छमुत्सारयामासेत्यर्थः । तथा च वनपर्वणि हनुमद्भीमसमागमे—'सावज्ञमथ वामेन स्मयाज्जग्राह पाणिना । न चाशकच्चालयितुं भीमः पुच्छं महाकपेः ॥' इति ॥

नास्य चचाल यदा हि स्थिरमग्रं दशमुखस्य चालयदाहि ।
सूचितभीमोहास्यस्तमेव शरणं जगाम भीमो हास्यः ॥ १८ ॥

दशमुखस्य रावणस्य च आलयदाहि आलयो गृहं लङ्का तद्दाहि अस्य पुच्छस्य स्थिरमग्रं हि निश्चये यदा न चचाल नाचलत् । तदा सूचितभीमोहास्यः सूचितौ मुखवर्णेन प्रकटीभूतौ भीमोहौ भीर्भयं च मोहः खेदेन मूर्छा च येन तत्तादृशमास्यं मुखं यस्य स तादृशः सन् भीमः हास्यो लोकोपहास्योऽपि सन् तमेव हनुमन्तं शरणं जगाम । तथा च वनपर्वणि हनुमद्भीमसमागमे—'उच्चिक्षेप पुनर्दोर्भ्यामिन्द्रायुधमिवोच्छ्रितम् । नोद्धर्तुमशकद्भीमो दोर्भ्यामपि महाबलः ॥ उत्क्षिप्तभ्रूर्विवृत्ताक्षः संहतभ्रूकुटीमुखः । खिन्नगात्रोऽभवद्भीमो न चोद्धर्तुं शशाक ह । यत्नवानपि तु श्रीमांल्लाङ्गूलोद्धरणाय सः । जानुभ्यामगमद्भीमस्तस्थौ व्रीडन्नधोमुखः । प्रणिपत्य च कौन्तेयः प्राञ्जलिर्वाक्यमब्रवीत् । प्रसीद कपिशार्दूल दुरुक्तं क्षम्यतां मम ॥' इत्यादि ॥

भीमः कपिवरं गत्वा शरणं किमवोचदित्याह—

कपिवर मे तत्त्वेन ब्रूह्यात्मानं कृपासमेतत्त्वेन ।
भक्तिरसादङ्ग त्वा नमामि शरणं च यामि सादं गत्वा ॥ १९ ॥

हे कपिवर वानरश्रेष्ठ, हि निश्चये, कृपासमेतत्त्वेन दयावत्त्वेनोपलक्षितस्तत्त्वेन तत्त्वतो मे मम आत्मानं स्वं ब्रूहि कथय । कस्त्वमसीत्यर्थः । हे अङ्ग भोः कपिवर, अहं त्वा त्वां भक्तिरसादेकान्तचित्ततया नमामि प्रणमामि । तथा सादं भवत्संबन्धिपुच्छमात्रोद्धरणाक्षमतया एतादृशं कष्टं च गत्वा त्वां शरणं च यामि ॥

इत्थं मानोनेन भ्रान्त्वा[1] भीमेन चोद्यमानोऽनेन ।
हनुमान्सामोदं स प्रोचे प्रणयात्प्रयुज्य सामोदंसः ॥ २० ॥

इत्थमनेन प्रकारेण भ्रान्त्वा भ्रमं प्राप्य मानोनेन मानो गर्वस्तेन ऊनस्तादृशेन सता अनेन भीमेन चोद्यमानः प्रेर्यमाणः स हनुमान् प्रणयात् स्नेहेन साम सान्त्वं प्रयुज्य सामोदं सहर्षं प्रोचे उक्तः । कीदृशः स हनुमान् । उदंसः उन्नतावंसौ स्कन्धौ यस्य स तादृशः ॥

हनुमान् भीमं किमवोचदित्याह—

मारुतसुत रामस्य प्रेष्यं विद्धि प्रियं च सुतरामस्य ।
मां हनुमन्तं नाम प्लवगं ध्यायन्तमुत्तमं तन्नाम ॥ २१ ॥

---

१. 'भ्रान्त्रा' मूल०.

हे मारुतसुत वायुपुत्र भीम, त्वं मां हनुमन्तं नाम प्लवगं वानरं रामस्य श्रीरामचन्द्रस्य प्रेष्यं भृत्यं विद्धि । अस्य च रामस्य प्रियं वत्सलं च मां विद्धि । कीदृशं माम् । उत्तममतिपावनं तन्नाम श्रीरामनाम ध्यायन्तमहर्निशं चिन्तयन्तम् ॥

हनुमान् भीमं पुनः किमवोचदित्याह—

द्रष्टुमुदारामस्य प्रियां मया लङ्घितस्तदा रामस्य ।
चलकल्लोलो जलधी रिपुरपि समवैक्षि विषयलोलो जलधीः ॥२२॥

हे भीम, उदारामुदारशीलामस्य रामस्य प्रियां सीतां द्रष्टुं तदा तस्मिन् काले अतीते युगे जलधिः समुद्रो मया लङ्घितः उत्प्लुत्योल्लङ्घितः । कीदृशः । चलकल्लोलः चलाः कल्लोला महोर्मयो यस्य । तथा मया विषयलोलः विषयेषु इन्द्रियार्थेषु लोलः अतिचपलः । तथा जलधीः लडयोरैक्यम् । जडधीः परस्त्रियि तादृश्युदारशीलायामपि सीतायां दुष्टबुद्ध्या भ्रमणात् जडबुद्धी रिपुरपि रावणोऽपि समवैक्षि सम्यक् अवैक्षि परीक्षितः ॥

इति वातापत्येन प्रोक्तं वचनं निशम्य तापत्येन ।
स[1] नियतमायतबाहो धन्योऽहं योऽलमधिगमाय तवाहो ॥ २३ ॥

इत्यनेन प्रकारेण वातापत्येन वायुसुतेन हनुमता प्रोक्तं वचनं निशम्य श्रुत्वा तापत्येन तापत्यवंशजेन भीमेन उक्तम् । तं प्रतीति शेषः । किमित्युक्तम् । हे आयतबाहो आयतौ युगदीर्घौ बाहू यस्य स तस्य संबोधनम्, अहो आश्चर्ये सोऽहं नियतं निश्चयेन धन्योऽस्मि । सोऽहं क इत्याह—योऽहं तव तत्समये प्लवेनोल्लङ्घितसमुद्रस्यापि तव अधिगमाय प्राप्त्यै समक्षमित्यर्थः । अलं समर्थोऽस्मि । तदहं नियतं धन्योऽस्मीत्यर्थः ॥

भीमो हनुमन्तं किमवोचदित्याह—

तुलितसमग्रजन त्वा किंचिद्याचामि सरसमग्रज नत्वा ।
द्रष्टुं हन्त तवाहं स्पृहयेऽर्णवतारिविग्रहं ततवाहम् ॥ २४ ॥

तुलिता वीर्येण परीक्षिताः समग्रा जनाः येन तस्य संबोधनम् हे तुलितसमग्रजन, हे अग्रज हे ज्येष्ठभ्रातः हनुमन्, अहं सरसं सहर्षं नत्वा प्रणम्य त्वा त्वां किंचिद्याचामि प्रार्थये । हन्त हर्षे । ततवाहं बवयोरैक्यात् । तते विस्तृते वाहे भुजे यस्य स तं तादृशं तव अर्णवतारिविग्रहं अर्णवतारी चासौ विग्रहः कायश्च तं द्रष्टुं स्पृहये इच्छामि । कायं स्वकीयं मम दर्शय येन त्वं समुद्रं तीर्णोऽसि इत्यर्थः ॥

श्रुत्वा तदनुजगदितं तेन दधानेन धाम तदनु जगदितम् ।
खमरोधि कपीनेन स्फुरता दंष्ट्राङ्कुरैरधिकपीनेन ॥ २५ ॥

तदनु तदनन्तरं तत् तादृक् अनुजगदितमनुजस्य कनिष्ठस्य भ्रातुर्भीमस्य गदितं वचनं श्रुत्वा जगत् सकलं जगत् इतं गतं धाम तेजो दधानेन कपीनेन कपीनां वानरा-

1. 'निगदित' मूल०.

णामिनः स्वामी । तेन वानरेन्द्रेण हनुमता खमाकाशमरोधि रुद्धम् । कीदृशेन । दंष्ट्राङ्कुरैर्दंष्ट्राणामङ्कुराणि तैः स्फुरता । तथा—अधिकपीनेन अतिमांसलेन ॥

तद्वपुरनलसमस्य प्रेक्ष्य प्लवगाधिभर्तुरनलसमस्य ।
मीलितनेत्रस्ततया समजनि भीमो महावने त्रस्ततया ॥ २६ ॥

अनलसमस्य तेजसा अग्नितुल्यस्य अस्य प्लवगाधिभर्तुः वानरेन्द्रस्य हनुमतः तत् अनलसं महोद्यमयुक्तं वपुः प्रेक्ष्य महावने महति वने स्थितो भीमस्ततया विस्तृतया त्रस्ततया कातरतया मीलितनेत्रः संकुचितनेत्रः समजनि । द्रष्टुं नाशकदित्यर्थः ॥

तस्मिन्भीमे चकिते हनुमान्वदने च तस्य भीमेचकिते ।
संहृतिमतनुत तस्य स्वस्य शरीरस्य तूर्णमतनुततस्य ॥ २७ ॥

तस्मिन्भीमे निजानुजे चकिते तत् दृष्ट्वा त्रस्ते सति, तथा तस्य च भ्रातुः निजस्य वदने मुखे भीमेचकिते भिया भयेन मेचकिते श्यामलिते च जाते सति हनुमान् अतनुत तस्य अतनुकृत्वा ततस्य विस्तृतस्य तादृशस्य स्वस्य शरीरस्य संहृतिं निवर्तनं तूर्णं यथा स्यात्तथा भ्रातृस्नेहेन शीघ्रमेव अतनुत चकार ॥

प्रकृतं भीमसेनोद्योगं पुनरपि वर्णयन्नाह—

तदनु पुनः सूनमदः प्रविचेतुं वायुनन्दनः सूनमदः ।
प्रेक्ष्य वरो हानुमतं वपुरमुना मार्गमारुरोहानुमतम् ॥ २८ ॥

तदनु तदनन्तरं हानुमतं हनुमत इदं हानुमतं वपुः प्रेक्ष्य दृष्ट्वा सूनमदः सुतरामूनो मदो गर्वो यस्य स तादृक् वायुनन्दनो भीमः पुनरदः एतत् सूनं कुसुमं सौगन्धिकं द्रौपदीस्पृहणीयं प्रविचेतुं मार्गयितुं वर उत्कृष्टः अमुना हनुमता भ्रात्रा अनुमतमङ्गीकृतम् । संदर्शितमिति यावत् । मार्गं पन्थानमारुरोह ॥

तेन तथोपर्यस्य भ्रमता शैलस्य दृशमथो पर्यस्य ।
तत्प्रापे देवसरस्त्रिदशैरपि यत्र न प्रपेदेऽवसरः ॥ २९ ॥

तेन भीमसेनेन अथो अनन्तरं दृशं दृष्टिं पर्यस्य परितः क्षिप्त्वा अस्य शैलस्य गन्धमादनस्य उपरि भ्रमता तत् देवसरः कैलासशिखरसमीपे कुबेरस्य पुष्करिणी कनकपुष्करवती प्रापे लब्धा । तद्देवसरः किमित्याह—यत्र त्रिदशैरपि देवैरपि अवसरो वारो न प्रतिपेदे लब्धः । राक्षसाभिरक्षितत्वात्तस्याः पुष्करिण्याः ॥

तद्देवसरः किमित्याह—

क्रियतेऽमलकेशेन स्त्रीणां संघेन सार्धमलकेशेन ।
सेवा यत्तोयस्य क्रोधवशगणश्च[1] यत्तो यस्य ॥ ३० ॥

अलकेशेन अलकाया नगर्या ईशः स्वामी तेन वैश्रवणेन कर्त्रा अमलकेशेन अच्छचि-

---

१. 'क्रोधवशगणोवने च यत्तो' मूल०.

कुरेण स्त्रीणां संघेन समूहेन सह यत्तोयस्य यस्य देवसरसस्तोयं तस्य सेवा प्रत्यहं क्रियते । यस्य देवसरसः । रक्षणे इति शेषः । यत्तः सयत्नः क्रोधवशगणः क्रोधवशाख्यो राक्षसलोकः ॥

तत्र स दलिततममलं सौगन्धिकमप्यपश्यदलिततममलम् ।
विपुले सरसि ततोऽयं पवनतनूजः पपात सरसिततोयम् ॥ ३१ ॥

स भीमः अलिततम् अलिभिः सौगन्ध्यागतैस्ततं व्याप्तम् अलमत्यर्थममलं निर्मलं दलिततमं सौगन्धिकं रक्तोत्पलविशेषम् । जातावेकवचनम् । सौगन्धिकानीत्यर्थः । तत्र सरसि अपश्यत् । ततोऽनन्तरं स पवनतनूजो भीमः तत्र सरसि पपात तदवचयार्थं शीघ्रं तत्रापतदित्यर्थः । कथं सरसिततोयं सह रसितेन शब्देन वर्तते यत्तादृशं तोयं यस्मिन् कर्मणि तथा शीघ्रं तदवगाहनेन सशब्दतोयं तत्र पपातेत्यर्थः ॥

वेगेन गदावन्तं निपतन्तं सरसि विधुतनगदावं तम् ।
तिष्ठन्तो वाप्यवने रुरुधुर्यक्षाः समन्ततो वाप्य वने ॥ ३२ ॥

वने कानने वाप्यवने वाप्याः पुष्करिण्याः कुबेरसंबन्धिन्याः अवने रक्षणे तन्निमित्तं तिष्ठन्तो यक्षाः देवयोनयः वेगेन विधुतनगदावं विधुतो नगः पर्वतः वनानि च येन स तादृशम् । गदावन्तं सगदं तं भीमं सरसि तत्र वेगेन निपतन्तमवाप्य प्राप्य समन्ततः परितो रुरुधुः । पुष्पावचयनिषेधार्थमित्यर्थः ॥

द्विषतो निध्याय ततः सरसः प्रोत्तीर्य सलिलनिध्यायततः ।
भीमो हेमाङ्गदया चूर्णीचक्रे चमूमिहेमां गदया ॥ ३३ ॥

ततोऽनन्तरं भीमो द्विषतः शत्रून् तान् निध्याय संचिन्त्य सलिलनिध्यायततः सलिलनिधिवत् आयतात् सरसः सकाशात् प्रोत्तीर्य प्रकर्षेण उत्तीर्य हेमाङ्गदया हेममया अङ्गदा बन्धनविशेषा यस्याः सा तादृश्या गदया इह सरसि इमां चमूं प्रकृतत्वाद्यक्षाणां चूर्णीचकार चूर्णीचक्रे चूर्णमिव चकार ॥

ताश्चासावनवाप्याः सुमनस उद्धृत्य रंहसा वनवाप्याः ।
तुङ्गतमादनवनतः प्रियान्तिकमवाप गन्धमादनवनतः ॥ ३४ ॥

असौ भीमोऽनवाप्याः मनुष्यैर्दुर्लभाः वनवाप्याः कुबेरवनपुष्करिण्याः ताश्च सुमनसः तानि सौगन्धिकपुष्पाणि रंहसा वेगेनोद्धृत्य उच्चित्य तुङ्गतमात् अतितुङ्गात् गन्धमादनतः पर्वतात् प्रियान्तिकमवाप । कीदृशो भीमः । अनवनतः न अवनतः । कदापि न प्रणत इत्यर्थः ॥

प्रबभासे नीतेन स्वशिरः कुसुमेन याज्ञसेनी तेन ।
तस्या नगरमितायाः प्रीतिर्जज्ञे पुरेव नगरमितायाः ॥ ३५ ॥

याज्ञसेनी द्रौपदी स्वं शिरः नीतेन प्रापितेन । कर्णावतंसीकृतेनेत्यर्थः । तेन कुसुमेन सौगन्धिकेन प्रबभासे प्रकर्षेण रेजे । तस्याश्च द्रौपद्या नगरमितायाः नगे गन्धमादने रमिता सहर्षा तस्याः प्रीतिर्हर्षः जज्ञे उत्पन्ना । किंविशिष्टाया इव तस्याः । पुरा पूर्वं वनवासादावेव नगरं पुरमितायाः गताया इव । तेन कुसुमविशेषेण शिरसि धृतेन स्वनगरे स्थितमिवात्मानं महदैश्वर्ययुक्तं मेने इत्यर्थः ॥

अथ तटमापूरयतः श्वेतस्य नगस्य गगनमापू रयतः ।
ते सोदर्याः श्रमतः परिरक्षन्तो मुनीन्वदर्याश्रमतः ॥ ३६ ॥

अथानन्तरं ते सोदर्याः युधिष्ठिराद्याश्चत्वारो भ्रातरः वदर्याश्रमतः वदर्याश्रमाद्गत्वा गगनमाकाशमापूरयतः आपूरकस्य श्वेतस्य श्वेताख्यस्य नगस्य तटं तीरं रयतो वेगेन आपुः प्राप्तवन्तः । कीदृशास्ते । श्रमतः श्रमेण यत्नेन मुनीन्परिरक्षन्तः पालयन्तः । निजासुवत्सकष्टं मुनीन्पालयन्त इत्यर्थः ॥

विपुलतरूपेतस्य प्रान्ते प्रापुर्मनोज्ञरूपे तस्य ।
सूचितभाविजयेन प्रभया योगं नरर्षभा विजयेन ॥ ३७ ॥

ते नरर्षभा युधिष्ठिराद्याश्चत्वारः विपुलतरूपेतस्य विस्तृतवृक्षविराजितस्य श्वेतपर्वतस्य तस्य मनोज्ञरूपे रम्यतरे प्रान्ते तटे विजयेन अर्जुनेन भ्रात्रा योगं प्रापुः । त्रिदिवादिन्द्रप्रसादाधिगतास्त्रविद्यामवाप्यागतः । सहर्षोऽर्जुनस्तत्रैव तेषां मिलित इत्यर्थः । कथंभूतेन विजयेन अर्जुनेन । सूचितभाविजयेन सूचितः प्रकटीकृतः भावी जयो यस्य तादृशेन । कया । प्रभया । प्रसन्नमुखरागेणेत्यर्थः ॥

विनिवृत्ताः श्वेतस्य प्रस्थात्तेऽभ्यागते सिताश्वे तस्य ।
अधिगतसद्योगस्य प्रान्तमगुर्यामुनस्य सद्योऽगस्य ॥ ३८ ॥

ते युधिष्ठिराद्याश्चत्वारः सिताश्वेऽर्जुनेऽभ्यागते मिलिते सति श्वेतस्य श्वेतपर्वतस्य प्रस्थात्सानोः सकाशात् सद्यस्तत्क्षणं यामुनस्य यामुनाख्यस्य अगस्य पर्वतस्य प्रान्तं सविधमगुः ययुः । कीदृशस्य यामुनस्यागस्य । अधिगतसद्योगस्य अधिगतः सतां सज्जनानां योगो येन स तादृशस्य ॥

तत्र हरगुहाभोगे तन्वन्मृगयां मनोहरगुहाभोगे ।
अतिरभसेनोग्राहिप्रवरेणोपेत्य भीमसेनोऽग्राहि ॥ ३९ ॥

मनोहरगुहाभोगे मनोहरो रम्यः गुहाणां दरीणामाभोगो विस्तारो यस्य स तादृशे तत्र अगे यामुनाख्ये मृगयामाखेटकं तन्वन् कुर्वन् भीमसेनः अतिरभसेन अतिसाहसयुक्तेन । उग्राहिप्रवरेण उग्रो योऽहिप्रवरः अजगरः तेन उपेत्य आगत्य भीमसेनोऽग्राहि गृहीतः । एतदाख्यानं वनपर्वणि आजगरे प्राक्तनवृत्तान्तपूर्वं सर्वमूह्यम् ॥

प्राप्य कृती तमहिं स प्रश्नोत्तरैर्विधाय मुदितमहिं सः ।
अकरोदहितान्तस्य भ्रातुर्मोक्षं महीभृदहितान्तस्य ॥ ४० ॥

स महीभृत् राजा युधिष्ठिरः कृती विद्वान् तमहिमजगरं प्रश्नोत्तरैर्मुदितं संतुष्टं विधाय अहितान्तस्य अहिना महासर्पेण तान्तस्य गृहीत्वा खेदितस्य भ्रातुर्मोक्षमकरोत् । निजभ्रातरं भीमं मोचयामासेत्यर्थः । कीदृशस्य भ्रातुः । अहितान्तस्य अहितानामन्तो नाशः यस्मात्स तादृशस्य । महीभृत् कीदृशः । अहिंसः हिंसारहितः प्रशान्तः । अत्र च यो महाहिः स नहुषो नाम राजा शापभ्रष्टो भूत्वा सर्पतां गतः, येन भीमसेनो गृहीतोऽभूत् । तथा च वनपर्वणि आजगरे युधिष्ठिरं प्रति सर्पवाक्यम्—'प्रश्नानुच्चरितांस्तु त्वं व्याकरिष्यसि चेन्मम । अथ पश्चाद्विमोक्ष्यामि भ्रातरं ते वृकोदरम् ॥' इत्यादि सर्वं तत एवोह्यम् । ग्रन्थविस्तरभयान्न लिखितम् ॥

सज्जनरसदं तेन भ्रात्रा सह धर्मसूनुरसदन्तेन ।
पुनरेव प्राप सरः स द्वैतवनं कृतादिवप्रापसरः ॥ ४१ ॥

कृतादिवप्रापसरः कृत आदिवप्रात् प्रथमाश्रितयामुननगतटान् अपसरो यानं निजभ्रातृमोक्षार्थं येन स तादृशः धर्मसूनुः युधिष्ठिरः तेन भ्रात्रा भीमेन सह पुनरेव द्वैतवनं सरः द्वैतवनाख्यं सरः प्राप । कीदृशम् । सज्जनेभ्यो हर्षप्रदम् । तेन भ्रात्रा कीदृशेन । असदन्तेन असतामन्तो नाशस्तत्स्वरूपेण ॥

तत्र तदा पार्थेभ्यः स्वां दर्शयितुं श्रियं मुदापार्थेभ्यः ।
द्विपघटया त्रातेन व्यधायि रिपुणाथ घोषयात्रा तेन ॥ ४२ ॥

तत्र च द्वैतवने मुदा हर्षेण अपार्थेभ्यः रहितेभ्यः वनवासाश्रयणात् पार्थेभ्यः युधिष्ठिरादिभ्यः तदा तत्कालं स्वां श्रियं दर्शयितुं द्विपघटया हस्तिघटया त्रातेन रक्षितेन तेन प्रसिद्धेन रिपुणा दुर्योधनेन घोषयात्रा मृगयापदेशेन व्यधायि कृता । नानाविधेषु देशेषु रम्या ये घोषास्तेषु यात्रा । तत्र वनपर्वणि घोषयात्रायाम्—'तं निर्यान्तं महाबाहुं द्रष्टुं द्वैतवनं सरः । पौराश्चानुययुः सर्वे सहदारा वनं गताः । अष्टौ रथसहस्राणि त्रीणि नागायुतानि च । पत्तयः शतसाहस्रा हयाश्च नवतिः शतम् ॥' इत्यादि ॥

सोऽथ सदारावरजः संप्राप वनं यदा सदारावरजः ।
सलिले सरसो दारैर्गन्धर्वः क्रीडति स्म सरसोदारैः ॥ ४३ ॥

अथानन्तरं सदारावरजः सहदारै राज्ञीभिः अवरजैश्च दुःशासनादिभिः वर्तते यः स तादृक् स दुर्योधनः यदा वनं संप्राप । कथं कृत्वा । सदारावरजः सन् आरावः हस्त्य-

---

१. 'कृत्वा प्रश्नोत्तरैः प्रतीतमहिंसः' मूल०. २. "आदिवप्र आदिपिता स्वगोत्रमहत्तरो नहुषस्तस्य कृतोऽपसरोऽपसरणं सर्पदेहान्मोक्षो येन सः । 'वप्रः पितरि केदारे वप्रः प्राकाररोधसोः' इति रुद्रः" इति मूलपुस्तकटिप्पणी. ३. 'नृप' मूल०.

श्वादीनां [यत्र तादृशं] सच्च रजः सैन्योत्थं यस्मिन् कर्मणि तथा। यदैव स वनं प्राप, गन्धर्वः गन्धर्वराजश्चित्रसेनाख्यः गन्धर्वचमूवृतो यः सुरपतिना वनवासेनाितखेदि पार्थानां रक्षणार्थं तत्र द्वैतवने प्रहितोऽभूत् स एव गन्धर्वश्चित्रसेनः सरसोदारैः रसेन शृङ्गारादिना कौतुकेन वा वर्तन्ते ये ते सरसाः तादृशश्च उदाराश्च तैस्तादृशै राज्ञीभिः सह सरसः द्वैतवनाख्यस्य सलिले क्रीडति स्म चिक्रीड ॥

स कुरूंस्तानभ्यर्णस्थायिकलत्रः समागतानभ्यर्णः ।
नवघनवद्रुरुरोधः स्थगयन्निपुवर्षणेन वल्गु रुरोध ॥ ४४ ॥

स चित्रसेनो गन्धर्वराजः अभ्यर्णस्थायिकलत्रः अभ्यर्णः अर्णसः सरस्तोयस्य समी' अभ्यर्णः स्थायिकलत्रः स्थायिदारः। तथा अभ्यर्णःनिकटवर्ती इपुवर्षणेन शरवृष्टया गुरु महद्रोध आकाशं नवघनवत् नवः सजलो मेघः तद्वत् नवमेघवत् स्थगयन् पिदधत् तान् समागतान् कुरून् वल्गु वामं कृत्वा रुरोध ॥

अथ रभसेनोदीर्णं कर्णं विद्राव्य चित्रसेनो दीर्णम् ।
प्रथयन्कौ रवमनयन्निवध्य गगनं क्षणेन कौरवमनयम् ॥ ४५ ॥

अथानन्तरं चित्रसेनो गन्धर्वराट् रभसेन साहसेन उदीर्णमुद्भटं कर्णं राधेयं दीर्णं त्रुटितं विद्राव्य कौ भूमौ रवं शब्दं प्रथयन् विस्तारयन् क्षणेन अनयं नीतिरहितं कौरवं दुर्योधनं निवध्य वद्ध्वा गगनमाकाशमनयत् ॥

विदधद्द्विप्रभुवि[1] पदं पार्थः श्रुत्वा स कौरवप्रभुविपदम् ।
युद्ध्वा परमारिभ्यः सुयोधनममोचयत्स परमारिभ्यः ॥ ४६ ॥

विप्रभुवि ब्राह्मणस्थाने पदं विदधद्विशेषेण दधत् रक्षन्। वनवासव्रतेनेत्यर्थः। स पार्थः अर्जुनः कौरवप्रभुविपदं कौरवप्रभोः दुर्योधनस्य विपदं तादृशीं गन्धर्वप्रभुणा वद्ध्वा बलात्तद्गगननयनस्वरूपां श्रुत्वा तैर्गन्धर्वैः सह युद्ध्वा परमारिभ्यः परान् शत्रून् मारयन्ति ये ते परमारिणः तादृशेभ्यः परमारिभ्यः परमा उत्कृष्टा देवयोनित्वाये अरयः गन्धर्वास्तेभ्यः सुयोधनं दुर्योधनममोचयत् ॥

व्रीडाद्वितततानमनः स च गच्छन्ननशनाय विततान मनः ।
अथ सर्वस्वापेतं न्यवेदयन्नमरशत्रवः स्वापे तम् ॥ ४७ ॥

स च दुर्योधनः व्रीडात् शत्रुभिः पार्थैः विहितस्वमोचनोत्थात् वितताननमनः विततमाननमनं स्त्रीभावो यस्य तादृशो गच्छन् अनशनाय अनशनव्रताय मनो विततान। निर्विण्णीभूय मनोऽनशने चक्रे इत्यर्थः । अथानन्तरं सर्वस्वापेतं निर्वेदेन सर्वस्वादपेतम् मनसा तं दुर्योधनममरशत्रवो दैत्याः स्वापे स्वप्नविषये तं न्यवेदयन् बोधयन्ति स्म ॥

१. 'द्वप्रभुवि' मूल०.

दैत्यास्तं स्वप्ने किमवोधयन्नित्याह—

प्राप्नुहि मानाशयतां श्रद्धां राज्ये नरेन्द्र मा नाशय ताम् ।
तव हि सहायाः स्यामः स्वयं रणं च त्वया सहायास्यामः ॥४८॥

हे राजन् दुर्योधन, मानाशयतां मानः आशये यस्य स मानाशयः मानी तद्भावं प्राप्नुहि । हे नरेन्द्र, तां प्रसिद्धां श्रद्धां भक्तिं राज्ये राज्यविषये मा नाशय । श्रद्धां तत्र कुरु इत्यर्थः । हि निश्चये तव वयं सहायाः स्यामः त्वया सह स्वयं रणं च आयास्यामः आगमिष्यामः ॥

इति सुरसे नाकलये निगदति संसक्तमानसेनाकलये ।
स्नेहादसुरसमूहे पुनरमुना हृदयमुद्यदसुरसमूहे ॥ ४९ ॥

इत्यनेन प्रकारेण सुरसे शोभनरसे नाकलये आकाशस्थे असुरसमूहे स्नेहाद्धेतोः संसक्तमानसेनाकलये संसक्तो घनो मानो यस्याः सा तादृशी चासौ सेना तस्याः कलये युद्धाय स्वप्ने निगदति शासति सति अमुना दुर्योधनेन पुनरपि हृदयमुद्यदसुरसमुद्यन् निर्वेदत्यागेन उदयन् असुरसः प्राणधारणरसो येन तत् तादृशमूहे दध्रे ॥

तदनु करिपुरायातः सुयोधनस्त्यक्तनाकरिपुरायातः ।
मानसमापद्यज्ञं दधत्ततः पौण्डरीकमापद्यज्ञम् ॥ ५० ॥

तदनु तदनन्तरं त्यक्ताः स्वप्नदृष्टनष्टत्वात् त्यक्ता नाकरिपवो दैत्या येन स तादृक् सुयोधनः करिपुरायातो हस्तिनापुरायातः सन् आपदि आपत्काले अज्ञं मूढं मानसं मनो दधत् पौण्डरीकं पौण्डरीकनाम यज्ञमापत् प्राप ॥

तस्मादवलेऽपेते शौरिः पार्थाश्च विदलदवलेपे ते ।
काम्यकमापन्नार्या युक्ताः शक्त्या नितान्तमापन्नार्याः ॥ ५१ ॥

तस्मात् स्थानाद् विदलदवलेपे विदलन्भज्यमानोऽवलेपो गर्वो यस्य स तादृशे । तथा— अवले वलरहिते । रिपाविति शेषः । रिपौ दुर्योधने अपेते चलिते सति शौरिः श्रीकृष्णस्तद्दर्शनागतः पार्थाश्च युधिष्ठिराद्या नार्या द्रौपद्या युक्ताः, तथा नितान्तं सततं शक्त्या आपन्नाः शरणं प्राप्ता अर्याः साधवो येषां ते तादृशाः काम्यकं नाम वनमापत् प्रापुः ॥

तत्र सदारावेषु भ्रमत्सु मृगयाकृते सदारावेषु ।
उटजमवापापायस्थितमेषां सैन्धवो युवा पापाय ॥ ५२ ॥

सह दारुणा देवदार्वादिना वर्तते यत्तत् सदारु तस्मिन्सदारौ तत्र काम्यके वने मृगयाकृते मृगयार्थं सदारावेषु सन् आरावः सिंहनादो येषु ते तादृशेषु एषु पार्थेषु भ्रमत्सु सत्सु अपायस्थितमपाये भाविनि सैन्धवस्य विनाशे स्थितमेषां पार्थानामुटजं पर्णशालां पापाय पापार्थं द्रौपदीं प्रति दुष्टदृष्ट्यर्थं सैन्धवो युवा सिन्धदेशाधिपो जयद्रथोऽवाप प्राप ॥

स द्रुपदस्य सुतां तां ददर्श चकमे च भयमुदस्य सुतान्ताम् ।
भर्ता सौवीराणां हृत्वा च गतः प्रियामसौ वीराणाम् ॥ ९३ ॥

स जयद्रथः तां द्रुपदस्य राज्ञः सुतां द्रौपदीं ददर्श । सुतान्तां सुष्ठु वनवासेन तान्तां खिन्नां तां द्रौपदीं भयमुदस्य निर्भयीभूत्वा चकमे स्पृहयांचकार । असौ सौवीराणां जनपदविशेषाणां भर्ता जयद्रथो वीराणां पञ्चमहावीराणां पार्थानां प्रियां द्रौपदीं हृत्वा च गतः ॥

तमनुससारासन्तं भीमो जगृहे च शिरसि[1] सारासं तम् ।
अशनैरप्रीतस्य व्यधित शिखाः पञ्च च क्षुरप्री तस्य ॥ ९४ ॥

भीमो भीमसेनस्तमसन्तं दुष्टं जयद्रथमनुससार अन्वधावत् । सारासं सह आरासेन हुङ्कारेण । रास शब्दे । वर्तते यस्मिन् कर्मणि तथा तं जयद्रथं शिरसि च अर्थात् जूटे जगृहे । अशनैरमन्दम् । अप्रीतस्य व्यथितस्य तस्य च जयद्रथस्य पञ्च शिखाः जूटे जटाविषये क्षुरप्री अर्धचन्द्रबाणयुतः सन् व्यधित चक्रे । तदपमानार्थमित्यर्थः । यतो युधिष्ठिरवचनेन जीवन्नेव मोचितो भीमसेनेन । तथा च वनपर्वणि द्रौपदीप्रमाथे—'एवमुक्त्वा स जूटस्य पञ्च चक्रे वृकोदरः । अर्धचन्द्रेण बाणेन किंचिदब्रुवतस्तदा ॥' इत्यादि ॥

विकृताकारं भीतं सैन्धवमवबध्य स कटकारम्भी तम् ।
रणरणकाशमनैषी द्रौपद्या नरपतेः सकाशमनैषीत् ॥ ९५ ॥

स भीमस्तं सैन्धवं सिन्धुदेशाधिपं जयद्रथं भीतं त्रस्तं तथा भूमौ निपात्य पादप्रहाराद्युत्थरजोऽवगुण्ठनधूसरकेशत्वादिना विकृताकारमवबध्य बद्ध्वा द्रौपद्या रणरणकाशमनैषी रणरणकः अरतिः बलात्कारेण रथमारोप्य सैन्धवेन हरणात् या अरतिः तस्या आ समन्तात् शमनमीष्टे इति तादृक् नरपतेर्युधिष्ठिरस्य सकाशं सविधमनैषीत् निनाय ॥

तं कृतदुःसहजायाश्रममपि भर्तारमतिमृदुः सहजायाः ।
सैन्धवमनुनयमानः पाण्डुतनूजो मुमोच मनुनयमानः ॥ ९६ ॥

पाण्डुतनूजो युधिष्ठिरः कृतदुःसहजायाश्रममपि कृतो दुःसहो जायाया द्रौपद्याः श्रमः प्रसह्य रथमारोप्य हरणाद्येन स तादृशमपि अपराधिनं सहजाया भगिन्याः दुःशलायाः धृतराष्ट्रसुतायाः भर्तारं पतिं तं सैन्धवं जयद्रथमनुनयमानः सान्त्वयमानः तं मुमोच । पाण्डुसुतः कीदृशः । अतिमृदुः सात्त्विकप्रकृतिः । पुनश्च कीदृशः । मनुनयमानः मनोर्वंशादिराजस्येव नयो मानश्च यस्य स तादृशः । तथा च वनपर्वणि द्रौपदीप्रमाथे भीमं प्रति युधिष्ठिरवाक्यम्—'न हन्तव्यो महाबाहो दुरात्मापि हि सैन्धवः । दुःशलामपि संस्मृत्य गान्धारीं च यशस्विनीम् ॥' इति ॥

---

१. 'सरसि' मूल.

सोऽपि विभा वैरस्य स्मरणात्पार्थैर्महानुभावैरस्य ।
अभजत कृतिमानीशं को लभते द्विपति दैन्यकृति मानी शम् ९७

सोऽपि जयद्रथोऽपि महानुभावैः पार्थैः सह वैरस्य स्मरणात् विभाः विगता भा दीप्तिर्यस्य स तादृशः, कृतिमान् कृतिः शुभकर्म तद्वान् ईशं श्रीशंभुमभजत । तपसेत्यर्थः । एतत्संवादायार्थान्तरन्यासमाह—द्विपति शत्रौ दैन्यकृति दैन्योत्पादके सति को मानी मानयुक्तः पुरुषः शं कल्याणं लभते । न कोऽपीत्यर्थः ॥

अपि वनमाराधीमान्रोद्धुं पार्थान्सुरोत्तमाराधीमान् ।
निजपुरमुत्सवि विश्वान्सुहृदश्चाह्लादयन्समुत्स विविश्वान् ॥ ९८ ॥

स जयद्रथः इमान् पार्थान् पञ्च रोद्धुं सुरोत्तमाराधी सुरोत्तमं श्रीशंभुमाराधयति तादृक् वनं काननमपि आर ययौ । 'ऋ गतौ' इत्यस्माद्धातोर्लिटि रूपम् । किंभूतः सः । अधीमान् बुद्धिहीनः सः । यतोऽर्जुनः स्वयं रुद्रां(इन्द्रां)शः स कथं तेन जेयः स्यादिति । तथा च वनपर्वणि द्रौपदीप्रमाथे—'समस्तान् सरथान् पञ्च जयेयं युधि पाण्डवान् । इति राजाब्रवीद्देवं नेति देवस्तमब्रवीत् ॥ अवध्यांश्चापि वध्यांश्च धारयिष्यसि तान्युधि । ऋतेऽर्जुनं महाबाहुं देवैरपि दुरुत्सहम् ॥' इति । निजपुरमिति । स जयद्रथः समुत् सह मुदा वर्तते स तादृक् विश्वान् सर्वान् सुहृदश्चाह्लादयन् सुखयन् उत्सवि महोत्सवयुक्तं निजपुरं स्वनगरं विविश्वान् प्रवेष्टुकामोऽभूत् । विविश्वान् इति 'विश प्रवेशने' इत्यस्माद्धातोः क्वसुप्रत्यये रूपम् ॥

तस्मिन्नाश्वपयाते चम्वा सह निहतकेतनाश्वपया ते ।
विपिनमनररम्यं तद्द्वैतवनमुपेत्य पुनररस्यन्त ॥ ९९ ॥

निहतकेतनाश्वपया निहतानि केतनानि ध्वजाः निहता अश्वपाः सादिनश्च यस्यां सा तादृश्या चम्वा पृतनया सह तस्मिन् जयद्रथे आशु शीघ्रमपयाते प्रचलिते सति अनररम्यं तत् अनरैर्गन्धर्वकिंनरादिभिः रम्यं तत् द्वैतवनमुपेत्य पुनस्ते पाण्डवा अरम्यन्त ॥

तेषां पार्थानां सद्रौपदीकानां वनवासोपसंहारं वर्णयन्नाह—

इति स महानावसतां वनमेषां तिष्ठतां च हानावसताम् ।
शनकैरागमदन्तं समयो नमतां च जनमरागमदं तम् ॥ १०० ॥

इत्यनेन प्रकारेण वनं काननमावसतामाश्रयताम्, तथा असतां दुष्टचित्तानां च हानौ दमने तिष्ठताम्, तथा तं प्रसिद्धमरागमदमविद्यमानो रागो विषयेष्वासक्तिः, मदो गर्वश्च यस्य स तादृशं जनं साधुजनं नमतां प्रणमतां च शनकैः शनैः शनैः स महान् समयः यः स्वदायादैः सह द्यूते वनवाससमयः कृतोऽभूत् स समयः अन्तमागमत् आजगाम ॥

दृष्ट्वा सत्येनसि तान्पार्थान्क्षमिणश्च रिपुषु सत्येन सितान् ।
मुदमधिकामायासीद्धर्मस्तेषां रतश्च कामायासीत् ॥ ६१ ॥

सत्येन सत्यवचसा सितान् बद्धान् । 'षो(?) तनूकरणे' बन्धने च धातुः । तथा एनसि पापे सत्यपि क्षमिणः क्षान्तियुतान् पार्थान् दृष्ट्वा धर्मः आद्यः पुरुषार्थः तान् प्रति अधिकां मुदं तुष्टिमायासीत् । तेषां पार्थानां कामाय अभिलाषाय रतश्चासीत् । एतदग्रिमश्लोके प्रकटयति ॥

स विचारी क्षान्तेषु प्रयोक्तुकामः प्रभुः परीक्षां तेषु ।
अहरत सारङ्गत्वाद्द्विजस्य भाण्डं मुदः प्रसारं गत्वा ॥ ६२ ॥

स धर्मः प्रथमः पुरुषार्थः प्रभुः विचारी सदसद्विचारज्ञः क्षान्तेषु क्षमावत्सु तेषु पार्थेषु परीक्षां स्वविषये श्रद्धां प्रयोक्तुकामः ज्ञातुकामः मुदो हर्षस्य प्रसारं विस्तारं गत्वा हृष्टीभूय सारङ्गत्वात् । परीक्षार्थं छद्मना मृगरूपं कृत्वेत्यर्थः । द्विजस्य ब्राह्मणस्य भाण्डं यज्ञोपयोगि अरणियुग्ममहरत । धर्मो मृगरूपेण जहारेत्यर्थः । तथा च वनपर्वणि—'आगत्य ब्राह्मणस्तूर्णं संतप्त इदमब्रवीत् ॥ अरणीसहितं मह्यं समासक्तं वनस्पतौ । मृगस्य कपमाणस्य विषाणे समसज्जत ॥ एतदाशां गतो राजंस्त्वरमाणो महामृगः । आश्रमात्त्वरितं शीघ्रं त्वरमाणो मनोजवः ॥ तस्य गत्वा पदं शीघ्रमासाद्य च महामृगम् । अग्निहोत्रं न लुप्येत तदानयत पाण्डवाः ॥' इत्यादि । अरणीसहितम् अरणियुग्मम् । सहितशब्दो युग्मार्थे ॥

विप्रवरारण्यन्ते विविशुः पार्था महत्तरारण्यं ते ।
कृतशरतोदा वेगादन्तर्धानं मृगस्ततो दावेऽगात् ॥ ६३ ॥

विप्रवरस्य ये अरण्यौ अरणियुग्मं तयोरन्तः निश्चयस्तस्मिन् विप्रवरारण्यन्ते हेतौ पार्था युधिष्ठिराद्या महात्तरारण्यं महारण्यं विविशुः प्राविशन् । कीदृशास्ते । कृतशरतोदाः कृतः धावते मृगाय शरैः कर्णिनालीकनाराचादिभिः तोदो वधो यैस्ते । ततोऽनन्तरं स मृगो दावे देववने अन्तर्धानमगात् अन्तर्हितोऽभूत् ॥

तत्र च पानीयार्थं जहावभीष्टं नृपोऽनुपानीयार्थम् ।
भ्रातॄंस्तापात्यन्तग्लानास्ते चापि भगवतापात्यन्त ॥ ६४ ॥

तत्र च स्थले अभीष्टं धर्मस्य भगवतोऽभीष्टमर्थमनुपानीय न उपानीय ज्ञात्वा तृषितः सन् तृप्तो भ्रातॄन् भीमादीन् पानीयार्थं जहौ विसर्जयामास । 'हि[2] गतिवृद्ध्योः' धातुः । ते चापि भ्रातरश्चत्वारः भीमाद्या मृगस्य पश्चाद्धावनेन श्रान्ताः नितरां तापेन अत्यन्तं ग्लानाश्च भगवता धर्मेण यक्षरूपधारिणा परीक्षार्थमपात्यन्त । भूमौ पातिताः प्रश्नानामुत्तराप्रदानात्ते भीमाद्या भूमौ पतिताः । तद्वचसेत्यर्थः । एतदाख्यानं वनपर्वणि प्रान्ते तत एवोह्यम् ॥

---

१. 'षिञ् बन्धने' इति धातुर्बोध्यः. २. 'ओहाक् त्यागे' इति धातुर्बोध्यः.

गत्वासन्नन्ता तं प्रश्नानामुत्तरैः प्रसन्नं तातम् ।
कृत्वा नीरेऽपास्तानजीवयद्धर्मजोऽथ नीरेपास्तान् ॥ ६५ ॥

स धर्मजो युधिष्ठिरः तान् पानीयार्थं गतांश्चिरकालमपेक्ष्यापि अनागतान् मत्वा स स्वयं गत्वा तं तातं जनकं धर्मं प्रश्नानां 'किंस्विदित्यादिलमुन्नयति' इत्यादिकानां वनपर्वणि व्याख्यातानाम् उत्तरैः प्रसन्नं कृत्वा नीरे जले अपास्तान् पतितांस्तान् स्वभ्रातॄन् अजीवयत्। धर्मजः कीदृशः। असन्नन्ता असतः शत्रून् नमयतीति असन्नन्ता। तृजन्तस्य रूपम्। पुनः कीदृशः। नीरेपाः निर्गतं रेपः कल्मषं यस्मात्स तादृक्। रेपस्शब्दः पापार्थे ॥

धर्मे रन्ता तेन प्रीतेन च लम्भितो वरं तातेन ।
तत्र च जातावरणे राजा चक्रेऽर्पणं द्विजातावरणेः ॥ ६६ ॥

धर्मे धर्मविषये रन्ता हर्षलः तेन प्रीतेन तातेन जनकेन धर्मेण वरं च । जातावेकवचनम् । वरांश्च त्रयोदशं वर्षं केनाप्यविज्ञातचारादिकान् लम्भितः स राजा युधिष्ठिरस्तत्र च धर्मे जातावरणे जातमावरणं छादनं यस्य स तादृशे । अन्तर्हिते इत्यर्थः । द्विजातौ प्रागुद्दिष्टे विप्रे अरणेः अरणियुग्मस्य अर्पणं चक्रे ॥

तदनु गतासु समासु द्वादशसु वनान्तखेदितासु समासुः ।
विप्रसदसि चापास्ते शमीतरुन्यस्तविलसदसिचापास्ते ॥ ६७ ॥
स्मृतकुरुराजद्वेषा रूपान्तरधारिणो विराजद्वेषाः ।
प्राप्तविराटोपान्ताः पाण्डुसुता रेमिरे पराटोपान्ताः ॥ ६८ ॥

तदनु तदनन्तरं वनान्तखेदितासु वनान्तरे खेदिता ज्ञातातिवाहास्तादृशीषु द्वादशसु समासु द्वादशवर्षेषु समासुः आसांचक्रिरे । द्वादशसु वर्षेषु इत्थं वनवासं चक्रुरित्यर्थः। विप्रसदसि च विप्राणां सदः सभा तत्र च अपास्ते विसर्जिते ते पार्थाः शमीतरौ शमीवृक्षे न्यस्ता विलसन्तः असयः खड्गाः चापाश्च यैस्ते तादृशाः सन्तः । स्मृतकुरुराजद्वेषाः स्मृतः कुरुराजस्य दुर्योधनस्य द्वेषो राजसभायां तादृशापमानादिः यैस्ते रूपान्तरधारिणः स्वकीयरूपादन्यरूपधारिणः विराजद्वेषा विराजन् तदुचितो वेषोऽन्यो येषां ते तादृशाः । प्राप्तविराटोपान्ताः प्राप्तः विराटस्य राज्ञ उपान्तः समीपं यैस्ते तादृशा रेमिरे । तत्रैव विराटनगरे इत्यर्थः । पुनः कीदृशाः । पराटोपान्ताः परेषां शत्रूणां य आटोपः आडम्बरं तस्य अन्ताः । नाशरूपा इत्यर्थः ॥ युग्मम् ॥

सत्यगिरा संन्यासस्थितया मूर्त्यारिमतानिरासन्या सः ।
अभृत सभास्ताराणां पतिरिव नृपतिर्धुरं सभास्ताराणाम् ॥ ६९ ॥

स नृपतिर्युधिष्ठिरः सत्यगिरा सत्या अविसंवादिनी गीर्यस्याः सा तादृश्या, तथा संन्यासस्थितया सम्यक् न्यासः कर्मणां वहिर्ब्राह्मणादीनां तत्र स्थितया, तथा अरिमता-

निरासिन्या अरिमतम् एकस्मिन् वर्षे सुसंगोपनं तस्य अनिरासिनी अनिराकर्त्री तादृश्या मूर्त्या उपलक्षितः, तथा सभाः सह भासा दीप्त्या वर्तते यः स तादृशः, सभास्ताराणां सभिकानां धुरमग्र्यत्वमभृत अधारयत्। कङ्को नाम ब्राह्मणो भूत्वा मताक्षः सभास्तारो बभूव। विराटस्य राज्ञः सभायामित्यर्थः। क इव। ताराणां पतिश्चन्द्रमा इव। तथा च विराटपर्वणि युधिष्ठिरवाक्यम्—'सभास्तारो भविष्यामि तस्य राज्ञो महात्मनः। कङ्को नाम द्विजो भूत्वा मताक्षः प्रियदेविता॥ वैडूर्यात्काञ्चनाद्दान्तात्फलैर्ज्योतीरसैः सह। कृष्णाक्षाल्लोहिताक्षांश्च निर्वर्त्स्यामि मनोरमान्॥ विराटराजं रमयन् सामात्यं सह बान्धवम्॥' मता अक्षाश्चतुरङ्गा यस्य स मताक्ष इत्यादि॥

असुहृदुरोबललोपिस्वबलो भूत्वा वृकोदरो बललोऽपि।
कर्म महानसमानं व्यधित विराटस्य धृतमहानसमानम्॥ ७०॥

असुहृदां शत्रूणां यदुरोबलं तत् लुम्पतीति असुहृदुरोबललोपि तादृशं स्वबलं यस्य स तादृशः असुहृदुरोबललोपिस्वबलो भूत्वा। तथा बललः अपि बलवानपि। बलं विद्यते यस्य स बललः। तथा महान् महात्मा महदाकृतिश्च धृतमहानसमानं धृतः महानसे रसवतीस्थाने मान आदरो यस्य तत् तादृशं कर्म बल्लवनामपौरोगवकर्म विराटस्य नृपस्य गृहीत्वा व्यधित। कीदृशं कर्म। असमानमनन्यसमानं तदनुचितं वा। तथा च विराटपर्वणि भीमोक्तिः—'पौरोगवो ब्रुवाणोऽहं बल्लवो नाम नामतः। उपस्थास्यामि राजानं विराटमिति मे मतिः॥ सूपानस्य करिष्यामि कुशलोऽस्मिन् महानसे॥' इत्यादि॥

दत्तरसं गीतानि क्लीबो भूत्वा तथैव संगीतानि।
रिपुराशिक्षयदस्य प्रियां सुतामर्जुनोऽप्यशिक्षयदस्य॥ ७१॥

अर्जुनोऽपि क्लीबो भूत्वा बृहन्नडारूपो भूत्वा तथैव तेन प्रकारेण अस्य विराटस्य राज्ञः प्रियां वत्सलां सुतां गीतानि तथैव संगीतानि नृत्यगीतवाद्यानि अन्याश्च तत्परिचारका अशिक्षयत्। कथम्। दत्तरसं दत्तो रसो यत्र तत्। विराटस्य कीदृशस्य। रिपूणां राशिः तस्य क्षयं ददातीति तादृशस्तस्य। तथा च विराटपर्वणि अर्जुनवाक्यम्—'कर्णयोः प्रतिमुच्याहं कुण्डले ज्वलनोपमे। वेणीकृतशिरा राजन्नाम्ना देव बृहन्नडा॥ पठन्नाख्यायिकं नाम स्त्रीभावेन पुनः पुनः। रमयिष्ये महीपालमन्याश्चान्तःपुरे जनान्॥' इत्यादि॥

अपि च मृदुः स हयानां विततिं विनयन्विपक्षदुःसहयानाम्।
सुतरामवसन्नकुलः प्रेष्यो भूत्वात्र निपुणमवसन्नकुलः॥ ७२॥

स नकुलो माद्रीसुतः विपक्षदुःसहयानां विपक्षैः शत्रुभिः दुःसहं यानं गतिविशेषो यस्याः सा तादृशीं हयानामश्वानां ततिं विनयन् शिक्षयन् चिकित्सयंश्च ग्रन्थिको नाम भूत्वा अत्र विराटनगरे निपुणं सुखमवसत्। कीदृशः स नकुलः। प्रेष्यो भूत्वा पराधीनो

भूत्वा सुतरामतिशयेन अवगतं कुलं यस्य स तादृशः । तथा विराटपर्वणि नकुलवाक्यम्—'अश्वबन्धो भविष्यामि विराटनृपतेरहम् । सर्वथा ज्ञानसंपन्नः कुशलः परिरक्षणे ॥ ग्रन्थिको नाम नामाहं तदेतत्सुप्रियं मम । कुशलोऽस्म्यश्वशिक्षायां तथैवाश्वचिकित्सिते ॥' इत्यादि ॥

कर्मणि गोपालस्य स्थितिमकृत गवां गणानुगोऽपालस्यः ।
तद्भटया सहदेवः साक्षाद्धातेव विद्यया सहदेवः ॥ ७३ ॥

सहदेवः माद्रीसुतः अपालस्यः अपगतमालस्यं यस्य स तादृशः, गणानुगो गवां गोवृन्दानुगः । साक्षात् धाता ब्रह्मेव तद्भटया तासु गोषु घटते मिलतीति तद्भटा तया विद्यया तच्चिकित्सितविद्यया सह गोपालस्य कर्मणि चिकित्सितादिना गोपालकर्मणि स्थितिं तन्तिपालनामको भूत्वा अकृत । तथा च विराटपर्वणि नकुलवाक्यम्—'गोसंख्याता भविष्यामि विराटस्य महीपतेः । प्रतिषेद्धा च दोग्धा च संख्याने कुशलो भवन् ॥ तन्तिपाल इति ख्यातो नाम्ना विदितमस्तु ते । निपुणं च चरिष्यामि व्येतु ते मानसो ज्वरः ॥ लक्षणं चरितं चापि गवां यच्चापि मङ्गलम् । तत्सर्वं मे सुविदितमन्यच्चापि महीपते ॥ वृषभानपि जानामि राजन् पूजितलक्षणान् । येषां मूत्रमुपाघ्राय अपि वन्ध्या प्रजायते ॥ सोऽहमेवं चरिष्यामि प्रीतिरत्र हि मे सदा ॥' इति ॥

अथ द्रौपद्या वेषग्रहणमाह—

वृतवपुरेकपटेन द्रुपदसुता मात्स्यके पुरे कपटेन ।
अधिगतराजनिशान्ता सैरिन्ध्रीकर्मतत्पराजनि शान्ता ॥ ७४ ॥

एकपटेन एकेनैव पटेन वृतवपुः वृतमाच्छादितं वपुः कलेवरं यया सा तादृशी, तथा अधिगतराजनिशान्ता अधिगतः प्राप्तो राज्ञो निशान्तः शुद्धान्तो यया सा तादृशी द्रुपदसुता मात्स्यके पुरे विराटनगरे कपटेन व्याजेन सैरिन्ध्री परवेश्मस्था नारी तस्याः कर्मणि तत्परा सैरिन्ध्रीकर्मतत्परा अजनि जाता । तत्रापि कीदृशी । शान्ता शमप्रधाना ॥

अथ द्रौपद्या व्याजेन सैरिन्ध्रीकर्मतत्परत्वमुद्दिश्येदानीं केशप्रसाधनकर्मकरीत्वमपि वर्णयति—

स्वीकृतमानसहासा पाञ्चालसुता परावमानसहा सा ।
स्त्रीवृन्दे व्याजज्ञे विचरन्ती केशभृच्च देव्या जज्ञे ॥ ७५ ॥

देव्या विराटमहिष्या सा पाञ्चालसुता द्रौपदी सैरिन्ध्रीभावग्रहणेन परावमानसहा परावमानं सहते इति तादृक्, तथा स्वीकृतमानसहासा स्वीकृतं कृतं मानसं येन स तादृक् हासो यस्याः । कदापि कीदृगैश्वर्यभागिनी कुत्राहं व्यसने निपातिता दैवेनेति मनसि हसन्त्यपि, व्याजज्ञे व्याजं जानाति इति व्याजज्ञः तादृशे स्त्रीवृन्दे स्त्रीसमाजे विचरन्ती । 'केशकृत्' इति पाठे केशान् करोति प्रसाधयति सा । धातूनामनेकार्थत्वात् केशभृत् । केशान् बिभर्ति धारयति पोषयति वा प्रसाधनादिकर्मणा इति केशभृच्चेयमिति

जज्ञे ज्ञाता । तथा च विराटपर्वणि द्रौपदीवाक्यम्—'सैरिन्ध्र्यो रक्षिता लोके भुजिष्याः सन्ति भारत । नैवमन्याः स्त्रियो यान्ति इति लोकस्य निश्चयः ॥ साहं ब्रुवाणा सैरिन्ध्री कुशला केशकर्मणि । युधिष्ठिरस्य गेहे वै द्रौपद्याः परिचारिका ॥ उषितास्मीति वक्ष्यामि पृष्टा राज्ञा च भारत । आत्मगुप्ता चरिष्यामि यन्मा त्वमनुपृच्छसि ॥ सुदेष्णां प्रत्युपस्थाप्य राजभार्यां यशस्विनीम् । सा रक्षिष्यति मां प्राप्तां मा ते भूद्दुःखमीदृशम् ॥' इति ॥

इति कृतनानाकृत्या विश्वास्य कुरूत्तमा जनानाकृत्या ।
संभृतसमवेतनया स्वैरं न्यवसन्पुरेऽत्र समवेतनयाः ॥ ७६ ॥

इत्यनेन प्रकारेण कृतनानाकृत्या कृतं नाना नानाविधं कृत्यं यैस्ते तादृशाः सन्तः ते कुरूत्तमाः कुरुवंशजाः पार्थाः आकृत्या पूर्वोक्तक्रमेण विहितया जनान् विश्वास्य विश्वासं नीत्वा अत्र पुरे संभृतसमवेतनया संभृता एकत्र कृता या समवेतना भृतिः शरीरयात्रार्थं तया न्यवसन् । कीदृशाः । समवेतनयाः समवेतः नित्यसमवायी नयो नीतिर्येषां ते तादृशाः ॥

स्वर्गसमाने वसतः पुरे विराटस्य सुरसमानेव सतः ।
स च नरदेवो धीमानथ वान्यो नैव जनपदेऽवोधीमान् ॥ ७७ ॥

स्वर्गसमाने विराटस्य पुरे वसतः स्थितान् सतः सूरीन् साधूंश्च सुरसमान् देवसमानानिमान् पार्थान् स च धीमान् बुद्धिमान् नरदेवो राजा नैवाबोधि न ज्ञातवान् अथवा जनपदे तद्देशे अन्योऽपि इमान् पार्थान् नैवाबोधि ॥

तत्र निवाससमेतां कृष्णामैक्षिष्ट मलिनवाससमेताम् ।
कीचकनामा नीचः श्यालो मत्स्यस्य दुर्मना मानी च ॥ ७८ ॥

तत्र विराटपुरे निवाससमेतां निवासे गृहे समेतां मिलितां मार्गे एतां कृष्णां द्रौपदीं मलिनवाससं मलिनवस्त्रां कीचकनामा नीचः अधमो मत्स्यस्य विराटस्य राज्ञः श्यालो पत्न्या भ्राता सेनापतिश्च ऐक्षिष्ट ददर्श । कीदृशः । दुर्मनाः दुष्टचित्तः । तथा—मानी गर्वभृत् ॥

अवददनङ्गजलोऽलं स मनो दधतीममूमनङ्गजलोलम् ।
भज वारिजनेत्रे मामनुयच्छ दृशं कृशोदरि जनेऽत्रेमाम् ॥ ७९ ॥

स कीचकः अलमत्यर्थम् अनङ्गजलः अनङ्गेन कामेन जलो जडः । लडयोरैक्यात् । अमूं द्रौपदीमवदत् । कीदृशीं द्रौपदीम् । मनश्चित्तं दधतीम् । कीदृशम् । अनङ्गजलोलं न अङ्गजेन कामेन लोलं चपलम् । संयतचेतसमित्यर्थः । किमवोचदित्याह—हे वारिजनेत्रे कमलनयने, मां भज । हे कृशोदरि हे तनूदरि, इमां दृशं हरिणगर्वहारिणीमत्र जने मल्लक्षणे अनुयच्छ संधेहि ॥

---

१. 'मनुपश्य दृशं' मू०

कीचको द्रौपदीं पुनश्च किमवोचदित्याह—

न त्वं दासी तावद्विराजसे रूपसंपदा सीतावत् ।
विरचितनानासान्त्वं व्रजन्तु तव दास्यमङ्गना नासां त्वम् ॥ ८० ॥

हे कृशोदरि, तावत् प्राथम्ये त्वं दासी न पर्यवसाने त्वं दासीव नाभाससे इति जाने। यतस्त्वं रूपसंपदा रूपातिशयेन सीतावत् श्रीराममहिषीवत् विराजसे विशेषेण राजसे। अङ्गना अन्यनार्यः तव दास्यं व्रजन्तु । मत्स्वीकरणादिति शेषः । कथम् । विरचितनानासान्त्वं विरचितानि विशेषेण कृतानि नानासान्त्वानि नानाविधचाटूनि यस्मिन् कर्मणि । तथा—आसामङ्गनानां त्वं दासी न भविष्यसि इति त्वं जानीहि ॥

जीवितमङ्ग जनोऽदस्त्यजत्यसौ दुःसहोऽयमङ्गजनोदः ।
शिरसा याचे दयिते कालोऽयमनुग्रहे दया चेदयि ते ॥ ८१ ॥

हे अङ्ग मृगाक्षि । अङ्ग इत्यामन्त्रणे । असौ जनो मल्लक्षणः जीवितं त्यजति । अत्र हेतुमाह—यतोऽयमङ्गजनोदः अङ्गजस्य कामस्य नोदो व्यथनं यतो दुःसहः दुःखेन सह्यते इति दुःसहः । हे दयिते प्रिये, अहं त्वां शिरसा प्रणम्य याचे प्रार्थये। हे अयि प्रिये, ते दया चेत् स्यात् तर्हि अयमेव कालः अनुग्रहे प्रसादे । अनङ्गशरक्षतचेतसां नः प्रसादे विलम्बो न युक्त इत्यर्थः ॥

इत्थं सामारचितं शृण्वत्यपि शुद्धमानसा मारचितम् ।
कृष्णा कीचकमेतं रावणमिव नैव जानकी चकमे तम् ॥ ८२ ॥

इत्थमनेन प्रकारेण मारचितं मारेण कामेन चितमुद्रिक्तं तेन कीचकेन आरचितं कृतं साम सान्त्वं शृण्वत्यपि कृष्णा द्रौपदी एतं कीचकं सेनापतिं न चकमे । का इव कम् । जानकी रावणमिव । यथा जानकी रावणं न चकमे, तद्वत्सापि तं कीचकं न चकमे इत्यर्थः ॥

अकृत च रामा सान्त्वं कीचक योग्योऽसि ननु गिरामासां त्वम् ।
कः सुदृशं कामयते परकीयां पण्डितोऽत्र शङ्कामयते ॥ ८३ ॥

रामा द्रौपदी तस्मान्नीचात्कथमपि सुमोक्षणाय सान्त्वं साम तस्य अकृत च अकरोच्च। किमित्याह—हे कीचक, ननु निश्चये त्वमासां गिरां मद्विषये उक्तानां योग्योऽसि। परंतु कः पण्डितः कार्याकार्यविचारज्ञः परकीयां सुदृशं परस्त्रीं कामयते । न कोऽपि । अत्र च एतादृशेऽकार्ये पण्डितः शङ्कामयते गच्छति ॥

पुनरपि द्रौपदी कीचकं वदति—

स्माक्षीर्मा कलये मां सुनिकृष्टां मम च जातिमाकलयेमाम् ।
यास्यसि शङ्के शकृति त्वं कृमितां कामुको भृशं केशकृति ॥ ८४ ॥

हे कीचक, त्वं कलये कलहाय क्वापि स्थितैर्मद्भर्तृभिः गन्धर्वैः सह कलहाय युद्धाय

मां मा स्प्राक्षीः। मत्स्पर्शं मा कुर्वित्यर्थः। च पुनः—मम जातिं च इमां दासीत्वानुमितां सुनिकृष्टां सुष्ठु निकृष्टामधमां तामाकलय जानीहि। अहं तु शङ्के—केशकृति केशान् करोति प्रसाधयतीति केशकृत् केशप्रसाधिनी तस्यां मयि दास्यां भृशं कामुकः कमिता त्वं शकृति विष्ठायां कृमितां यास्यसि। एकस्मिन् पक्षे परस्त्रीस्पर्शने विष्ठायां कृमितां नरकं यास्यसि। अन्यस्मिंश्च तत्रासन्नपक्षे मद्भर्तृभिः सह युद्धेन तैर्मारितस्त्वं विष्ठायां कृमिवत् लोठिष्यसीत्यर्थः। अत्र केशकृति इत्यत्र कृञ्धातुः प्रसाधनार्थः। धातूनामनेकार्थत्वात्॥

द्रौपदी चेदानीं स्वभर्तृभ्य उदितं त्रासं कीचकाय दर्शयति—

पञ्च च मा रमयन्ते गन्धर्वाः सततं च मारमयन्ते।
अविवेकी च करोषि त्वं तेषां हृदयमङ्ग कीचक रोषि॥ ८५॥

अङ्ग कीचक, पञ्च च गन्धर्वा देवयोनयः मा मां रमयन्ते। गन्धर्वा इत्यनेन मर्त्यैरजेया इत्यर्थः। पञ्च गन्धर्वाः सततं प्रत्येकं मद्रमणस्पर्धया मारं कलहमयन्ते कलहं कुर्वन्ति। हे कीचक, त्वं च अविवेकी तेभ्यो गन्धर्वेभ्यस्त्रासासरणाद्विवेकरहितः तेषां गन्धर्वाणां हृदयं मनो रोषि एतदकार्यकरणाद्रोषयुक्तं करोषि॥

द्रौपदी पुनरपि कीचकं त्रासयति—

तैर्घटिता पञ्चत्वं यास्यसि हित्वा बलं प्रतापं च त्वम्।
कः क्षतरिपुमानेषु क्रुद्धेषु सुखं व्रजेदरिपुमानेषु॥ ८६॥

भोः कीचक, तैर्गन्धर्वैः मद्भर्तृभिः घटिता संघटयिष्यन्। तृजन्तस्य रूपम्। त्वं च बलं प्रतापमरिभयजननीं वार्तां च हित्वा पञ्चत्वं कालधर्मं यास्यसि क्षतरिपुमानेषु क्षतः रिपूणां शत्रूणां मानो गर्वो यैस्ते तादृशेषु एषु गन्धर्वेषु मद्भर्तृषु क्रुद्धेषु सत्सु कः अरिपुमान् अरिश्च पुमांश्च अरिपुमान् शत्रुपुरुषः सुखं व्रजेत्। न कोऽपीत्यर्थः॥

इत्थं सा माद्यन्तं कृष्णा कीचकमुदीर्य सामाद्यन्तम्।
जीवनहानसमापत्पतिता निशि मारुतेर्महानसमापत्॥ ८७॥

इत्थं पूर्वोक्तप्रकारेण कृष्णा द्रौपदी माद्यन्तं समदं कीचकमाद्यन्तम् आदित आरभ्य अन्तावधि साम सान्त्वमुदीर्य तथापि जीवनहानसमापत्पतिता जीवनस्य हानं मरणं तत्समा यापत् तादृशोन्मदनीचहस्तपतनात् तत्र पतिता सा निशि रात्रौ मारुतेर्भीमस्य महानसं रसवतीस्थानं तदाश्रितमाप प्रापत्॥

बुद्ध्या सामयया च द्विषतो निधनं प्रयुज्य साम यया च।
स च भूमावधमस्य प्रतिजज्ञे सपदि समहिमा वधमस्य॥ ८८॥

सा द्रौपदी सामया सह आमयेन नीचात्कीचकाद्भयेन वर्तते या सा सामया तया बुद्ध्या तस्य भीमस्य साम सान्त्वं तदुत्थभीमोक्तिपूर्वं प्रयुज्य प्रकर्षेणोक्त्वा तं भीमं द्विषतः अध-

मत्स्य नीचस्य कीचकस्य वधमयाचत प्रार्थयामास । स च भीमो भूमावुर्व्यामधमस्य केनापि धमयितुं शमयितुमशक्यस्य अस्य कीचकस्य वधं सपदि तत्क्षणं प्रतिजज्ञे प्रतिज्ञातवान् । स भीमः कीदृशः । समहिमा महत्त्वयुक्तः ॥

भीमो द्रौपदीं सान्त्वयन्नाह—

स्थिरचित्तो हन्तास्मि त्यज शोकं शत्रुमविदितो हन्तास्मि ।
विहितसभासंकेतं विषहेरन्मामृते सभासं के तम् ॥ ८९ ॥

हे द्रौपदि, हन्त हर्षे, अहं स्थिरचित्तः अव्याकुलचेताः अस्मि । त्वमेतत्त्रासोत्थं शोकं त्यज । अहं च अविदितः केनाप्यज्ञातः शत्रुं कीचकं हन्तास्मि हनिष्यामि । विहितः सभायां यत्रैकत्र युधिष्ठिराद्यास्त्वं चासन् सा सभा तस्यां यः संकेतः कदाचिदुत्थितोन्मदशत्रुध्वंसरूपा प्रतिज्ञा येन स तादृशं मामृते मां विना के अन्ये तं कीचकं विषहेरन् । न केऽपीत्यर्थः । तं कीचकं कीदृशम् । सभासं सह भासा वर्तते यः स तादृशम् ॥

इत्थं भीमोक्तारं कृष्णा मत्वा तमेव भीमोक्तारम् ।
कीचकमसहायासा गत्वा प्रोवाच वचनमसहाया सा ॥ ९० ॥

इत्थं पूर्वोक्तप्रकारेण भीमोक्ता भीमेन उक्ता कृष्णा द्रौपदी तमेव भीममरमत्यर्थं भीमोक्तारं भियो भयस्य मोक्ता मोचयिता तम् । तृजन्तस्य रूपम् । तं तादृशं मत्वा असहायासा असहः असह्यः आयासः क्लेशो यया सा तादृशी असहाया सहायविनाकृता च गत्वा कीचकं वचनं प्रोवाच ॥

अयि नलिनायतनेत्र क्षणदायामेहि नर्तनायतनेऽत्र ।
अपि च यतस्व छन्नः सुखाय रक्ष्यं यशो यतः स्वच्छं नः ॥ ९१ ॥

अयि इष्टामन्त्रणे हे नलिनायतनेत्र, हे कीचक, क्षणदायां रात्रौ अत्रास्मिन्नर्तनायतने नाट्यगृहे एहि । त्वं छन्नः गुप्तोऽपि सन् सुखाय मत्संयोगावाप्यसुखाय यतस्व सयत्नो भव । छन्न इत्यत्र हेतुमाह—यतो यस्मात्कारणात् नः अस्मादृशां यशो रक्ष्यम् । बाह्यव्यवहारायेत्यर्थः । यशः कीदृशम् । स्वच्छं वहिः स्वच्छम् ॥

इत्थं रागतमोदैर्नुन्नः कृष्णावचोभिरागतमोदैः ।
आत्मवधायापायं निशि नर्तनगेहमनवधायापायम् ॥ ९२ ॥

इत्थमनेन प्रकारेण रागतमोदैः रागः तदभिलाष एव तमः अन्धकारः रागेण अन्धत्वप्रदैः तथा आगतो मोदो येभ्यस्तानि तादृशैश्च कृष्णाया द्रौपद्या वचोभिर्नुन्नः प्रेरितः अयं कीचकः निशि रात्रौ आत्मवधाय आत्मनो नाशायैव नर्तनगेहं नाट्यगेहमाप । किं कृत्वा । अपायं नाशमनवधाय अज्ञात्वा ॥

एषा सा कमनीति स्मयमानो मन्मथेन साकमनीतिः।
परिरम्भारम्भीमं पस्पर्श ततः सरोषभारं भीमम्॥ ९३॥

ततोऽनन्तरं सा सैरन्ध्री एषा कमनी कान्तास्तीति हेतुना स्मयमानः हृष्यमाणः मन्मथेन कामेन साकं स्थितश्च सकामः अनीतिः नीतिरहितः परिरम्भारम्भी द्रौपद्या आश्लेषारम्भणकामः इमं भीमं तद्वेषधारिणं सैवेयमिति भ्रान्त्या पस्पर्श। भीमं कीदृशम्। सरोषभारं सह रोषभारेण वर्तते यः स तादृशम्॥

परिरम्भरतमसारं भीमो रोषेण रागभरतमसारम्।
व्यालोलं घनया तं बिभेद मुष्ट्या विवेकलङ्घनयातम्॥ ९४॥

भीमो भीमसेनः अरमत्यर्थं रागभरतमसा विषयेष्वासक्तिः रागस्तस्य भरः स एव तमोऽन्धकारः तेन हेतुना परिरम्भरतमाश्लेषरतमसारं साररहितं च कीचकं व्यालोलं विशेषेण चपलं च घनया दृढया मुष्ट्या बिभेद अभिनत्। तं कीदृशम्। विवेकलङ्घनयातं विवेकस्य लङ्घनं तादृशाकार्यकरणेन तस्मै यातं गतं विवेकलङ्घनयातं गतिपर्यायं यस्य स तादृशं वा॥

मदनमृदुः सहसादः किमित्युदस्थात्स चापि दुःसहसादः।
अकरोदुपलसमानां गन्धर्वधिया च मुष्टिमुपलसमानाम्॥ ९५॥

स कीचकः सहसा तत्क्षणं मदनेन मृदुरार्द्रचित्तः सन् अद एतत् किमिति जातमिति आश्चर्येण दुःसहः सादः खेदो यस्य स तादृशः सन् उदस्थात् उद्गतः। उपलसमानां जृम्भमाणां तथा उपलसमानामुपलः पाषाणः तत्समानाम् घनदृढतया मुष्टिं गन्धर्वधिया गन्धर्वेषु बुद्ध्या अकरोत्। मुष्ट्या तं भीमं जघानेत्यर्थः॥

बलजितदेवचमूकौ बाहुभ्यामेत्य युगपदेव च मूकौ।
रुधिरैः सद्यो धौतौ युयुधाते तत्र तमसि सद्योधौ तौ॥ ९६॥

बलेन जिता देवचमूर्याभ्यां तौ बलजितदेवचमूकौ, तथा च मूकौ अवचसौ, तथा रुधिरैः रक्तैः सद्यः तत्क्षणमेव परस्पराघातेन धौतौ क्षालितौ तौ सद्योधौ सन्तौ शोभनौ योधौ वीरौ युगपदेव तत्र तमसि चौर्यरतोचिते बाहुभ्यां युयुधाते बाहुयुद्धं चक्रतुः॥

स हि पृथुकलितमसं तं कीचकमनङ्गकलितमसन्तम्।
प्रममाथारघुनाथ स्वबलेन दशाननं यथा रघुनाथः॥ ९७॥

हि निश्चये। स भीमः असन्तं दुष्टं पृथुकलितमसं पृथुर्महान् कलिः कलह एव तमोऽन्धकारं यस्य स तादृशम्, तथा अनङ्गकलितम् अनङ्गेन कामेन कलितमुन्मदम्। अथानन्तरम् अरघुना अलघुना महता। रलयोरैक्यात्। स्वबलेन तं कीचकं प्रममाथ प्रह-

तवान् ।`क्तो यथा । रघुनाथो यथा । यथा स्वबलेन रघुनाथो रावणं प्रममाथ तथेत्यर्थः । यथा इवार्थे ॥

पिण्डं परमांसस्य प्रेयस्यै संप्रदर्श्य परमांसः स्यः ।
पुनरपि सदनायासौ भुजौ दधानो जगाम सदनायासौ ॥ ९८ ॥

परमांसस्य इत्यत्र 'परमांसः स्यः' इति पदच्छेदः । 'न विशेषो विसर्गस्य भवेच सदसत्त्वयोः' इति विसर्गाभावेऽप्यदोषः । स्य इति त्यच्छब्दस्य सर्वनाम्नः प्रथमान्तस्य रूपम् । परमांसः परमौ उत्कृष्टौ मांसलावंसौ स्कन्धौ यस्य स परमांसः स्यः भीमः स भीमसेनः प्रेयस्यै प्रियतमायै द्रौपद्यै परमांसस्य परस्य कीचकस्य यन्मांसं तस्य पिण्डं पाणिपादशिरोग्रीवं संपिष्यैकीकृतं पिण्डमिव संप्रदर्श्य पुनरपि सन्तौ शोभनौ अनायासौ भुजौ दधानः सन् सदनाय महानसस्थानाय पुनरपि जगाम ॥

तदनु महासारा सा तत्कर्म जगाद परमहासारासा ।
भयमलसोदर्येभ्यः कलयन्ती कीचकस्य सोदर्येभ्यः ॥ ९९ ॥

सा अलसोदरी अलसमतितनु उदरं यस्याः सा कृशोदरी द्रौपदी तदनु तदनन्तरं महासारा अतिश्रेष्ठा, तथा—परमहासारासा परमोऽतिशयितो हासस्य आरासः शब्दो यस्याः सा भयं गन्धर्वेभ्यः जातं कलयन्ती ख्यापयन्ती कीचकस्य सोदर्येभ्यो भ्रातृभ्यः । बहुवचनं शतत्वात्तेषाम् । तत्कर्म पूर्वोक्तं जगाद कथितवती ॥

सततं यो मा मेति प्रत्याख्यातोऽपि निर्भयो मामेति ।
पश्यत मयि कामस्य व्युष्टिं दुष्टस्य मरणमयि कामस्य ॥ १०० ॥
इति कपिशालातलतः प्रोक्तः प्रययौ[1] विशालशालातलतः ।
जितनानामनुजानां तस्य समूहस्तरस्विनामनुजानाम् ॥ १०१ ॥
(युग्मम्)

इत्यनेन प्रकारेण विशालशालातलतः विशाला विस्तीर्णा या शाला महानसशाला तस्यास्तलं तस्मात् । गन्धर्ववेषधारिणा भीमेनेति शेषः । भीमेन उक्तः प्रोक्तः तस्य कीचकस्य अनुजानां भ्रातृणां समूहः पञ्चशतसंख्यः प्रययौ । तं प्रतीति शेषः । कीदृशः । कपिशालातलतः कपिशाः कपिशवर्णाः अलातलता दीप्तोल्मुकलता यस्य स तादृक् । अनुजानां कीदृशानाम् । तरस्विनां बलिनाम् । पुनः कीदृशानाम् । जितनानामनुजानां जिता नानाविधा मनुजा यैस्ते तादृशानाम् । इति किमित्याह—मा मा इति माशब्दो निषेधे । मा मा अनुयाहि मां मा अनुयाहि इति मया सततं प्रत्याख्यातोऽपि निषिद्धोऽपि यो मूढो निर्भयो मामेति मामनुयाति । अयि जना यूयं मयि विषये कामस्य अभिलाषस्य युद्धरूपस्य कां व्युष्टिं कां फलसमृद्धिं मरणमस्य दुष्टस्य पुरुषस्य पश्यत ।

---

१. 'प्राप्तो' मूल०.

यो मामनुयाति युद्धाय तस्य मरणमेव फलमित्यर्थः। 'व्युष्टिः फले समृद्धौ च' इत्यनेकार्थेषु ॥

प्राणसमानमुदस्तं भ्रातरमवलोक्य मुक्तमानमुदस्तम्।
सूता रुरुदुः खचिता भिया चितायां च निदधुरुरुदुःखचिताः १०२

सूताः सूतपुत्राः कीचकाः तस्य कीचकस्य भ्रातरः मुक्तमानमुदः मुक्तो मानो गर्वो मुत् हर्षश्च यैस्ते तादृशाः तं भ्रातरं कीचकं प्राणसमानमसुसमम् उदस्तं हत्वा क्षिप्तम् अवलोक्य भिया भयेन खचिता व्याप्ता रुरुदुः अस्रु मुमुचुः। तथा—उरुदुःखचिताः उरुणा महता दुःखेन चिता भृताश्च सन्तः तं कीचकं चितायां निदधुः। दाहायेत्यर्थः॥

तस्यां तदनुचितायां निदधुर्द्रुपदात्मजां तदनु चितायाम्।
सा तैर्नीता बन्धं रुरोद यस्या मनो न नीतावन्धम्॥ १०३॥

तदनु तदनन्तरं ते कीचकानुजास्तदनुचितायां तस्या अनुचिता तस्यां चितायां द्रुपदात्मजां द्रौपदीं निदधुः। भीममारितेन निजभ्रात्रा सह दाहायेत्यर्थः। सा च द्रौपदी तैः कीचकानुजैः दाहाय वन्धं नीता रुरोद चक्रन्द। सा का इत्याह—यस्या द्रौपद्या मनो हृदयं नीतौ नीतिविषये न अन्धं तमोयुक्तम्। नीतौ सालोकमेव मनो यस्या इत्यर्थः॥

प्राणसमारोदं स श्रुत्वोत्थाय श्मशानमारोदंसः।
तमसि च कालाभोऽगं बभञ्ज भीमो बलेन कालाभोगम्॥ १०४॥

स भीमः प्राणसमाया द्रौपद्या रोदमाक्रन्दं श्रुत्वा उत्थाय श्मशानं पितृवनमार ययौ। कीदृशः। उदंसः उन्नतावंसौ यस्य सः। स च भीमः तमसि च अन्धकारे च कालाभोगं कालो मेचकः आभोगो विस्तारो यस्य स तादृशमगं वृक्षं बलेन बभञ्ज अभनक्। तद्वधायेति शेषः। कीदृशः। कालाभः यमाभः॥

सपदि समानीतेन द्रुमेण भीमोऽकरोत्स मानी तेन।
विहितयमाननयानां विततिं द्विषतां विहीयमाननयानाम्॥१०५॥

स भीमो मानी मानवान् समानीतेन द्रुमेण तेन द्विषतां कीचकानां विततिं पङ्क्तिं विहितयमाननयानां विहितं कृतं यमानने यमगुखे यानं गतिर्यया सा ताम्। यममुखगतामित्यर्थः। अकरोत्। कीदृशानां कीचकानाम्। विहीयमाननयानाम् विहीयमानः त्याज्यमानो नयो यैस्ते तेषाम्॥

कीचकशतमस्तदयं भीमः संहृत्य कर्कशतमस्तदयम्।
स त्वरणे नागारेरधिकः सुप्तोऽभवत्क्षणेनागारे॥ १०६॥

सोऽयं भीमः कर्कशतमः अतिकठोरचित्तः सन् अस्तदयम् अस्ता दूरीकृता दया यस्मिन् कर्मणि तथा कृत्वा कीचकानां तच्छतं संहृत्य त्वरणे त्वराविषये नागारेर्गरुडात् अधिकः क्षणेन अगारे रसवतीस्थाने सुप्तोऽभवत् सुष्वाप॥

मदनवशं सा चारं निपात्य मुदिता रिपुं नृशंसाचारम् ।
द्रुपदसुता सन्नाभिः प्राप वधूभिः समर्चितासन्नाभिः ॥ १०७ ॥

सा च द्रौपदी अरमत्यर्थं मदनवशं कामवशं नृशंसाचारं क्रूराचारं रिपुं निपात्य मुदिता संतुष्टा । तथा—सन्नाभिः सती शोभना निम्ना नाभिर्यस्याः सा । तथा—आसन्नाभिः निकटवासिनीभिः वधूभिः समर्चिता । गन्धर्वपरिग्रहत्वात्तस्याः । ईदृशी सती गेहं प्राप । गेहमित्यध्याहारः । 'नृशंसो घातुकः क्रूरः' इत्यमरः ॥

प्राणसमानानिह तान्भ्रातॄन्देवी प्रबुध्यमाना निहतान् ।
अभवदुदासीनमना गन्धर्वभयेन दत्तदासीनमना ॥ १०८ ॥

निहतान् तान् प्राणसमानान् भ्रातॄन् प्रबुध्यमाना बोधितापि बान्धवैः, उदासीनमनाः उद्विग्नचेताः सती देवी विराटपत्नी सुदेष्णाख्या गन्धर्वभयेन गन्धर्वाणां भयेन दत्तदासीनमना दत्तं दास्यै सैरन्ध्रीरूपधारिण्यै द्रौपद्यै नमनं यया सा तादृश्यभवत् ॥

इति ते परतापरता न्यवसन्द्रुपदात्मजयात्मजयादृतया ।
वसतौ न हि तानहिता विविदुर्नृपतावबधावबधानवति ॥ १०९ ॥

इत्यनेन प्रकारेण आत्मजयादृतया आत्मनो जये आदृतया द्रुपदात्मजया द्रौपद्या सह ते युधिष्ठिराद्या विराटनगरे परतापरताः परेषां शत्रूणां तापे रताः न्यवसन् ऊषुः । तथा—नृपतौ राज्ञि युधिष्ठिरे अवधौ वर्षमेकं च सुगोपनावधौ अवधानवति सावधाने स्थिते सति हि निश्चये तान् पार्थान् अहिताः शत्रवो दुर्योधनाद्या न विविदुर्नाज्ञासिषुरिति भद्रम् ॥

इति श्रीमहाकविवासुदेवविरचिते युधिष्ठिरविजये महाकाव्ये कश्मीरदेशवास्तव्यविद्वद्वरराजानकशंकरकण्ठात्मजराजानकरत्नकण्ठविरचितायां शिष्यहिताभिधानायां टीकायां पार्थतीर्थयात्रामहेन्द्रविन्ध्यहिमवद्दर्शनगन्धनमादनपर्वतप्रवेशद्रौपदीदिव्यप्रसूनलाभहनुमद्भीमसमागमपुष्पाहरणार्जुनमिलनयामुनाख्यपर्वतयानाजगरकृतभीमग्रहणभीममोचनद्वैतवनप्राप्तिघोषयात्रावर्णनगन्धर्वकृतदुर्योधनबन्धहरणार्जुनकृतदुर्योधनमोचनदुर्योधननिर्वेददानवकृतस्वप्रान्तरतत्सान्त्वनहस्तिनापुरागमनपौण्डरीकयज्ञकरणपार्थकाम्यकवनप्राप्तिजयद्रथकृतद्रौपदीप्रमाथभीमकृतजयद्रथबन्धनपुनस्तन्मोचनद्वादशवर्षावधिसमयातिवाहधर्मप्रीतिमृगरूपधर्मकृतब्राह्मणारणिहरणभीमादिचतुष्टयपातनयक्षरूपधर्मसंवादभीमादिसंजीवनब्राह्मणारणिदानविराटनगरयानपार्थकृतब्राह्मणपौरोगवादिरूपधारणकीचकवधो नाम पञ्चम आश्वासः ॥

---

षष्ठ आश्वासः ।

तोषिततरसचक्रं निहतनृशंसातिसचक्रम् ।
यस्मादाप रमेशः पायान्नः सर्वदा परमेशः ॥

अथ कीचकवधानन्तरं वृत्तं वर्णयति—

अथ कुरुराष्ट्रादिष्टा गताश्चरा जगति धार्तराष्ट्रादिष्टाः ।
पार्थान्परमतिरोगानाययुरनवेक्ष्य दत्तपरमतिरोगान् ॥ १ ॥

अथानन्तरं धार्तराष्ट्रेण दुर्योधनेन आदिष्टा इष्टाः प्रियाः कुरुराष्ट्रात् कुरूणां कौरवानां राष्ट्रं तस्मात् गताः । पाण्डवान् मार्गयितुमित्यर्थः । चराः स्पशाः परमतिरोगान् परममत्यर्थं तिरोऽन्तर्धानं गच्छन्तीति तादृशास्तान् । अत्यन्तर्हितानित्यर्थः । ईदृशान् पार्थान् युधिष्ठिरादीनवेक्ष्य अलब्ध्वा आययुरागतवन्तः । 'तिरोऽन्तर्धा तिर्यगर्थः' इत्यमरः । कीदृशान्पार्थान् । दत्तपरमतिरोगान् दत्तः परेषां शत्रूणां मतौ बुद्धौ रोगश्चिन्तारूपो यैस्ते तादृशान् ॥

ते तरसा कल्याय प्रणम्य राज्ञे समन्त्रिसाकल्याय ।
नष्टान्कक्षे पञ्च प्रोचुः पार्थांश्च कीचकक्षेपं च ॥ २ ॥

ते चराः समन्त्रिसाकल्याय सहमन्त्रिणां कर्णशकुन्यादीनां साकल्यं पूर्णता तेन सह वर्तते यः स तादृशाय कल्याय स्वस्थाय राज्ञे दुर्योधनाय पञ्च पार्थान् युधिष्ठिरादीन् कक्षे तात्स्थ्यात् लक्षणया सकक्षे गहने नष्टान् अन्तर्हितान् प्रोचुः । कीचकक्षेपं कीचकस्य विराटश्यालस्य क्षेपं नाशं प्रोचुः ॥

गां विशदाचाराणां श्रुत्वा दुर्योधनस्तदा चाराणाम् ।
भीष्माचार्यादीनां मध्ये गिरमभ्यधाद्विचार्यादीनाम् ॥ ३ ॥

दुर्योधनो नृपस्तदा तस्मिन् समये विशदाचाराणां स्वच्छशीलानां चाराणां स्पशानां गां वाचं श्रुत्वा भीष्माचार्यादीनां शंतनुजद्रोणाचार्यादीनां मध्ये विचार्यादीनामुदारां गिरमभ्यधात् जगाद ॥

भीममृते नाशं के कुर्युर्भुवि कीचकस्य तेनाशङ्के ।
कौन्तेयान्वासवतः पुरे विराटस्य दुर्जयान्वासवतः ॥ ४ ॥
तस्मात्तावद्यातस्त्रैगन्तो(र्तो) दिवसपरिणतावद्यातः ।
सततं वै भवदागा हरतु विराटस्य पुष्टिवैभवदा गाः ॥ ५ ॥
सानीका यानपरे मात्स्ये योद्धुं गवान्तिकायानपरे ।
अ[१]द्युदितारुणधामस्फुरिते वयमपि समागता रुणधाम ॥ ६ ॥
पार्था गोत्राणां ते व्यत्यासं बिभ्रतोऽपि गोत्राणान्ते ।
ध्रुवमस्मानेष्यन्ति स्वात्मानं च प्रकाशमानेष्यन्ति ॥ ७ ॥

---

१. 'अन्द्यु' मूल०.

इति युद्धामोद्युक्तः प्राप्य सुशर्मा विराटधामोद्युक्तः ।
कृतगुरुसंघोपेभ्यः कुलं गवामहृत सरभसं घोषेभ्यः ॥ ८ ॥

(पञ्चभिः कुलकम्)

इत्यनेन प्रकारेण दुर्योधनेन राज्ञा उक्तो युद्धामोदी युद्धे युद्धविषये आमोदो हर्षो विद्यतेऽस्य युद्धामोदी उद्युक्तः उद्योगवान् विराटधाम विराटस्थानं प्राप्य सुशर्मा त्रैगन्तो-(र्तो) राजा घोषेभ्य आभीरपल्लीभ्यः ग्रामेभ्यश्च गवां कुलं सरभसं सावेगं जहार । घोषेभ्यः कीदृशेभ्यः । कृतगुरुसंघोषेभ्यः कृतः गुरुः संघोषः शब्दः तन्निवासिभिर्येषु ते तादृशेभ्यः तेभ्यः । इति किमित्याह—भीममृते इति । भो भीष्माद्याः सभासदाः भीमं भीमसेनमृते नाशं वधं कीचकस्य विराटश्यालस्य अर्थात्सपरिवारस्य के कुर्युः । न केऽपीत्यर्थः । तेन हेतुना अहं कौन्तेयान् कुन्तीसुतान् युधिष्ठिरादीन् विराटस्य पुरे वासवतः वसनं वासः तद्वतस्तत्रोषितान् आशङ्के जानामि । कीदृशान् । वासवादिन्द्रादपि दुर्जयान् अजेयान् ॥ तस्मादिति । तस्माद्धेतोस्तावत्प्रथमम् अद्य दिवसपरिणतौ संध्यासमये त्रैगर्तराजा सुशर्मा अतोऽस्माज्जनात् अस्मल्लक्षणात् सततं सदा वै निश्चये भवदागाः भवत् वर्तमानमागोऽपराधः कदाप्यस्मदीयकार्यकरणाद्विराटस्य राज्ञः पार्थरक्षणस्य गाः सुरभीः हरन्तु । किंभूताः । पुष्टिवैभवदाः पुष्टिः शरीरपुष्टिः वैभवमैश्वर्यं च ददाति तादृश्यस्ताः । 'न गोसमानं धनमस्ति किंचित्' इत्युक्तेः ॥ सानीका इति । ततश्च युद्धयानपरे युद्धाय यात्रापरे मात्स्ये मात्स्यनृपे विराटे सानीकाः सकटकाः अपरे वयमपि अह्युदितारुणधामस्फुरिते अद्रेः उदयपर्वतादुदितमह्युदितं च तत् अरुणस्य सूर्यस्य तत्सूतस्य वा धाम तस्य स्फुरितं तत्र । प्रभातसमये इत्यर्थः । समागतास्तत्र मिलिताः गवां निकायान् व्रजान् रुणधाम रुन्धेम ॥ पार्था इति । ते पार्था युधिष्ठिराद्या गोत्राणां नाम्नां व्यत्यासं विपर्ययं स्वसंगोपनाय अन्यनामानि कङ्कपौलावादीनि विभ्रतोऽपि धारयन्तोऽपि गोत्राणान्ते गवां यत्राणं रक्षणं तस्य अन्ते तदर्थं ध्रुवं निश्चये अस्मानेष्यन्ति । गोरक्षणार्थमस्माभिः सह योद्धुमागमिष्यन्त्यवश्यमित्यर्थः । तथा आत्मानं च प्रकाशमानेष्यन्ति प्रकटयिष्यन्ति ॥

वहुलासूदस्तासु क्षितिपालः साश्वपशुपसूदस्तासु ।
अनुगतवायसकङ्कः समं वलैरचलदाहवाय सकङ्कः ॥ ९ ॥

तासु वहुलासु गोषु उदस्तासु नीतासु सतीषु । 'वहुलाः कृत्तिका गावः' इत्यनेकार्थेष्वमरः । साश्वपशुपसूदः अश्वपः अश्ववैद्यवेषधारी नकुलः, पशुपः गोवैद्यवेषधारी सहदेवः, सूदः सूपकारवेषधारी भीमश्च, तैः सह विद्यते यः स तादृशः, तथा—सकङ्कः सह कङ्केन कङ्कनाम्ना ब्राह्मणेन युधिष्ठिरेण वर्तते यः स तादृक् क्षितिपालः विराटः वलैः स्वसैन्यैः सममाहवाय युद्धाय अचलत् । गवां मोचनायेति शेषः । पुनः कीदृशः । अनुगता वायसाः कङ्काश्च पक्षिविशेषाः । समरलभ्यामिषलोभेनेति यावत् ॥

अथ शरमत्स्ये शवले मणिप्रभाभिस्त्रिगर्तमत्स्येशवले।
प्रलयपयोधिसमेते मिलिते तिमिभीमचापयोधिसमेते ॥ १० ॥

अथानन्तरं ते द्वे त्रिगर्तमत्स्येशवले त्रिगर्ता जनपदाः मत्स्याश्च तेषामीशौ स्वामिनौ सुशर्मविराटौ तयोर्वले कटके प्रलयपयोधिसमेते कल्पान्तसमुद्रतुल्ये मिलिते समीयतुः। कीदृशे ते द्वे वले। शरमत्स्ये शरा वाणा एव मत्स्या मीना ययोस्ते। समुद्रेऽपि मीनाः संभवन्ति। पुनः कीदृशे। मणिप्रभाभिः रत्नकान्तिभिः शवले चित्रे। समुद्रोऽपि मणिप्रभया शवलो भवति। पुनः कीदृशे। तिमिभीमचापयोधिसमेते तिमिवत् समुद्रजलचरविशेषवत् भीमा भयानका ये चापयोधिनः धनुर्धरास्तैः समेते युक्ते॥

तावद्दीप्रकराणां ज्वालानि दिवाकरस्य वै रक्तानि।
रुधिरनदीप्रकराणां रणजनितानामिवास्त्रवैरक्तानि ॥ ११ ॥

यावदेव ते द्वे कटके मिलिते, तावदेव वै निश्चये दिवाकरस्य सूर्यस्य दीप्रकराणां उद्दीप्रकिरणानां ज्वालानि निकुरम्बानि रणजनितानां रणे उत्पन्नानां रुधिरनदीप्रकराणां रक्तनदीसमूहानामस्रवैः स्रुतिभिः अर्थात् अभ्यक्तानीव रक्तानि लोहितानि। जातानीति शेषः। यावत्ते कटके द्वे मिलिते तावत्सूर्योऽप्यस्तपर्वतं गत इत्यर्थः॥

अस्तगिरावर्यमणि स्कन्दति दीपस्थया धुरा वर्यमणिः।
स्थित उत्कटकान्तेषु प्रोतो राज्ञां किरीटकटकान्तेषु ॥ १२ ॥

अस्तगिरौ अस्तपर्वते अर्यमणि सूर्ये स्कन्दति आक्रान्तिविधायिनि सति, वर्यमणिः उत्कृष्टो मणिः यो रात्रौ तमस्यपि दीपवत्तमोहतः सर्वत एव वर्यमणिः राज्ञां महीपालानां किरीटकटकान्तरे किरीटानि मुकुटानि च कटकाः हेमकङ्कणाश्च तेषामन्तेषु प्रोतः प्रकर्षेण सयत्नमुतः प्रोतः दीपस्थया धुरा प्रदीपस्थेन अग्र्यत्वेन स्थितः प्रदीपकार्यकारी आसीदित्यर्थः। कीदृशेषु किरीटकटकान्तेषु। उत्कटकान्तेषु उत्कटमतिशयेन कान्तास्तेषु॥

सत्स्वेव तमःस्वनयोर्महता रोषेण भैरवतमस्वनयोः।
उभयोरधिकं बलयोरजनि विमर्दो रजोभिरधिकम्बलयोः ॥ १३ ॥

तमःस्वन्धकारेषु सत्स्वेव महता रोषेण परस्परं भैरवतमस्वनयोः अतिभीषणशब्दयोरुभयोः सुशर्मविराटवलयोः अधिकमतीव विमर्दः परस्परसंघट्टनेन संमर्दोऽभूत्। कीदृशयोः। रजोभिश्चमूत्थधूलिभिः अधिकम्बलयोः अधिकं वलम् ऊर्णावस्त्रं ययोस्ते तादृशयोः। घनेन पांसुना धृतकम्बलयोरिवेत्यर्थः॥

अथ रिपुसंसद्धा स त्रैगर्त उपेत्य सरभसं सद्धासः।
मात्स्यमनात्सीदन्तं मानी न निनाय नियमनात्सीदन्तम् ॥ १४ ॥

अथानन्तरं स त्रैगर्तस्त्रिगर्ताधिपः सुशर्मा सद्धासः सन् शोभनः स्वच्छः हासो यस्य स तादृक् । तथा रिपुसंसद्धा रिपूणां शत्रूणां संसदं सभां हन्तीति रिपुसंसद्धा सरभसं साहसमुपेत्य मात्स्यं मत्स्याधिपं विराटमनात्सीत् बबन्ध । 'णह बन्धने' धातुः । परंतु तं मात्स्यं विराटमन्तं न निनाय नाहनत्(?) । यतो मानी सगर्वः किमेतेन वराकेन मारितेनेति मत्वेत्यर्थः । कीदृशं मात्स्यं विराटम् । नियमनान् बन्धनात्सीदन्तं सकष्टम् । जीवन्तमेव बद्ध्वा अहरदित्यर्थः ॥

विराटे नृपे बद्ध्वा नीते तत्सैन्यस्य वृत्तं वर्णयन्नाह—

नितरां निशितान्तेन क्षतवपुषा शरशतेन निशि तान्तेन ।
योद्धुं संनेहे न स्वामिनि बद्धे बलेन सन्नेहेन ॥ १५ ॥

स्वामिनि विराटे बद्धे सति नितरामत्यर्थं निशि रात्रौ तान्तेन खिन्नेन युद्धकरणात् निशितान्तेन तीक्ष्णान्तेन शरशतेन बाणशतेन क्षतवपुषा सव्रणकलेवरेण बलेन विराटकटकेन योद्धुं पुनः न संनेहे । कवचादि बद्ध्वा न सज्जीभूतम् । पुनः कीदृशेन । सन्नेहेन सन्ना नितरां शान्ता ईहा चेष्टा यस्य स तादृशेन ॥

तं तरसानुससार स्मयमानो वायुजोऽद्रिसानुससारः ।
बद्ध्वा विद्विषमस्य क्षितिपं ररक्ष मोक्षविद्विषमस्य ॥ १६ ॥

तच्छ्रुत्वेति शेषः । वायुजो भीमः स्मयमानः ईषद्धसमानः तरसा वेगेन तं क्षितिपं विराटमनुससार अनुजगाम । मोचयितुमित्यर्थः । कीदृशः । अद्रिसानुससारः अद्रिसानुवत्पर्वतशिखरवत् ससारः सस्थैर्यः । स च वायुजो भीमः अस्य विराटनृपस्य विद्विषं शत्रुं सुशर्माणं बद्ध्वा । आनीयेति शेषः । क्षितिपं विराटं ररक्ष । तद्धस्तादमोचयत्यर्थः । कीदृशः । विषमस्य संकटस्य मोक्षवित् मोक्षं वेत्तीति तादृक् ॥

स्वामित्राणान्मुदिताः स्वामित्राणां भयाच्च पाण्डोस्तनयाः ।
अवसन्नत्रैगर्ता अवसन्नत्रैव रात्रिमशिष्टां ते ॥ १७ ॥

अवसन्नत्रैगर्ताः अवसन्नाः खेदिताः । बद्ध्वा बलेनानयनात् । (त्रैगर्ता योधा यैस्ते) । तथा स्वामिनः तत्कालावधिपालनात् स्वामिनो विराटस्य त्राणात् भीमेन विहितात् मुदितास्तुष्टाः सन्तः ते युधिष्ठिराद्याः स्वामित्राणां निजशत्रूणां दुर्योधनादीनां भयात् यथा नावशिष्टकतिपयदिनावधि प्रकटाः स्यामेति भवेत् अशिष्टामशेषां सकलामेव रात्रिं तत्रैव अवसन् ऊषुः ॥

तरसैव सुशर्माणं मुमोच मात्स्यः सराज्यवसुशर्माणम् ।
ते हि नरो धन्या ये जित्वारीन्व्याप्टता न रोधन्याये ॥ १८ ॥

---

१. 'नाहन्' इत्येव पाठो भवेत्. २. 'द्धसम्' इति भवेत्. ३. 'मवशिष्टां' मूल०.

मात्स्यः मत्स्यदेशनृपः विराटनृपः सुशर्माणं राजानं त्रैगर्तं तरसैव बलेनैव । अन्यैरसंमतोऽपीत्यर्थः । तं मुमोच । कीदृशम् । सराज्यवसुशर्माणं सह राज्येन वसुभिर्धनैः शर्मणा सुखेन च वर्तते यः स तादृशः । एतत्प्रस्तावेनान्यापदेशमाह—ये नरो मर्त्याः मनुष्यधर्माणः राजानः अरीन् शत्रून् जित्वा रोधन्याये तेषां शत्रूणां रोधन्याये कारागृहरक्षणं रोधः तद्भूम्यादिरोधनं वा तत्र न व्यापृता न लग्नास्ते नरः पुरुषाः धन्याः । धन्यजन्मान इत्यर्थः । नर इति नृशब्दस्य अजन्तस्य प्रथमाबहुवचनरूपम् । ये नृपाः शत्रून् जित्वा तदीयभूम्यादावलोलुपास्तानेव तत्र कलमशालिन्यायेन रोपयन्ति ते धन्या इत्यर्थः ॥

गोपजनानाव्रजतः प्रातर्विद्राव्य[1] नानाव्रजतः ।
चक्रुरभङ्गोग्राहंकाराः कुरवः सुदुर्लभं गोग्राहम् ॥ १९ ॥

प्रातः प्रभातसमये नानाव्रजतः नानागोव्रजेभ्यः आव्रजतः आगतान् गोपजनान् विद्राव्य विद्रुतान् कृत्वा अभङ्गोग्राहंकाराः अभङ्गः निर्नाशः उग्रः कठिनः अहंकारो गर्वो येषां ते तादृशाः कुरवः दुर्योधनपक्ष्याः गोग्राहं गवां ग्राहः रोधनं चक्रुः । कीदृशम् । सुदुर्लभं दुष्प्रापम् ॥

कुरुभिर्गोपालीषु क्षिप्तासु हृतासु चैव गोपालीषु ।
पुरमेवादुद्राव स्वयमध्यक्षो गवां जवादुद्रावः ॥ २० ॥

गोपालीषु गोपानामाल्यः पङ्क्तयः तासु क्षिप्तासु दूरीकृतासु, तथा गोपालीषु गवां सुरभीणां पाल्यः पङ्क्तयः तासु च हृतासु सतीषु स्वयं गवामध्यक्षः नियुक्तः तदधिकारी जवात् वेगेन उद्रावः उच्चैःरावः अब्रह्मण्यशब्दो यस्य स तादृशः पुरमेव विराटनगरमेव आदुद्राव आद्रवत् । गतः तन्निवेदयितुमित्यर्थः ॥

अजनि च शून्या तस्य त्रातुं राज्ञः पुरी पशून्यातस्य ।
नृपदायादायातस्तद्वृत्तमवेदयद्भयादायातः ॥ २१ ॥

तदा च पशून् गोसंघान् त्रातुं रक्षितुं यातस्य राज्ञः विराटनृपस्य तस्य पुरी नगरी शून्या निर्जना अजनि जाता । अतोऽस्मात्कारणात् भयात् कुरुभ्यो जातात् आयातो गवामध्यक्षः तद्वृत्तं गोग्रहवृत्तं नृपदायादाय नृपसुताय उत्तरनाम्ने अवेदयत् न्यवेदयत् । 'दायादौ सुतबान्धवौ' इत्यमरः ॥

गवामध्यक्षः किमिति नृपसुतं न्यवेदयदित्याह—

अपि सरभसमेतानि व्रातानि गवां महर्षभसमेतानि ।
अरिलोकात्यन्तेन स्वयमेव सुयोधनेन काल्यन्ते नः ॥ २२ ॥

---

१. 'विद्राव्य तदनु नाना' मूल०.

तद्ध्रियतां चापमदः पाहि पुरं स हि पलायतां चापमदः।
नैतत्सहनीयं ते यद्रिपुभिर्गोकुलानि सह नीयन्ते ॥ २३ ॥
इति वनितामध्ये यन्निवेदितः कर्म तनुभृतामध्येयम्।
धृष्टतरा गा राज्ञः प्रोवाच गुरुतरागाराज्ञः ॥ २४ ॥

(तिलकम्)

हे नृपसुत, अरिलोकाल्यन्तेन अरिलोकानां शत्रुलोकानामाल्यः पङ्क्तयः तदन्तेन तद्विनाशरूपेण सुयोधनेन दुर्योधनेन स्वयमेवागत्य महर्षभसमेतानि महाग्र्यपभयुक्तानि एतानि नोऽस्माकं गवां व्रातानि गोयूथानि सरभसं ससाहसवेगं काल्यन्ते वलाद्गृहीत्वा नीयन्ते॥ तत्तस्मात्कारणात् हे नृपसुत, त्वया अदः चापं ध्रियतां चापं गृहाण तत्पुरं नगरं पाहि रक्ष। स च दुर्योधनः तेन हेतुना अपमदो मदरहितः पलायतां विद्रवतु। यश्च रिपुभिः कुरुभिः गोकुलानि गोयूथानि सह नीयन्ते वलात्, एतत्ते कर्तुः न सहनीयं न क्षन्तव्यम्। 'तव्यानीययकाराणां षष्ठी कर्तरि वा स्मृता' इत्यनेन कर्तरि षष्ठी॥ इत्यनेन प्रकारेण वनितामध्ये अवरोधमध्ये तनुभृतां देहिनामध्येयं न ध्येयं मनसापि अचिन्त्यं कर्म कार्यं तादृशं वलाद्गोग्रहं गवाध्यक्षेण निवेदितः विज्ञापितो राज्ञः पुत्रः उत्तरनामा धृष्टतरा अतिमुखरा गा वाचः प्रोवाच। अत्र हेतुः—कीदृशः राजपुत्रः। गुरुतरागाराज्ञः गुरुतरा अतिगुर्वी अगारे गृहे एव न पुनर्बहिः आज्ञा यस्य स तादृक्। विमूढो वाल इत्यर्थः॥

विराटतनय उत्तरो मुखरा वाचः किमित्यवोचदित्याह—

अद्य हि कोदण्डेन प्राप्य क्रुद्धो यथान्तको दण्डेन।
क्षपयेयं तामेकः कुरुपृतनां तत्र भवति यन्ता मे कः ॥ २५ ॥
अद्य भृशं तनुजवतां रणे रिपूणां करोमि शंतनुजवताम्।
अर्जुनमन्यं तान्ते स्ववले मां विक्रमेण मन्यन्तां ते ॥ २६ ॥

(युग्मम्)

अथैतस्मिन्नहनि क्रुद्धः एतादृशकर्मश्रवणात् क्रोधवानहमेकः कुरुपृतनां कौरवचमूं तां प्राप्य कोदण्डेन चापेन कुरुचमूमहं क्षपयेयं नाशयिष्यामि। को यथा—अन्तको यथा यथाशब्द इवार्थे। यथा अन्तको दण्डधरः दण्डेन सकलं जगत्क्षपयति एकः तथाहमपि कुरुचमूं क्षपयिष्यामीत्यर्थः। तत्र च तस्मिन्कर्मणि मया विधीयमाने कोऽन्यो यन्ता नियन्ता भवति। न कोऽपि नियामको भवतीत्यर्थः॥ शंतनुजवतां शंतनो राज्ञः जातः शंतनुजो भीष्मः तद्वतां तत्सेनानीनामपि रिपूणां शत्रूणां कौरवाणां रणे मृधे तनुजवतां तनुरतिकृशो जवो वेगो येषां ते तनुजवाः तेषां भावस्तत्ता तामतिहीनवलतां करोमि करिष्यामि 'वर्तमानसामीप्ये वर्तमानवद्वा' इति भवन्तीविभक्तिरपि भविष्यदर्थे। तान्ते। कौरवैः खेदिते च स्ववले अस्मदीयवले। तान्ते इति 'तमु ग्लाने'

प्रेरितया अनया उत्तरया विराटसुतया मतिमान् बुद्धिमान् वासविरिन्द्रसूनुः सत्वरं शीघ्रमेव आनीयते स्म आनायितः । नाट्यशालाया इति शेषः । कया । अतिमाननया अतिशयेन मानना पूजा तया । अत्यादरेण आनायित इत्यर्थः ॥

स्वयमहितमहासार्थं हन्तुमना जिष्णुरधिकतमहासार्थम् ।
चक्रेनर्मानीतः समराय च सोत्तरः पुनर्मानीतः ॥ ३१ ॥

आनीतः स जिष्णुः पार्थः बृहन्नडारूपधृत् अधिकतमहासार्थमतिशयेनाधिकहासाय नर्मक्रीडां चक्रे । नर्मवचनान्युक्तवानित्यर्थः । च पुनः समराय च संग्रामाय च इतः स्थानात् नर्मक्रीडां चक्रे । कीदृशः पार्थः । मानी मानवान् । पुनश्च कीदृशः । सोत्तरः सहोत्तरेण विराटपुत्रेण वर्तते यः सः । पुनः कीदृशः । स्वयमेव अहितमहासार्थं शत्रुमहासमूहं हन्तुमनाः हन्तुं मनो यस्य स हन्तुमना इत्यत्र 'तुं काममनसोः' इत्यनेनानुनासिकलोपः । यद्वा पुनर्मानीतः मां लक्ष्मीं सारथिपदप्रापणरूपां नीतः प्रापितः स पार्थः इतः अस्मात्सकाशात् मानी मानवान् अनः शकटं रथयोग्यं रथरूपं वा चक्रे ॥

अथ दन्तुरगजवन्तं कुरुसंघमलङ्घनीयजवं तम् ।
दृष्ट्वा तत्रासारं विराटपुत्रोऽलपच्च तत्रासारम् ॥ ३२ ॥

अथानन्तरं दन्तुरा रम्या सदन्ताश्च गजा विद्यन्ते यस्मिन् स तादृशे, तथा अलङ्घनीयजवं न लङ्घनीयो जवो यस्य स तादृशं कुरुसंघं कौरवव्यूहं दृष्ट्वा विराटपुत्रः उत्तरः अरमत्यर्थं तत्रास बिभाय । स च तत्र समरे असारं तुच्छं प्रलापतुल्यमलपजगाद च ॥

अथ बृहन्नडावेशधारिणमर्जुनं काकुस्वरेण प्रार्थयन् भीतो विराटसुत उत्तरः किमवोचदित्याह—

बृहदवलेपारासौ दधती सेना बृहन्नलेऽपारासौ ।
कथमहमत्रासेन स्वयं प्रवेक्ष्यामि तूर्णमत्रासेनः ॥ ३३ ॥

हे बृहन्नले हे बृहन्नडे, असौ एषा अपारा पाररहिता सेना बृहदवलेपारासौ बृहत् महान् अवलेपो गर्वः आरासः आसमन्ताद्रासः सिंहनादश्च तौ दधती धारयन्ती अस्ति । तत् अस्याम् अपारायां सेनायामसेनः अविद्यमाना स्वल्पा वा सेना यस्य स असेनः अहं स्वयं कथमत्रासेन निर्भयं तूर्णं शीघ्रं प्रवेक्ष्यामि । अत्र प्रवेष्टुं न शक्नोमीत्यर्थः ॥

पुनश्च बृहन्नडावेषधारिणमर्जुनमुत्तरः किमवोचदित्याह—

यो॑हि घृणामावलय स्यन्दनमायान्ति वैरिणामावलयः ।
त्यज मामम्बालोलं कथं नु कुर्यां पराक्रमं बालोऽलम् ॥ ३४ ॥

---

१. एवं व्याख्याने 'चक्रे नर्मानीतः' इत्यत्र रेफश्रवणानुपपत्तिः. २. 'याहि' मूल०

भो वृहन्नडे, त्वं घृणां करुणां याहि । ममोपरि करुणां विधेहीत्यर्थः । स्यन्दनं रथं च आवलय प्रत्यावर्तय । अत्र हेतुः—वैरिणामावलयः शत्रूणां पङ्क्तय आयान्ति । त्वं च मां त्यज मुञ्च । इतोऽपसरामीत्यर्थः । कीदृशं माम् । अम्बालोलम् अम्बायामतिस्नेहेन पालयन्त्यां जनयित्र्यां लोलम् । बालमित्यर्थः । अहं बालः सन् अलमत्यर्थं पराक्रमं साहसरूपम् अपारैतत्सेनाप्रवेशरूपं साहसं कथं नु कुर्याम् ॥

पुनश्चोत्तरोऽर्जुनं वृहन्नडावेषधारिणं किमवोचदित्याह—

स्याश्च पदं वासविधेरसन्मोक्षेण शश्वदम्बासविधे ।
दुर्लभमङ्गददाम क्षौमाद्यं द्रव्यजातमङ्ग ददाम ॥ ३५ ॥

हे वृहन्नडे, असन्मोक्षण इतः संकटात् अस्माकं मोक्षेण त्वं च अम्बासविधे मदीयजनयित्रीसविधे शश्वत्सदैव वासविधेः वासस्य स्थितेः यो विधिः सर्वप्रकारेण सम्यग्वार्ताग्रहणादिना विधानं तस्य पदं स्थानं स्या भविष्यसि इतीति संकटात् मद्रक्षणेन मदीयजननीं च भवतीं सम्यक्पालयिष्यतीत्यर्थः । हे अङ्ग वृहन्नडे, अङ्ग इष्टामन्त्रणे । क्षौमाद्यं दुगूलाद्यं द्रव्यजातं द्रव्यसमूहं दुर्लभं ते ददाम । तथा—अङ्गददाम अङ्गदाश्च दामानि हारदामानि च तदङ्गददाम च तुभ्यं ददाम ॥

इत्थं तत्रासन्तं बहुधा निगदन्तमधिगतत्रासं तम् ।
उत्तरमाहितहासः प्रोचे बीभत्सुरुत्तमाहितहा सः ॥ ३६ ॥

इत्थमनेन प्रकारेण तत्र समरभूमौ असन्तमपण्डितं मूर्खं 'सन् सुधीः कोविदः कविः' इत्यमरः । तथा—अधिगतत्रासं प्राप्तभयम् । बहुधा पुनः पुनर्निगदन्तं काकुस्वरेण प्रार्थ्यमानं तमुत्तरम् आहितहासः उद्भूतहासः स बीभत्सुरर्जुनः प्रोचे जगाद । कीदृशोऽर्जुनः । उत्तमाहितहा उत्तमाः प्रधानाः येऽरयस्तान् हन्तीति तादृशः । 'इत्थं तत्रासदृशं बहुधा निगदन्तमधिगतत्रासदृशम्' इति पाठे च इत्थमनेन प्रकारेणासदृशमयुक्तं बहुधा निगदन्तं तथा अधिगतत्रासदृशम् अधिगतत्रासे प्राप्तभये दृशौ यत्र स तादृशम् ॥

आस्तामुत्तर सान्त्वं द्विषतां प्राप्तोऽधिमध्यमुत्तरसां त्वम् ।
स्वनिवासं नाहत्वा शत्रून्नेष्यामि विपुलसंनाह त्वा ॥ ३७ ॥
इत्थं सुरसत्वेन प्रहिते वाहेऽर्जुनेन सुरसत्त्वेन ।
सहसा समरोदितया भिया विराटात्मजेन समरोदि तया ॥ ३८ ॥
(युग्मम्)

इत्थमनेन प्रकारेण । उक्त्वेति शेषः । सुरसत्त्वेन सुराणां देवानामिव सत्त्वं धैर्यं यस्य सुरसत्त्वस्तेन अर्जुनेन सुरसत्त्वेन सुशोभनो रसो रणरसो यस्य तस्य भावस्तत्त्वं तेन हेतुना वाहे अश्वे प्रहिते रणाय निर्मोचिते प्रग्रहे सति सहसा तत्क्षणमेव समरोदितया संग्रामोत्थितया तया तादृश्या भिया भीत्या हेतुभूतया विराटात्मजेन उत्तरेण समरोदि रुदितम् ।

तत्तादृशं संकटं वीक्ष्य उत्तरो रुरोदेत्यर्थः। इति किमुक्तवेत्याह—आस्तामिति। हे उत्तर सान्त्वं चाटुं मद्विषये त्वत्कृतमास्तां भवतु। त्वं च उत्तरसामुत् उद्भटं तरो वेगो येषां ते तादृशानां रिपूणामधिमध्ये मध्ये प्राप्तोऽसि। हे विपुलसंनाह, विपुलः संनाहः कवचं यस्य स तादृश, सोत्प्रासमुक्तिरियम्। शत्रून् रिपून् तवाहत्वा अनिर्मूलयित्वा त्वां स्वनिवासं न नेष्यामि। शत्रून् हत्वैव नेष्यामीत्यर्थः। अहत्वा न इति च द्वौ नञौ प्रकृतमेवार्थं कथयतः॥

सोऽथाभियानादरिभिः प्रदिश्यमानोऽवरुह्य यानादरिभिः।
व्यपयातः समहासिः स्वधनुस्त्यक्त्वा जनैस्ततः समहासि॥ ३९॥

अभियानादरिभिः अभियानं रणाय संमुखगमनं तत्र आदरिभिः सादरैः अरिभिः शत्रुभिः कुरुभिर्यानात् रथादवरुह्य व्यपयातश्चलितः प्रदिश्यमानः हस्तेन उद्दिश्यमानो वा स्वधनुः स्वकीयं चापं त्यक्त्वा चलितः समहासिः सह महासिना खड्गेन विद्यते यस्मात्तादृशः स उत्तरो विराटसुतः व्यपयातश्चलितः। ततश्च जनैश्च समहासि सम्यक् अतीव हसितम्॥

चक्रे रथमानीतं प्रगृह्य केशेषु जिष्णुरथ मानी तम्।
वाग्भिर्भीरहिताभिः पुनरमुमाश्वासयद्गभीरहिताभिः॥ ४०॥

अथानन्तरं जिष्णुरर्जुनः मानी मानवान् तं विराटपुत्रमुत्तरं बलात्केशेषु प्रगृह्य रथमानीतं रथं प्राप्तं चक्रे। रथमारोपयामासेत्यर्थः। पुनश्च भीरहिताभिः भिया भयेन रहिताभिः, तथा गभीराभिः गाम्भीर्ययुक्ताभिः हिताभिश्च वाग्भिः विराटनृपसुतस्यापि सत एतादृशं क्लैब्यं नोचितमित्यादिकाभिः परमुत्तरमाश्वासयत्। आश्वासयामासेत्यर्थः॥

दैन्यं मुञ्चस्वेदं वेपथुमपि गात्रगतमसुं च स्वेदम्।
कुरु मतिमुत्तर तोत्रग्रहणे मम शत्रुमुत्तरतोऽत्र॥ ४१॥
इति स रिपुत्रस्तस्य प्रत्ययजननाय पाण्डुपुत्रस्तस्य।
प्रथितानामपदानान्यवेदयदशङ्कमात्मनाम पदानाम्॥ ४२॥

(युग्मम्)

इत्यनेन प्रकारेणोक्त्वा रिपुत्रस्तस्य रिपुभ्यः कौरवेभ्यस्त्रस्तस्य भीतस्य तस्योत्तरस्य प्रत्ययजननाय विश्वासोत्पादनाय स पाण्डुपुत्रोऽर्जुनः बृहन्नडावेशधृदपि अपदानात् रणादावद्भुतकर्मणा, प्रथितानां त्रिजगत्प्रसिद्धानां पदानां सव्यसाचिविजयादीनां मध्ये आत्मनाम अतिप्रसिद्धमर्जुनाख्यं तस्योत्तरस्य न्यवेदयत् अकथयत्। कथमशङ्कम् अविद्यमाना शङ्का शत्रुभ्यः स प्रकटीकरणे निःशेषतः प्रतिश्रुतसमयातिवाहनात् यत्र कर्मणि तथा।

१. 'सोऽथ भियानादरिभिः' मूल०. २. 'अपदानं कर्म वृत्तम्' इत्यमरः.

इति किमुक्त्वेत्याह—दैन्यमिति । भोः उत्तर, दैन्यं दीनभावं रिपुत्रासजमिदं मुञ्चस्व त्यज । तथा वेपथुं कम्पमपि भयजं सात्विकं भावममुं च । एतं च स्वेदं गात्रगतं मुञ्चस्व । हे उत्तर, अत्र रणे शत्रुं रिपुं दुर्योधनमुत्तरतः अवतीर्यवतः[1] । योद्धुमिति शेषः । मम तोत्रग्रहणे प्रतोदग्रहणे । सूतकर्मणीत्यर्थः । तत्र मतिं बुद्धिं कुरु । मत्सूतो भवेत्यर्थः ॥

नुन्नरथाश्वस्तेन श्मशानमेत्यात्तधनुरथाश्वस्तेन ।
अशनैरारासरतः कुरुवीरान्पाण्डुसूनुरारासरतः ॥ ४३ ॥

अथानन्तरं पूर्वोक्तसान्त्वविधिना आश्वस्तेन आश्वासयुक्तेन तेन विराटपुत्रेणोत्तरेण नुन्नरथाश्वो नुन्नाः प्रेरिता रणाभिमुखीकृताः रथाश्वा यस्य स तादृशः पाण्डुसूनुः अर्जुनः तथा श्मशानं पितृवनमेत्य शमीवृक्षावलम्ब्यस्त्रगणादात्तं गृहीतं धनुर्येन स तादृशश्च अशनैः महत्कृत्वा आरासे सिंहनादे रतः सन् आसरतः रणाभिमुखमागच्छतः कुरुवीरान् भीष्मकर्णादीन् आर ययौ । रणार्थमित्यर्थः ॥

तेनोत्तरसारथिना गाण्डीवं बिभ्रता च तरसा रथिना ।
दृढमाकर्णादिपुभी रभसाकृष्टैरतायि कर्णादिपु भीः ॥ ४४ ॥

उत्तरसारथिना उत्तरो विराटपुत्रः सारथिः सूतो यस्य स तादृशेन गाण्डीवं नाम धनुर्बिभ्रता च रथिना रथयुक्तेन तेन अर्जुनेन तरसा वेगेन दृढमाकर्णात् कर्णावधि रभसेन आवेगेन आकृष्टैरिपुभिर्बाणैः हेतुभिः कर्णादिपु कुरुवीरेषु भीर्भयम् अतायि विस्तारिता ॥

रुधिरवसाचित्रा सा कुरुसेना जातसव्यसाचित्रासा ।
आहितलेहा हेतिप्रकरैरपतन्महीतले हाहेति ॥ ४५ ॥

जातसव्यसाचित्रासा जातः सव्यसाचिनः त्रासो यस्याः सा तादृशी । तथा रुधिरवसाचित्रा युद्धे क्षतेन जाते ये रुधिरवसे रुधिरं रक्तं वसा च देहिनां धातुविशेषः ताभ्यां चित्रा । तथा हेतिप्रकरैः आयुधसमूहैः आहितः कृतः लेहो ग्राहः सर्वतो व्याप्तिरूपो यस्याः सा तादृशी । 'हा हा' इति शब्दमुच्चार्य महीतले भूपृष्ठे अपतत् ॥

अधुना सकलकुरुवीरतिरस्क्रियैकप्रागल्भ्यमर्जुनस्य वर्णयितुमाह—

पाटितवक्षोदेहः पाण्डवशस्त्रेण शात्रवक्षोदेहः ।
भीष्मोऽन्विततालस्य श्लेषमधत्त ध्वजस्य विततालस्यः ॥ ४६ ॥

शात्रवक्षोदेहः शात्रवाणां रिपूणां क्षोदे संचूर्णने ईहा चेष्टा यस्य स तादृशोऽपि भीष्मः शान्तनवः पाण्डवशस्त्रेण पाण्डवस्यार्जुनस्य शस्त्रेण पाटितं विदीर्णं वक्षो यस्य स तादृशो देहो वर्ष्म यस्य तादृशः सन्, अत एव विततालस्यः विततं विस्तीर्णमालस्यमौ-

१. 'अवतीर्णवतः' इति भवेत्.

दासीन्यम् । अकिंचित्करत्वमिति यावत् । यस्य स तादृशः । अन्विततालस्य अन्वितो युक्तस्तालो वृक्षविशेषो यस्य स तादृशस्य ध्वजस्य श्लेषं समवेतत्वमधत्त । अतिव्यथितः सन् तालाङ्कध्वजे संलीनदेहोऽभूदित्यर्थः । तालध्वजो भीष्म इति प्रसिद्धः ॥

अधुना कुरुपाण्डवगुरोर्द्रोणाचार्यस्यापि अर्जुनेन तिरस्कृतपराक्रमत्वं वर्णयन्नाह—

अशनैराशाततया कुलिशोपमयेन्द्रसूनुराशाततया ।
सायकसंतत्याजप्रतिमं द्रोणं विदार्य संतत्याज ॥ ४७ ॥

अशनैः शीघ्रमेव आशाततया आशातस्य तीक्ष्णस्य भाव आशातता तया तीक्ष्णत्वेन कुलिशोपमया वज्रतुल्यया सायकसंतत्या शरश्रेण्या अजप्रतिमं विष्णुतुल्यम् । पराक्रमेणेति शेषः । विदार्य विदीर्णाङ्गं कृत्वा संतत्याज । गुरुगौरवेण तं तादृशं त्यक्त्वा गतोऽर्जुन इत्यर्थः ॥

अधुना कर्णस्यापि तिरस्क्रियां वर्णयति—

कृत्वा विरथाश्वं तं सूतं नीत्वा च वासविरथाश्वन्तम् ।
भग्नमतनुतत्क्षणतः कर्णं जिष्णुः शरैरतनुत क्षणतः ॥ ४८ ॥

अथानन्तरं वासविरिन्द्रसूनुः अर्जुनः तं जगद्विख्यातपराक्रममपि कर्णं राधेयं शरैः बाणैः विरथाश्वं विगता हता रथाश्वा यस्य स तं तादृशं कृत्वा तथा सूतं तत्सारथिं च शीघ्रमेवान्तं नाशं च नीत्वा क्षणतः क्षणेन शरैर्बाणैः अतनु बहु कृत्वा तत्क्षणं तनूकरणं तस्मादतनुक्षणतः हेतोर्भग्नं लब्धभङ्गं साधिरथमतनुत चकार ॥

अथ शकुनेरपि पार्थकृतां तिरस्क्रियां वर्णयति—

वि[1]षदावेशातान्तस्तस्य शरः सुबलसूनवेशान्तातः ।
पाण्डववैरस्य मदात्स्वयमेवापादितस्य वैरस्यमदात् ॥ ४९ ॥

शातान्तः शातस्तीक्ष्णोऽन्तो यस्य स तादृशः तथा विषदावेशातान्तः विषं स्पर्शसमये ददाति इति विषदः तादृशश्चासावावेशः तत्र अतान्तः अखिन्नः तस्य अर्जुनस्य शरः मदाद्गर्वात् स्वयमेवापादितस्य निष्पादितस्य पाण्डवैः सह वैरस्य कलहस्य वैरस्यं विरसत्वं सुबलसूनवे सौबलाय शकुनये अदात् । मदेन पाण्डवैः सह कलहस्य मूलकारणभूता शकुनिरर्जुनस्तीक्ष्णशरविद्धः स्वघातैः सह कलहः कुरूणां मयोत्पादित इति नितरां सानुशयोऽभूदित्यर्थः ॥

क्षतजे विततक्षरणे सुयोधनं भूय एव विततक्ष रणे ।
वासविरुद्रवदे व स्फुटमरिसैन्ये चचार रुद्रवदेव ॥ ५० ॥

वासविरर्जुनो रणे संग्रामे सुयोधनं दुर्योधनं भूय एव विततक्ष तनूकरोति स्म । 'तक्ष त्वक्ष् तनूकरणे' धातुः । शरैरिति शेषः । कस्मिन्सति । क्षतजे रक्ते विततक्ष-

---

१. 'द्विपदा' मूल०.

रणे सति विततं विस्तीर्णं क्षरणं स्रवणं यस्य तत्तादृशे सति । अर्थात् तस्यैव । स च वासविरिन्द्रसूनुः अरिसैन्ये शत्रुकटके रुद्रवत् रुद्रतुल्यम् अतिभयानकं चचार । अत्र उद्रवदे इति व इति पदच्छेदः । वशब्द इवार्थे । अरिसैन्ये कीदृशे व उद्रवदेव उच्चैः रव उद्रवः विकटशब्दः तं ददाति उद्रवदं तस्मिन् तादृशे इव । तमर्जुनं रुद्रवद्भीमकर्माणं दृष्ट्वा सैन्यमुत्कटं शब्दमिवाभूदित्यर्थः ॥

मुख्यमसावस्त्राणां स्वापनमुत्सृज्य चाञ्जसा वस्त्राणाम् ।
हरणं निद्रागेभ्यश्चक्रे संग्राममूर्धनि द्रागेभ्यः ॥ ९१ ॥

असावर्जुनः अस्त्राणां मन्त्रप्रयोज्यशस्त्राणां मुख्यं प्रधानं स्वापनमस्त्रमुत्सृज्य अञ्जसा व्यक्तमेव वस्त्राणां वाससां हरणमेभ्यः सैन्यलोकेभ्यः संग्राममूर्धनि रणशिरसि चक्रे । एभ्यः कीदृशेभ्यः । निद्रागेभ्यः निद्रां गच्छन्ति ते निद्रागास्तेभ्यः ॥

स पृथावृक्षेशास्यः सुधनुर्न्यस्य श्मशानवृक्षेऽशास्यः ।
रणभूमाववलेपि द्विड्बलमभिभूय तूर्णमाववलेऽपि ॥ ९२ ॥

सोऽर्जुनः ऋक्षेशास्यः ऋक्षाणां तारकाणामीशः ऋक्षेशश्चन्द्रः तद्वदास्यं मुखं यस्य स तथा अशास्यः केनापि न शासनीयः महापराक्रमित्वात् । रणभूमौ संग्रामभूमौ अवलेपि सगर्वे द्विड्बलं शत्रुबलमभिभूय जित्वा पृथौ महति श्मशानवृक्षे शमीवृक्षे प्रागुद्दिष्टे यत्रायुधानि तै रक्षितान्यासन् तत्रैव पुनरपि स्वकार्यं विधायागतः स्वधनुः स्वचापं न्यस्य तूर्णमपि शीघ्रमपि आववले । प्रत्यावृत्त इत्यर्थः ॥

न तु मे भवता तत्त्वं व्याख्येयं धृतधनुश्च भव तात त्वम् ।
इति सारथ्यं तस्य व्यधायि पार्थेन वैरिरथ्यन्तस्य ॥ ९३ ॥

इति चोक्त्वा पार्थेन अर्जुनेन तस्य उत्तरस्य सारथ्यं सूतकर्म व्यधायि कृतम् । तस्य कीदृशस्य । वैरिरथ्यन्तस्य वैरिरथिनां शत्रुमहारथानामन्तस्य नाशरूपस्य । इति किमित्युक्त्वा भो राजसुत उत्तर, मे मम तत्त्वं रहस्यं यन्मया युद्धसंकटे तवाग्रे स्वनामप्रकाशितं तन्न व्याख्येयम् । कस्यापि न वाच्यम् । तुशब्दः पूर्वस्मात्पक्षान्तरे । हे तात पूज्य, त्वं धृतधनुश्च प्रागवत् भव । 'पूज्यश्वशुरयोस्तातः' इत्यनेकार्थेषु ॥

जितरिपुराजावृद्धः पुरं विराटोऽप्यवाप राजा वृद्धः ।
शुश्राव जयं तस्य स्वसुतस्य च देवराडिव जयन्तस्य ॥ ९४ ॥

आजौ संग्रामे जितरिपुः जितशत्रुः ऋद्धः समृद्धः वृद्धो राजा विराटोऽपि पुरं स्वनगरमवाप । तस्य सुतस्य च उत्तरस्य जयं विजयं शुश्राव । क इव कस्य । देवराट् इन्द्रो यथा जयन्तस्य जयन्ताख्यस्य स्वसुतस्य ॥

धूपैरुत्तरलाली रथ्याः स विधाय तूर्णमुत्तरलाली ।
धर्मभुवा देवनतश्चक्रे हसितं विचित्रवादेऽवनतः ॥ ९५ ॥

स विराटनृपः उत्तरलाली उत्तरं खसुतमुत्तराख्यं लालयति सस्नेहं पश्यति विशेषतः जयश्रवणादुत्तरलाली तूर्णं शीघ्रमेव रथ्या विशिखाः । 'रथ्या प्रतोली विशिखा' इत्यमरः । धूपैरगुर्वादिधूपैः उत्तरलाली उच्चैस्तरलाः सौगन्ध्याय लोला अलयो भ्रमरा यासु तास्तादृशीर्विधाय धर्मभुवा युधिष्ठिरेण कङ्कविप्ररूपधारिणा सह देवनतः द्यूतात् द्यूतार्थे विचित्रवादे नानावादे हसितम् । परस्परमित्यर्थः । हासं चक्रे । कथंभूतः । अवनतः । द्यूतार्थमित्यर्थः । तथा च विराटपर्वणि—'प्रवर्तमानो द्यूताय मात्स्यः पाण्डवमब्रवीत् । पश्य पुत्रेण मे युद्धे तादृशाः कुरवो जिताः ॥' इति । 'ततोऽब्रवीत् महातेजा धर्मपुत्रो युधिष्ठिरः । बृहन्नडा यस्य यन्ता कथं न स विजेष्यति ॥ इत्युक्त्वा कुपितो राजा धर्मपुत्रमथाब्रवीत् । समं पुत्रेण मे शण्ठं ब्रह्मबन्धो प्रशंससि ॥' इत्यादि विचित्रवादः । तथा 'ततः प्रकुपितो राजा तमक्षेणाहनद्भृशम्' इत्यादि ॥

स प्रजहाराजानन्नक्षेण क्षेपहृतमहा राजानम् ।
धर्मजमतिमत्तायां निजबुद्धौ निरतमेव मतिमत्तायाम् ॥ ९६ ॥

स विराटः अजानन् तन्महिमानभिज्ञः मतिमत्तायां मतिमतः बुद्धिमतो भावः मतिमत्ता तस्यां निरतं राजानं धर्मजं युधिष्ठिरनृपमक्षेण पाशकेन प्रजहार अहनत् । कस्यां सत्याम् । निजबुद्धौ अतिमत्तायाम् अतिप्रमादयुतायां क्षेपेण उक्तविचित्रवादेन हृतं महः तेजो यस्य स क्षेपहृतमहाः ॥

तदनु रुजा यातेन श्वेताश्वभयादवैक्षि जाया तेन ।
सा निजकपटाधाराः क्षतजस्य चकार विहितकपटा धाराः ॥९७॥

तदनु तदनन्तरं रुजा अक्षप्रहारोत्थव्यथया तथा श्वेताश्वभयात् श्वेताश्वादर्जुनाद्भयं तस्मात् हेतोः एतादृशीं व्यवस्थां मे दृष्ट्वा इह बृहन्नडावेषधारी अर्जुन आयातः । निर्विराटवंशां पृथ्वीं क्रुधा करिष्यतीति भयादित्यर्थः । तेन युधिष्ठिरेण जाया सैरन्ध्रीवेषधारिणी द्रौपदी अवैक्षि दृष्टा । सा च द्रौपदी क्षतजस्य तत्प्रहारोत्थस्य धारा निजकपटाधारा निज एव निजको यः पटः स एव आधारो यासां ता रक्तधाराः । निजशिरोंशुकेनोत्पुंसितवतीत्यर्थः । कीदृशी सा । विहितकपटा विहितं कपटं यया सा । अस्य ब्राह्मणस्य वराकस्य वत नैवैतदुचितमिति मिषेण रक्तं निजपटे धारयामासेत्यर्थः ॥

सुतमरिसमुदायान्तं मात्स्योऽवलोक्य समुदायान्तम् ।
[1]प्रीतिमलं भेजे यः स्वयं जयन्कौरवेऽवलम्भे जेयः ॥ ९८ ॥

मात्स्यो मात्स्याधिपो विराटोऽपि तावदरिसमुदायान्तम् अरीणां समुदायः समूहः तस्य अन्तो नाशस्तमायान्तं सुतमुत्तरमवलोक्य समुत् सह मुदा वर्तते यः स समुत् सहर्षः अलमत्यर्थं प्रीतिं भेजे । तं सुतं कमित्याह—यः कौरवे दुर्योधने स्वयमवलम्बे

१. 'प्रीतिं लेभे जेयः स्वयं जयं कौरवे बले भेजे यः' मूल०.

आश्रयेऽपि सति जयन् जेता आसीत् । यद्वा कुरूणामिदं कौरवं तस्मिन् कौरवे सैन्ये स्वयमवलम्ब्ये यो जयन् जेता आसीदिति ॥

अरिबलकम्पदया तं श्रिया समेतं सयन्तृकं पदयातम् ।
स्फुरितमहा रेजे यं सुतं परिष्वज्य संप्रहारेऽजेयम् ॥ ५९ ॥

अयं विराटनृपः अरिबलकम्पदया शत्रुबलाय कम्पं ददातीति तादृश्या श्रिया लक्ष्म्या समेतं युतं तथा सयन्तृकं सह यन्त्रा बृहन्नडावेषधारिणा अर्जुनेन वर्तते यः स तादृशं तथा पदयातं पादपतितं तं सुतमुत्तरं परिष्वज्य आलिङ्ग्य रेजे बभौ । कीदृशः स विराटनृपः । स्फुरितमहाः स्फुरितं महस्तेजो यस्य स तादृशः । सुतं कीदृशम् । अजेयं न जेतुं शक्यम् । कुत्र । संप्रहारे ॥

अथ नृपमस्तकलीनां क्षतिं विलोक्यातिमात्रमस्तकलीनाम् ।
अजनि तदा पाण्डुभुवामतिरभसः कीर्तिसंपदा पाण्डुभुवाम् ॥ ६० ॥

अथानन्तरं नृपमस्तकलीनां नृपस्य युधिष्ठिरस्य मस्तके शिरसि लीनां क्षतिं विलोक्यातिमात्रमस्तो दूरीकृतः कलिर्यैस्ते तादृशानामपि पाण्डुभुवां पाण्डवानामतिरभसः अतिशयेन साहसावेगः अजनि जातः । विराटमुपरीत्यर्थः । कीदृशानाम् । कीर्तिसंपदा कीर्तिश्रिया पाण्डुर्धवला भूर्येषां ते तादृशानाम् ॥

तदनु रहस्यवधाय त्वरिता मात्स्यपकुलोद्वहस्य वधाय ।
रूपं बभ्रुः स्वन्ते पार्थाः समये च रोषबभ्रु स्वन्ते ॥ ६१ ॥

तदनु तदनन्तरं ते पार्थाः युधिष्ठिराद्या रहसि मिथः अवधाय सावधानीभूय तस्मिन् वेषातीतं (?) च निजप्रकाशनसमयं च निश्चित्य मात्स्यपकुलोद्वहस्य मात्स्याधिपस्य विराटस्य वधाय त्वरिताः सन्तः स्वरूपं प्राग्यथावस्थितम् । कङ्कसूदादिवेषपरित्यागेनेत्यर्थः । बभ्रुः अधारयन् । बभ्रुरिति 'डुभृञ् धारणपोषणयोः' धातुः । किंभूतम् । रोषबभ्रु रोषेण बभ्रु कपिलम् । कदा । समये काले । कीदृशे । स्वन्ते शोभनः अन्तो यस्य स तादृशे ॥

अथ तरसापत्येनप्रतिमान्पार्थान्समीक्ष्य सापत्येन ।
चक्रे सामात्येनः स्मरता मात्स्येश्वरेण सामात्येन ॥ ६२ ॥

अथानन्तरं तरसा शीघ्रमेव आपत्य गत्वा इनप्रतिमान् तेजसा सूर्यसदृशान् पार्थान् युधिष्ठिरादीन् समीक्ष्य सापत्येन सह अपत्येन सुतेन उत्तरेण वर्तते यः स तादृशेन, तथा एनः अपराधं सुकृतं स्मरता, तथा सामात्येन समन्त्रिणा मात्स्येश्वरेण साम सान्त्वं तेषां चक्रे व्यधायि ॥

अवनिभृति समानमति स्वजनैः सार्धं बृहस्पतिसमानमतिः ।
तत्र दृशं समतनुत श्लाघ्यां धर्मात्मजोऽनृशंसमतनुतः ॥ ६३ ॥

धर्मात्मजो युधिष्ठिरः तत्र तस्मिन् अवनिभृति राज्ञि विराटे स्वजनैः बन्धुजनैः सार्धं समानमतिःसम्यक् आनमति प्रणमति श्लाघ्यां सस्नेहां दशां समतनुत व्यतनोत् । कीदृशः सः । बृहस्पतिसमानमतिः बृहस्पतेराङ्गिरसस्य समाना सदृशी मतिर्यस्य सः । पुनः कीदृशः । अनृशंसमतनुतः अविद्यमानं नृशंसानां क्रूराणां मतं येषां ते अनृशंसमताः साधवः तैर्नुतः स्तुतः ॥

अदिशदसौ भद्राय प्रियां सुतामुत्तरां च सौभद्राय ।
दूतांश्चार्यसुहृद्भ्यः पार्थानां प्राहिणोद्विचार्य सुहृद्भ्यः ॥ ६४ ॥

असौ विराटो नृपः भद्राय प्रशस्ताय प्रियां स्नेहभाजनभूतामुत्तरामुत्तरनाम्नीं सुतां सौभद्राय सुभद्रासूनवे अभिमन्यवे अर्जुनसुताय अदिशत् ददौ । तद्विचार्य च पार्थानां युधिष्ठिरादीनां सुहृद्भ्यो बन्धुभ्यः दूरस्थेभ्यः श्रीकृष्णप्रभृतिभ्यः दूतांश्च आकारणाय प्राहिणोत् विसर्जयामास । सुहृद्भ्यः कीदृशेभ्यः । अरीणां शत्रूणां येऽसवः प्राणास्तान् इति तेभ्यस्तादृशेभ्यः ॥

संप्राप्य तदानन्तं पार्थो वव्रे कृताभिमतदानं तम् ।
प्रतिजग्राह तदैव स्फीतं सैन्यं सुयोधनो हतदैवः ॥ ६५ ॥

पार्थो युधिष्ठिरः तदा तस्मिन् समये तमनन्तं हरिं श्रीकृष्णं प्राप्य वव्रे । साहाय्यायेत्यर्थः । कीदृशं तम् । कृतमभिमतं यथेष्टं दानं येन स तादृशं वनवासादिक्लेशिनां तेषां कृताभिमतदानमित्यर्थः । तच्छ्रुत्वा च सुयोधनो दुर्योधनः हतदैवः हतं दुष्टं दैवं शुभाशुभं कर्म यस्य सः । दैवहत इत्यर्थः । तदैव तस्मिन् काले स्फीतमेकादशाक्षौहिणीरूपं सैन्यं प्रतिजग्राह समुदितं चक्रे ॥

स्वनयात्परमातुलतः सुयोधनो वरमवाप रमातुलतः ।
श्रेयो नेयमुपायात्सोऽपि संचिन्त्य भागिनेयमुपायात् ॥ ६६ ॥

रमातुलतः रमया लक्ष्म्या अतुलः अनुपमः तस्मात् तादृशात् स्वनयात्परमातुलतः सुष्ठु अनयः स्वनयस्तस्माद्धेतोः यः पर उत्कृष्टः स्नेहभाजनं यो मातुलः शकुनिस्तस्मात् वरं साहाय्यरूपमवाप । सोऽपि शकुनिः इति संचिन्त्य भागिनेयं भगिन्या गान्धार्या अपत्यं भागिनेयः दुर्योधनस्तमुपेयात् उपागमत् । इति किमित्याह—श्रेयः कुशलं नेयं प्राप्यम् । कस्मात् । उपायात् । कमपि स्वकीयं महाराजमाश्रित्येत्यर्थः ॥

---

१. स्फीतं प्रख्याततरं समुदितं यादवानां सैन्यमेव प्रतिजग्राह । तथा च भारते सैनोद्योगपर्वणि—'एवमुक्तस्तु कृष्णेन कुन्तीपुत्रो धनंजयः । अयुध्यमानं संग्रामे वरयामास केशवम् । दुर्योधनस्तु तत्सैन्यं सर्वमावरयत्तदा ॥' इत्येवं व्याख्या सुष्ठु प्रतिभाति. २. सुयोधनः स्वनयात्स्वकीयनीतितः परमातुलतः परेषां शत्रुभूतानां पाण्डवानां मातुलतः शल्याद्वरमवाप । सोऽपि शल्योऽपि 'उपायाच्छ्रेयो नेयम्' इति संचिन्त्य भागिनेयं पाण्डवमुपायात् ।' इत्येवं व्याख्या सुष्ठु प्रतिभाति.

तं युधि राधेयस्य ज्ञाता खलु कर्मणः पराधेयस्य ।
स ययाच क्षेपार्थे शल्योऽपि तथेति चाचचक्षेऽपार्थम् ॥ ६७ ॥

स दुर्योधनः युधि युद्धे पराधेयस्य परैः शत्रुभिरधेयो धर्तुमशक्यस्तस्य तादृशस्य । 'डुधाञ् धारणपोषणयोः' धातुः । कर्मणः अत्यद्भुतकर्मणो ज्ञाता । कस्य । राधेयस्य कर्णस्य । रणादावद्भुतं कर्म कर्णस्य ज्ञातेत्यर्थः । तं कर्णं क्षेपार्थं शत्रूणां नाशार्थं ययाच प्रार्थयामास । शल्योऽपि राजा अपार्थं व्यर्थम् । तत्त्रियमित्यर्थः । तथेति एवमेव विधीयतामिति च आचचक्षे जगाद ॥

अधुना द्वयोरपि कुरुपाण्डवसेनयोः संख्यासमुदायमाह—

सप्त महासेनानामक्षौहिण्यः कृताट्टहासेनानाम् ।
घटिता धामन्येषां तत्रैकादश धृतक्रुधामन्येषाम् ॥ ६८ ॥

एषां पाण्डवानां धामनि सैन्यरूपे सप्त अक्षौहिण्यः घटिता मिलिता । एषां कीदृशानाम् । महासेनानां महत्यः सेना येषां ते तादृशानाम् । पुनः कीदृशानाम् । कृताट्टहासेनानाम् कृतः अट्टहासः महाहासा युद्धोचिता यैस्ते तादृशा इनाः सेनानीवीरा येषां ते तादृशाः । तत्र तयोर्द्वयोः सेनयोर्मध्ये अन्येषां कुरूणामेकादशाक्षौहिण्यो घटिता मिलिताः । कीदृशीनाम् । धृतक्रुधाम् धृता पार्थनाशाय क्रुत् कोपो यैस्ते तादृशानाम् । अथाक्षौहिणीसंख्या प्रसङ्गेन लिख्यते—'एकविंशत्सहस्राणि शतान्यष्टौ तु सप्ततिः । गजानां च रथानां च तावदेव कदम्बकम् ॥ पञ्चषष्टिसहस्राणि षट्शती दशधाधिका । तुरङ्गमानां जात्यानां पुनः पवनरंहसाम् ॥ लक्षं नव सहस्राणि पदातीनां शतत्रयम् । पञ्चाशदधिकं चैव स्मर्यतेऽक्षौहिणी बुधैः ॥' हस्तिनः २१८७०, रथाः २१८७०, अश्वाः ६५६१०, पदातयः १०९३५० । इत्यक्षौहिणीसंख्या ॥

निन्दितसंयत्तेभ्यः श्रुत्वा च निवृत्तिमाजिसंयत्तेभ्यः ।
दधदिव हितवाञ्छां तं धृतराष्ट्रः संजयं प्रहितवाञ्छान्तम् ॥ ६९ ॥

धृतराष्ट्रो राजा आजिसंयत्तेभ्यः आजौ युद्धे युद्धविषये सम्यक् यत्ताः सयत्नास्तादृशेभ्यस्तेभ्यो दुर्योधनकर्णादिभ्यः निवृत्तिं पार्थानां वनवासादितः श्रुत्वा हितवाञ्छां स्वपरपक्षयोः स्नेहेन मिलनवाञ्छामिव दधत् तान्प्रति तं संजयं सूतं प्रहितवान् । कीदृशं तम् । शान्तं शमप्रधानम् । कीदृशो राजा । निन्दितसंयत् निन्दिता दूषिता संयत् युद्धं येन स तादृशः । दधदिवेत्यत्र इवशब्दो द्वयोः सेनयोः सस्नेहं मिलने संशयार्थम् ॥

सोऽपि मृधावादरतः पार्थानां प्राप्य संनिधावादरतः ।
अभ्यधित स्वामिवचः सरन्मतिं तस्य भूभृतः स्वामिव चः ॥ ७० ॥

सोऽपि संजयः पार्थानां युधिष्ठिरादीनां संनिधौ संनिधाने प्राप्य मृधावादरतः मृ-

---

१. 'पाण्डवस्तं शल्यं राधेयस्य क्षेपार्थं ययाच' इति प्रतिभाति. २. 'स्रुत्वा' मूल०.

धस्य युद्धस्य यः अवादः अकथनं तत्र रतः । शान्तिरेव युक्ता इति कथयन्नित्यर्थः । आदरेण स्वामिवचः स्वामिनो धृतराष्ट्रस्य वचः अभ्यधित अकथयत् । तस्य भूभृतो दुर्योधनस्य च स्वां मतिं मत्सरकलुषां च स्मरन् अभ्यधित । दुर्योधनस्य मतिं स्मरन् संशयित इव शान्तिप्रधानं धृतराष्ट्रवचोऽकथयत् इत्यर्थः । क इव । चः इव । यथा चः चकारः अव्ययं तस्य तच्चेति संशयं ब्रूते, तद्वत्संजयोऽपि जगादेत्यर्थः ॥

अवनेरादरसहितैरवने राज्ञां समूहमुत्सार्यापि ।
न वने नरदेवसुतैर्नवनेन निवृत्तिवर्त्मनोऽकारि मनः ॥ ७१ ॥

राज्ञां समूहं व्रजमुत्सार्य दूरीकृत्यापि अवनेर्भूमेरवने रक्षणे आदरसहितैः सादरैर्निवृत्तिवर्त्मनः वनवासान्निवृत्तिमार्गस्य नवनेन स्तवनेन । 'णू स्तुतौ' धातुः । नरदेवसुतैः नृपसुतैः वने वनविषये मनः न अकारि न कृतम् । वनान्निवृत्य शत्रून् जित्वा महीं पालयाम इत्येव मनसि चक्रुरित्यर्थः ॥

तन्मतवादायातः[1] सूतो हास्तिनपुरं जवादायातः ।
वाचं शौर्यादीनां न्यवेदयत्पार्थिवाय शौर्यादीनाम् ॥ ७२ ॥

सूतः संजयः अतोऽनन्तरं तन्मतवादाय तेषां पाण्डवानां यन्मतं तस्य वादः धृतराष्ट्रादीनामग्रे कथनं तस्मै जवाद्वेगेन हास्तिनपुरमायातः आगतः । तत्र च शौर्यादीनां शौरिः श्रीकृष्णः, आदिशब्देन युधिष्ठिरादयः, तदादीनां वाचं धृतराष्ट्राय पार्थिवाय न्यवेदयत् । कीदृशीं वाचम् । शौर्यादीनां शौर्येण शूरत्वेन प्रागल्भ्येन अदीनां न दीना ताम् ॥

सपितामहतातेन स्वजनेन ततोऽर्थितोऽपि महता तेन ।
न तु कृतवाञ्छान्तेभ्यः सुयोधनो राज्यदानवाञ्छां तेभ्यः ॥७३॥

सपितामहतातेन पितामहो भीष्मः, तातो धृतराष्ट्रश्च तौ, सह ताभ्यां वर्तते यः स तादृशेन महता च तेन स्वजनेन बन्धुजनेन प्रार्थितोऽपि सन् सुयोधनो दुर्योधनः । तु पक्षान्तरे । शान्तेभ्यः शमप्रधानेभ्यस्तेभ्यः पाण्डवेभ्यो राज्यदानवाञ्छां राज्यवितरणेच्छां न कृतवान् ॥

तदनु परा ज्ञात्यन्तं विधास्यता धर्मजेन राज्ञात्यन्तम् ।
प्रापे चिन्तापरता प्रमुष्णता सपदि मुखरुचिं तापरता ॥ ७४ ॥

तदनु तदनन्तरमत्यन्तं नितरां ज्ञात्यन्तं ज्ञातीनां बन्धूनां सेनाद्वयेऽपि स्थितानामन्तो नाशस्तं विधास्यता कर्तुमिच्छता राज्ञा धर्मजेन युधिष्ठिरेण परा उत्कृष्टा चिन्तापरता चिन्तायां परो लग्नः तस्य भावस्तत्ता प्रापे लब्धा । किंभूतेन धर्मजेन । मुखरुचिं वदनकान्तिं प्रमुष्णता चोरयता । मलिनमुखच्छविनेत्यर्थः । कीदृशी चिन्तापरता । तापरता तापे पश्चात्तापे रता ॥

---

1. 'मादाया' मूल०.

स प्रणयेन सहायं जगाद गोविन्दमतिशयेन सहायम्।
नान्यो मे यादव नौरर्तिसमुद्रे त्वदप्रमेयादवनौ ॥ ७५ ॥

सोऽयं युधिष्ठिरः अतिशयेन नितरां सहायं गोविन्दं श्रीकृष्णं प्रणयेन सह सप्रणयं जगाद। किमिति। हे यादव यदुवंशज, अप्रमेयात् ब्रह्माद्यैरपि न प्रमेयः निर्णेतुं शक्यस्तादृशात् त्वत् भवतः अन्यः नौः तरणिः। तारिका इत्यर्थः। न अस्ति। कुत्र। अर्तिसमुद्रे अर्तिः मनःपीडा स एव समुद्रः तस्मिन्। कस्याम्। अवनौ भूमौ। 'अर्तिः पीडा धनुःकोट्योः' इत्यमरः॥

युधिष्ठिरः पुनरपि श्रीकृष्णं संध्यर्थं प्रार्थयति—

न हि कुरवो मह्यन्ते राज्यं प्रदिशन्त्यभीरवो मह्यं ते।
न च जनता वध्येयं किमत्र पथ्यं त्वयैव तावद्ध्येयम् ॥ ७६ ॥

हे श्रीकृष्ण, अभीरवः न भीरवः कातराः कुरवः ते दुर्योधनाद्याः मह्यन्ते मह्या भूमेरन्तस्तत्र मह्यन्ते मह्यं राज्यं न प्रदिशन्ति न दास्यन्ति। इयं जनता जनानां समूहः बन्धुजनानां समूहः न च वध्या हन्तुं योग्या। तत्तस्मात्कारणात् अत्र विषये त्वयैव सर्वज्ञेन तावत् पथ्यं हितं ध्येयं चिन्त्यम्॥

विह्वलवपुरङ्ग त्वा याचे यदुवीर कौरवपुरं गत्वा।
संधिं पङ्कजनयन स्वया धिया स्वैर्जनैरपङ्क जनय नः ॥ ७७ ॥

हे अङ्ग हे यदुवीर श्रीकृष्ण, अहमेतत्सेनाद्वयसंघट्टभाविबन्धुक्षयभयात् विह्वलं सकम्पं वपुर्यस्य स विह्वलवपुः सन् त्वा त्वां याचे। किमिति। हे यदुवीर, त्वं कौरवपुरं हास्तिनपुरं गत्वा हे पङ्कजनयन पुण्डरीकाक्ष हे अपङ्क अविद्यमानं पङ्कं कलुषं शीतादिषडूर्मिजं बाल्याद्यवस्थात्रयजं वा यस्य तस्य संबोधनम्। नः अस्माकं स्वैर्जनैः बन्धुभिः सह स्वया बुद्ध्या प्रज्ञया संधिं जनय उत्पादय॥

इति रिपुराशावन्तं परिहर्तुं चक्रपाणिराशावन्तम्।
अधरितचतुरम्बुध्या विचिन्त्य नृपतिं जगाद चतुरं बुद्ध्या ॥७८॥

इत्यनेन प्रकारेण रिपुराशौ कुरुसैन्ये अन्तं नाशं भाविनं परिहर्तुं दूरीकर्तुमाशावन्तमभिलाषयुक्तं तं नृपतिं युधिष्ठिरं बुद्ध्या विचिन्त्य चतुरं कृत्वा चक्रपाणिः श्रीकृष्णः जगाद। वक्ष्यमाणमिति शेषः। बुद्ध्या कीदृश्या। अधरितचतुरम्बुध्या अधरिता जिताः चत्वारोऽम्बुधयो यया सा तादृश्या चतुरम्बुधिभ्योऽपि विततया। गम्भीरया चेत्यर्थः॥

श्रीकृष्णो युधिष्ठिरं किमवोचदित्याह—

कुरुवृषभावनिदानं कुर्युः कुरवो न बन्धुभावनिदानम्।
तेषां मे वचनं तु स्यादवमानस्य मूलमेव च नन्तुः ॥ ७९ ॥

हे कुरुवृषभ कुरूणां कुरुवंश्यानां वृषभः श्रेष्ठः तस्य संबोधनम् हे कुरुवृषभ युधि-

ष्ठिर, कुरवो दुर्योधनाद्याः अवनिदानमवनेः पृथ्व्या दानं कुर्युः भूमिं कदाचिद्दद्युः । न तु बन्धुभावनिदानं कुर्युः । बन्धुषु भावस्य स्वाभिप्रायस्य निदानं मूलकारणम् अतस्तेषां कुरूणां तु पक्षान्तरे मे मम वचनमवमानस्य मूलमेव स्यात् अवमानोत्पादकमेव स्यात् मदीयवचनस्य नादरात् । मे कीदृशस्य । नन्तुः प्रणमतः । सविनयमित्यर्थः । नन्तृशब्द-स्याजन्तस्य षष्ठ्येकवचने रूपम् ॥

श्रीकृष्णस्तं युधिष्ठिरं पुनः किमवोचदित्याह—

अपि सुरसत्त्व रमे वः श्रेयसि यास्यामि चैष सत्वरमेव ।
उदयो दैवप्रभवः प्रयत्नमात्रे वयं सदैव प्रभवः ॥ ८० ॥

हे सुरसत्त्व सुराणां देवानामिव सत्त्वं धैर्यं यस्य स तस्य संबोधनम् । अहं वः युष्माकं श्रेयसि कल्याणे रमे हृष्यामि । एष च अहं सत्वरं शीघ्रं यास्यामि । तत्सविधमित्यर्थः । उदयः कार्यसंसिद्धिरूपः दैवप्रभवः दैवाद्भाग्यात् प्रभवो यस्य स तादृक् भवति । वयं पुनः सदैव प्रयत्नमात्रे प्रभवः समर्थाः । वयं केवलमत्र प्रयत्नं कुर्मः । सिद्धिस्तु दैवाधीनेत्यर्थः ॥

कृतवागादानं तं कृतधीरित्यर्जुनो जगादानन्तम् ।
मा लोकेश वदैवं यत्नः सुकृतोऽतियाति केशव दैवम् ॥ ८१ ॥

इत्यनेन प्रकारेण कृतवागादानं कृतं विहितं वागादानं वाक्प्रपञ्चो येन स तादृशम् अनन्तं हरिं श्रीकृष्णमर्जुनो जगाद । किमिति । हे लोकेश लोकानां भूरादीनामीशः स्वामी तस्य संबोधनम् । त्वमेवं मा वद मा ब्रूहि । हे केशव सुकृतः सुशोभनं कृत्वा कृतः । कृतिनेति शेषः । यत्नः दैवमतियाति । अतिशब्दोऽर्थाद्बूह्यः । कृतिना सम्यक् कृतो यत्नः दैवमतियाति । तल्लङ्घयतीत्यर्थः ॥

अर्जुनः श्रीकृष्णं पुनरपि किमवोचदित्याह—

विधिना वै मुख्येन स्फुटलक्षणसिद्धदेववैमुख्येन ।
देहभृतापाद्यानि श्रेयांस्यायुर्धनप्रतापाद्यानि ॥ ८२ ॥

वै निश्चये । स्फुटं लक्षणेन सूत्रव्याख्यानेन सिद्धा ये देवाः दिवि दीव्यन्तीति देवाः देवादयः पश्चादिषु द्रष्टव्याः इति देवशब्दनिर्देश्याः । ब्रह्मादय इत्यर्थः । तेषां वैमुख्येनापि सता मुख्येन प्रधानेन विधिना दैवेन पूर्वकर्मणा हेतुना देहभृता पुरुषेण कर्त्रा आयुर्धन-प्रतापाद्यानि आयुर्जीवितकालपर्यायः, धनं वित्तं च, प्रतापः अरिभयजननी वार्ता, एत-दाद्यानि श्रेयांसि कल्याणानि आपाद्यानि लभ्यानि ॥

इत्थं तावद्यतने कृष्णः पार्थे कृतस्थितावद्यतने ।
दत्तसकलहेतुं गां निपुणो निजगाद वादकलहे तुङ्गाम् ॥ ८३ ॥

इत्थमनेन प्रकारेण तावत् प्रथममद्यतने तत्कालार्हे यतने यत्ने संधिरूपे कृतस्थितौ

विहितसिद्धौ पार्थेऽर्जुने सति कृष्णः श्रीकृष्णः वादकलहे वादे संवादे यः कलहः तत्र तुङ्गां महतीं तां गाम् वाचं जगाद ऊचे । कीदृशीं गाम् । दत्तसकलहेतुं दत्ताः सकला हेतवः उपपादका यस्यां सा तादृशीम् । कीदृशः श्रीकृष्णः । निपुणः ॥

यद्येवं नियमस्तु त्वद्दृष्टान्तेषु सारवान्नियमस्तु ।
तव निपुणा मतिरेकः फलविकलश्चेन्न कर्मणामतिरेकः ॥ ८४ ॥

हे अर्जुन, एवमनेन प्रकारेण त्वद्दृष्टान्तेषु विधिना वैमुख्येनेत्यादिषु तु पक्षान्तरे सारवान् सारयुक्तः नियमो यद्यस्ति तथापि इयं तव निपुणा मतिर्बुद्धिस्तदैवास्तु । तदा कदेत्याह—एकः कर्मणां शुभाशुभानामतिरेक उद्रेकः फलविकलः फलहीनश्चेन्न भवति। शुभकर्मणामेव फलेन निपुणमत्युद्भव इत्यर्थः ॥

अपि फलवैकल्यं ते दधते केचित्फलेन वै कल्यन्ते ।
तदिह भवेदिष्टस्य प्राप्तिः सत्येव संभवे दिष्टस्य ॥ ८५ ॥

हे अर्जुन, ते केचिदिह फलवैकल्यं फलराहित्यं कृतेऽपि यत्ने दधते। वै निश्चये । फलेन कर्त्रा केचित्पुरुषाः कल्यन्ते संयुज्यन्ते । केचित्फलभागिनोऽपीत्यर्थः । तदेवं सत्यपि इह जगति दिष्टस्य पूर्वकृतस्य शुभमेव संभवे सति इष्टस्य अभिलषितस्य प्राप्तिर्भवेन्न त्वन्यथेत्यर्थः ॥

तत्र सुदर्शनहेतौ वदतीत्थं दर्शितात्मदर्शनहेतौ ।
अतिसंमानवदिष्टस्वजनो भीमोऽपि नीतिमानवदिष्ट ॥ ८६ ॥

इत्थं पूर्वोक्तप्रकारेण दर्शितात्मदर्शनहेतौ दर्शिताः प्रकटीकृता आत्मदर्शनस्य स्वकीयमतस्य हेतवो येन स तादृशे सुदर्शनहेतौ सुदर्शनः चक्रं हेतिरायुधं यस्य स सुदर्शनहेतिः श्रीकृष्णस्तस्मिन् वदति सति अतिसंमानवन्तः अतिपूजावन्तः इष्टाः स्वजनाः बन्धुजनाः यस्य स तादृशो भीमोऽपि नीतिमान् सुनीतिः अवदिष्ट अवदत् । वक्ष्यमाणमिति शेषः ॥

क्रियतां केशव सामस्वजनैः सार्धं यथान्धकेश वसाम ।
सुहृदो नाम सहाया विपदो मोक्षाय देहिनामसहायाः ॥ ८७ ॥

हे केशव, हे अन्धकेश अन्धकानां वृष्ण्येकदेशीयानां जनपदानामीशस्तत्संबोधनम् । त्वया साम सान्त्वं सिद्ध्यर्थं तथा क्रियतां यथा स्वजनैः धृतराष्ट्रादिभिः सार्धं सहैव मिलित्वा वसाम । यतः—असहायाः न सोढुं शक्याया दुःसहाया विपदो विपत्तेः मोक्षाय सुहृदो मित्राणि नाम निश्चये सहायाः । केषाम् । देहिनां प्राणिनाम् । तथा च उद्योगपर्वणि भगवद्याने भीमसेनवाक्यम्—'यथा यथैव शान्तिः स्यात्कुरूणां मधुसूदन। तथा तथैव भाषेथा मा स्म युद्धेन भाषथाः ॥' इत्यादि ॥

इत्थं संध्याशान्तं दधतं सवितारमिव संध्याशां तम् ।
ऊचे भीमं देवः स्मित्वा तव बुद्धिरद्य भीमन्देव ॥ ८८ ॥

इत्थमनेन प्रकारेण संध्याशान्तं संध्यासमये अशान्तो दिगन्तः तं दधतं सवितारं सूर्यमिव संध्याशां संधौ कुरुभिः सह मिलने या आशा अभिलापः तं दधतं भीमं भीमसेनं स्मित्वा ईषद्धसित्वा देवः श्रीकृष्णः भीममूचे । किमित्याह—हे भीम, अद्य तव बुद्धिः भीमन्दा इव भिया मन्दा तरला अल्पा इव दृश्यते । कातरमिव वदसीत्यर्थः ॥

शतमहितानामवृथा हन्तुं किल सापि वाक्कृता नाम वृथा ।
वदसि हि संधातुं गा भवतो बत भीम संधा तुङ्गा ॥ ८९ ॥

हे भीम, किल निश्चये त्वम् अहितानां शत्रूणां धृतराष्ट्रपुत्राणां दुर्योधनादीनां शतं हन्तुम् अवृथा वरणं प्रतिज्ञारूपमकृथा इत्यर्थः । हे भीम, सापि वाक् प्रतिज्ञारूपा नाम निश्चये वृथा त्वया कृता । यतः संधातुं हि निश्चये गा वाचो वदसि बत विस्मये । हे भीमसेन, भवतस्तव संधा प्रतिज्ञा तुङ्गा महती अस्ति ॥

अपि शङ्केऽलाबूनां मज्जनमेतद्यदाजिकेलावूनाम् ।
बुद्धिं भीमाद्यासि त्वरितो ननु संयुगाय भीमाद्यासि ॥ ९० ॥

हे भीमसेन, अहमेतदलाबूनां तुम्बीनामपि मज्जनं ब्रुडनं शङ्के । एतत्किम् । हे भीम, त्वं यत् आजिकेलौ समरक्रीडायाम् । केलिशब्दो हेलातिवादद्योतकः । भीमात् रणाङ्गणे भयानकात् भीमात् भीमसेनाच्च ऊनां बुद्धिं यत् यासि गच्छसि तत् अलाबूनां मज्जनमेव शङ्के इत्यर्थः । तुच्छं खलु सदैवोन्मज्जति न खलु निमज्जति । अतस्तत्सदृशमेतदित्यर्थः । भीमादिति वचनं त्वं तस्माद्भीमादन्यः को[ऽपि] भीमोऽसीत्यर्थम् । ननु निश्चये । तथा हे भीम, अद्य संयुगाय युद्धाय त्वरितः यच्च नासि । तत्तुम्ब्या इव मज्जनमित्यर्थः । तथा चोद्योगपर्वणि भगवद्याने भीमं प्रति श्रीकृष्णवाक्यम् । 'अभूतपूर्वं भीमस्य मार्दवोपगतं वचः । गिरेरिव लघुत्वं च शीतत्वमिव पावके ॥' इत्यादि ॥

इति रभसेनोवाच श्रुत्वा कृष्णस्य भीमसेनो वाचः ।
तुष्टो भव दाशार्ह स्यात्समरः सद्य एव भवदाशार्हः ॥ ९१ ॥

इत्यनेन प्रकारेण कृष्णस्य श्रीकृष्णस्य वचः श्रुत्वा रभसेनोत्कण्ठया भीमसेन उवाच। वक्ष्यमाणमिति शेषः । हे दाशार्ह दशार्हाणां जनपदानामीशः तत्संबोधनम् हे कृष्ण, त्वं तुष्टो भव समरो रणः सद्य एव भव दाशार्हः भवदाशां त्वदीयाभिलाषमर्हतीति तादृशः । त्वदीयेच्छानुरूपः सद्य एव भवितेत्यर्थः ॥

विदलितमस्तककुम्भिव्रातभ्रमणभ्रमत्समस्तककुम्भि ।
ऊरुबलकङ्करवाणि प्रधनान्यचिराद्भयानकं करवाणि ॥ ९२ ॥

हे भगवन् श्रीकृष्ण, अहमेवंविधानि प्रधनानि युद्धानि अचिरात् शीघ्रमेव करवाणि कुर्वे । कथं कृत्वा । भयानकं घोरम् । क्रियाविशेषणमेतत् । कीदृशानि युद्धानि । विदलितानि मदवशाद्भिन्नानि मस्तकानि येषां ते तादृशश्च ते कुम्भिनश्च गजास्तेषां व्रातं तस्य भ्रमणं तेन भ्रमन्त्यो भ्रममाणा दश ककुभो दिशो येषु तानि विदलितमस्तककुम्भिव्रातभ्रमणभ्रमत्समस्तककुम्भि । पुनः कीदृशानि । उरुवलकङ्करवाणि उरुवला ये कङ्काः महाबलाः पक्षिविशेषाः रणहतलोकमांसाशाया आगतास्तेषां रवः शब्दो येषु तानि च ॥

रणभुवि केशव सासृक्पङ्कपुरीतत्कपालकेशवसासृक् ।
जवभागदयालूनां द्विषां ततिं पातयामि गदया लूनाम् ॥ ९३ ॥

हे केशव श्रीकृष्ण, अहं रणभुवि संग्रामभूमौ गदया आयुधविशेषेण लूनां कृत्तां द्विषतां ततिं रिपुश्रेणीं पातयामि धरणौ लोठयामि । कीदृशोऽहम् । सह असृक्पङ्केन रक्तकर्दमेन वर्तन्ते यास्ताः सासृक्पङ्काः पुरीतत्कपालकेशवसाः पूर्यते पुरीतत् अन्त्रं तान्तोऽयं शब्दः पुरीतन्ति अन्त्राणि कपालाः शिरोऽस्थीनि केशाः कचाः वसा देहिनां धातुविशेषश्च ताः सासृक्पङ्काश्च ताः पुरीतत्कपालकेशवसास्ताः सृजति उत्पादयतीति सासृक्पुरीतत्कपालकेशवसासृक् । पुनः कीदृशः । जवभाक् वेगभाक् । द्विषतां कीदृशानाम् । अदयालूनां न दयालवः तेषां क्रूराणाम् ॥

इति कृतपारुष्यं तं निगदन्तं गाश्च निष्कृपा रुष्यन्तम् ।
अरिदुःसहसंनाहः स्मित्वा पुरुषोत्तमः स्म स हसन्नाह ॥ ९४ ॥

इत्यनेन प्रकारेण कृतपारुष्यं कृतं पारुष्यं परुषभावो येन स तं निष्कृपाः कृपाशून्याः गाः वाचश्च निगदन्तं जल्पन्तं रुष्यन्तं तं भीमसेनं रुष्टमिव हसन् पुरुषोत्तमः श्रीकृष्णः स्मित्वा ईषद्धसित्वा आह स्म जगाद । कीदृशः । अरिभिः दुःसहः दुःखेन सह्यः संनाहो युद्धाय सज्जीभवनं यस्य सः अरिदुःसहसंनाहः ॥

न वचो मेऽवज्ञेयं भीम भवद्दीपनार्थमेव ज्ञेयम् ।
क्रुद्धधिया ननु भवता वध्या रिपवस्तदपनयाननुभवता ॥ ९५ ॥

हे भीम, भवता मे मम वचः न अवज्ञेयं न अवगणनीयम् । हे भीम, तद्वचो मे मम भवद्दीपनार्थं भवदुत्साहनार्थमेव भवता ज्ञेयम् । ननु निश्चये । तदपनयान् तेषां कुरूणां ये अपनयाः कुनयाः द्रौपदीकेशाकर्षणनगरनिर्वासनाद्यपनयनाननुभवता भवता तत्स्मरणात् क्रुद्धधिया अतिक्रुद्धधिया रिपवः शत्रवो वध्याः ॥

इति कृतसंनाहरये कृष्णे गमनाय तदनु सन्ना हरये ।
हृदयं सारोदारं ध्वनती कृष्णा समेत्य सारोदारम् ॥ ९६ ॥

एष दयालो केशः स्मार्यः संधित्सता त्वया लोकेश ।
इति कलिताधि कवर्या भारं पुरोऽदर्शयत्स्थिताधिकवर्या ॥ ९७ ॥
(युग्मम्)

इत्यनेन प्रकारेण गमनाय कुरून् प्रति दूतकर्म(र्तृ)त्वगमनाय कृतसंनाहरये कृतः संनाहरयः सज्जीभवनवेगो येन स तादृशे कृष्णे सति तदनु तदनन्तरं कृष्णा द्रौपदी हरये श्रीकृष्णाय समेत्य उपागत्य अरमत्यर्थं सारोदा सह आरोदेन रुदनेन वर्तते या सा सारोदा रुदती सती सारेण तत्त्वज्ञानसारेण उदारं महत् हृदयम् अर्थात् भगवतः श्रीकृष्णस्य सव्यथं सदयं च कुर्वती इत्युक्त्वा केशवेषस्य भारं कचभारं पुरःस्थिता सती हरये श्रीकृष्णाय अदर्शयत् । कलिताधि कलितो धृतः आधिर्मनःपीडा यत्र तत् । क्रियाविशेषणमेतत् । कीदृशी द्रौपदी । अधिकवर्या अधिकं वर्या प्रशस्या । किमित्युक्त्वा हे लोकेश लोकानां भूर्भुवःस्वरादीनामीशः स्वामी तत्संबोधनम् । त्वया स्वामिना संधित्सता तैर्दुष्टैः कुरुभिः सह अस्मदीयान् निरपत्रपान् संधातुमिच्छता हे दयालो दयाप्रधान एष केशः मदीयोऽपि सभाविषये तादृशानर्हविधिना दुरात्मभिः अवमानितः स्मार्यः । तैः क्रूराशयैः सह संधानं किं युक्तमिति भगवन्त एव प्रमाणमिति भावः । तथा च उद्योगपर्वणि भगवद्याने श्रीकृष्णं प्रति द्रौपदीवाक्यम्—'सर्वलक्षणसंपन्नं महाभुजगवर्चसम् । केशपक्ष्यं वरारोहा गृह्य वामेन पाणिना ॥ पद्माक्षी पुण्डरीकाक्षमुवाच गजगामिनी । अयं ते पुण्डरीकाक्ष दुःशासनकरोद्धतः । स्मर्तव्यः सर्वकालेषु परेषां संधिमिच्छता ॥' इत्यादि ॥

अथ भगवान् श्रीकृष्णः द्रौपदीं सान्त्वयन्नाह—

प्रवरे सन्नारीणामचिराद्द्रक्ष्यसि वधं प्रसन्नारीणाम् ।
इति परदेवनतान्तामाश्वासयदच्युतः पदेऽवनतां ताम् ॥ ९८ ॥

प्रवरे सत्यः पतिव्रता या नार्यः तासां प्रवरे आद्ये त्वं प्रसन्ना प्रसन्नवदना अरीणां दुर्योधनादीनां वधं नाशमचिरात् शीघ्रमेव द्रक्ष्यसि नात्र संदेहः । इत्यनेन प्रकारेण पदे चरणकमले अवनतां नम्रां तथा परदेवनतान्तां परैः शत्रुभिः स यद्देवनं द्यूतं स्वभर्तृभिः कृतं तेन तान्तां खेदितां तां तादृशीं द्रौपदीमाश्वासयत् ॥

स च रथमहितापीडं ध्वजं दधानं पतङ्गमहितापीडम् ।
काञ्चनदारुकशालीकृतमधिरूढो जगाम दारुकशाली ॥ ९९ ॥

स च भगवान् श्रीकृष्णः अहितापीडम् अहीन् सर्पान् तापयतीति अहितापिनी इडा वाक् यस्य स अहितापीडः तम् । 'गोभूवाचस्त्विडा इलाः' इत्यमरः । तथा अहितापीडं अहितान् शत्रूनापीडयति तादृशं पतङ्गं पक्षिणं विशेषणसामर्थ्याद्गरुडं पक्षिराजं

---

१. 'परिदेवन' मूल०.

ध्वजे ध्वजविषये दधानं रथम्। 'शालिप्रभेदे शलभे पतङ्गः पक्षिसूर्ययोः' इति मङ्खः। तथा काञ्चनदारुकशालीवृतं काञ्चनमेव दारु अर्थाद्द्रव्यं तन्मयाः कशा वल्गास्ताभिर्वृतस्तादृशं रथमधिरूढः सन् जगाम। हास्तिनपुरमिति शेषः। कीदृशः सः। दारुकः दारुकनामा श्रीकृष्णसारथिः तेन शालते तच्छीलः। तथा च उद्योगपर्वणि भगवद्याने— 'ते हया वासुदेवस्य दारुकेण प्रचोदिताः। पन्थानमाचेमुरिव ग्रसमाना इवाम्बरम्॥' इत्यादि॥

पथि जनता पाद्यस्य प्रगृह्य पात्रं प्रसन्नतापाद्यस्य।
भक्तिनता पाद्यस्य प्रान्तं नन्ता व्यपैति तापाद्यस्य॥ १००॥

हास्तिनपुरं प्रस्थितस्य आद्यस्य तस्य भगवतः श्रीकृष्णस्य पथि मार्गे भक्तिनता भक्त्या नता प्रह्वा सती जनता जनानां समूहः प्रसन्नतापाद्यस्य प्रसन्नतया आपाद्यस्य प्रतिपाद्यस्य पाद्यस्य पञ्चाङ्गस्य पात्रं पाद्यपात्रं प्रगृह्य आप। सविधमिति शेषः। तस्य भगवतः कस्येत्याह—नन्ता नमतीति नन्ता यस्य प्रणमन् पुरुषस्तापात्रिविधदुःखात् आधिदैविकाधिभौतिकाध्यात्मिकरूपात् प्रान्तं प्रकर्षेणानिर्वृत्या अन्तः प्रान्तस्तं व्यपैति। प्राप्नोति। तस्मान्मुक्तिं लभते इत्यर्थः॥

प्रमुदितपौरवरसदः स हास्तिनपुरं समेत्य पौरवरसदः।
वसतिं वासायातः क्षत्तुर्भक्तस्य पीतवासा यातः॥ १०१॥

पौरवरसदः पौरवाणां पुरुराजवंशानां कुरुपाण्डवानां रसं संधिरूपं ददाति तादृशः सन् पीतवासाः पीताम्बरः श्रीकृष्णः प्रमुदितपौरवरसदः प्रमुदितानां पौरवराणां पौरश्रेष्ठानां सदः सभा यस्मिंस्तत् तादृशं हास्तिनपुरं समेत्य अतोऽनन्तरं वासाय वसतये भक्तस्य सदाभावितस्य क्षत्तुः विदुरस्य वसतिं गृहं यातः॥

तत्र च परमायस्तां पितृष्वसारं निरस्तपरमायस्ताम्।
शोकान्धामापादौ तस्याः प्रणनाम च त्रिधामा पादौ॥ १०२॥

तत्र च हास्तिनपुरे निरस्तपरमायः निरस्ता दूरीकृता परा उत्कृष्टा माया अनात्मनि देहादावप्यात्मज्ञानरूपा येन स तादृशः परमायस्तां परमतीवायस्तां सुतानां युधिष्ठिरादीनां वनवासादिक्लेशं स्मृत्वा अतीव खिन्नां तथा शोकान्धां पितृष्वसारं कुन्तीमादौ प्राप। प्रथमं तत्समीपं गत इत्यर्थः। स च त्रिधामा त्रीणि ब्रह्मविष्णुरुद्ररूपाणि धामानि तेजांसि यस्य स त्रिधामा प्रणवः प्रणवाख्यं पदं श्रीकृष्णः। यद्वा त्रयः अकारोकारमकाररूपा वर्णा ब्रह्मादिवाचका धाम स्थानं यस्य त्रिधामा प्रणवः प्रणवाख्यं पदं परमात्मवाचकमतस्त्रिधामा श्रीकृष्णस्तस्याः पितृष्वसुः कुन्त्याः पादौ च प्रणनाम अभ्यर्हितत्वात्तस्याः॥

प्राणसमानमनन्तं कुन्ती परिरभ्य कृतसमानमनं तम्।
अरुदत्कंसाराते क्व दया मत्सुतगताधिकंसारा ते॥ १०३॥

कृतसमानमनं कृतं सम्यक् यथार्हमानमनं प्रणामो येन स तम् तथा प्राणसमानमतीवस्नेहपात्रं श्रीकृष्णं परिरभ्य परिष्वज्य कुन्ती अरुदत् रुरोद । किमवददित्याह—हे कंसाराते भगवन् श्रीकृष्ण, अधिकमत्यर्थं सारा श्रेष्ठा ते तव मत्सुतगता मत्सुतान् युधिष्ठिरादीन् गता दया क्वास्ते ॥

इत्थं सारोदान्तामाश्वास्य जनार्दनोऽथ सारोदां ताम् ।
भुक्त्वान्नं विदुरस्य न्यवसत्प्रियमीदृशं जनं विदुरस्य ॥ १०४ ॥

इत्थमनेन प्रकारेण सारोदान्तां सारां श्रेष्ठां तथा उद्दान्तामुच्चैरतिशयेन दान्तां दमप्रधानां तथा सारोदां रुदतीं च पितृष्वसारं कुन्तीमाश्वास्य यथोचितवचोभिः सान्त्वयित्वा विदुरस्य गृहे अन्नं भुक्त्वा तत्रैव न्यवसत् । अत्रैतत्संवादायार्थान्तरन्यासमाह—पण्डिता यतो भगवतः श्रीकृष्णस्य प्रियमीदृशं जनं विदुरवद्वाड्मनःकर्मभिस्तदेकभावितं प्रियमतिप्रियं विदुः अतस्तद्गृहे भोजननिवसनादि व्यवहारं भगवानकृतेत्यर्थः ॥

सममाप क्षत्त्रा स प्रातः समितिं कृतारिपक्षत्रासः ।
उदधिसमाने तुङ्गां जगाद जनने संधिमानेतुं गाम् ॥ १०५ ॥

स श्रीकृष्णः क्षत्त्रा विदुरेण समं प्रातः प्रभाते समितिं सभां कुरुसभामाप । कीदृशः। कृतारिपक्षत्रासः कृतः अरिपक्षस्य त्रासो येन । उदधिसमाने समुद्रतुल्ये विस्तीर्णतया अत्र सदसि जने कुरुपाण्डवजने संधिं विधातुं तुङ्गां महतीं महार्थां च वाचं जगाद उक्तवान् । उदधिसमाने गाम्भीर्येण समुद्रतुल्ये अत्र जने कुरुजने वा संधिं विधातुम् । शेषं प्राग्वत् ॥

भगवान् श्रीकृष्णः संधिं कर्तुकामः कुरून् किमवोचदित्याह—

मतिबलमानयशोभी रुचिरः सत्त्वक्षमारमानयशोभी ।
वंशो वै रमणीयः पौरव भवतां न वैरमणीयः ॥ १०६ ॥

हे पौरव पुरुवंशज धृतराष्ट्र, वै निश्चये भवतां वंशः रमणीयः सर्वथा । तदेवाह—कीदृशः । रुचिरो रम्यः । कैः । मतिबलमानयशोभिः मतिः कार्याकार्यविवेकः बलं च मानोऽभिमानश्च यशश्च तैः । पुनः कीदृशो वंशः । सत्त्वं धैर्यं क्षमा क्षान्तिश्च रमा लक्ष्मीश्च नयो नीतिश्च शोभते तैस्तच्छीलस्तादृक् तदेवं सर्वथा भवतां वंशो रमणीयः । अत्र वंशेऽणीयः अणुतरमपि वैरं न रमणीयं रमणीय इत्यत्रोद्दिष्टेऽपि रमणीयमिति लिङ्गविपरिणामेन संबन्धः ॥

भगवान् पुनरपि धृतराष्ट्रं किमवोचदित्याह—

---

१. 'उद्दान्ताम्—उच्चैरतिशयेन आन्तां रुग्णाम् । पीडितामिति यावत् ।' इत्यङ्गीकार एव मूलानुकूल्यम्.

इह महितेऽनाशास्यात्तवापराधान्महीपते नाशा स्यात् ।
जगति हि स मुदा रमते बन्धुरतं यस्य मानसमुदारमते ॥१०७॥

हे महीपते राजन्, इह वैरे अणीयस्यपि महिते पूजिते अनाशा स्यात् अस्पृहणीयात्तव अपराधात्तैः पार्थैः सह वैरकरणाद्धेतोः नाशः अर्थात्तव वंशस्य नाशः स्याद्भवेत् । हि निश्चये स पुमान् जगति संसारे मुदा हर्षेण रमते । स कः इत्याह—हे उदारमते महामते यस्य मानसं बन्धुरतं बन्धुषु रतं लीनं तदेकभावं भवति ॥

अपि सततं चेष्टन्ते धृतराष्ट्र पृथासुता हितं चेष्टं ते ।
नियतं पदयातेषु क्रियतां भवतापि भूमिप दया तेषु ॥ १०८ ॥

हे धृतराष्ट्र, यत्ते हितं च इष्टं च भवति तदेव तेऽपि पृथासुताः पार्थाः चेष्टन्ते चेष्टां व्यवहाररूपां कुर्वन्ति । तस्मात् हे भूमिप हे महीपाल, पदयातेषु चरणगतेषु तेषु पार्थेषु भवता त्वयापि नियतं निश्चितमेव दया विधेया ॥

नियतं माता तातस्त्वमेव तेषां विरुन्धि मा ताताः ।
मुदितमना नामर्धं दिश तेभ्यो राज्यगृहपनानामर्धम् ॥ १०९ ॥

हे धृतराष्ट्र नृप, त्वमेव तेषां पार्थानां माता असि मात्यस्यां गर्भे इति माता जनयित्री तथा त्वमेव तातः पितासि । तनोति कुलं तातः हे तात पूज्य, अतस्त्वमेषां मा विरुन्धि विरोधं मा कुरु । 'तातः पूज्यश्वशुरयोरपि' इति मङ्खः । नाम निश्चये । त्वं मुदितमना हृष्टचेताः सन् ऋद्धं समृद्धं राज्यगृहं धनानामर्धं राज्यं च गृहं च धनं च तेषामर्धं दिश देहि ॥

दत्त्वा राज्यांशमदः कुलं च परिपाल्य शत्रुराज्यां शमदः ।
पथि परिकल्पय शस्ते पाण्डुसुतं पाहि देवकल्प यशस्ते ॥ ११० ॥

हे धृतराष्ट्र, त्वं शत्रुराज्यां शत्रूणां राजी पङ्क्तिस्तस्यां शमदः शमयिता त्वं तेभ्यः राज्यांशं स्वकीयराज्यस्य अंशः तं दत्त्वा अद एतत्कुलं च परिपाल्य तैः सह संधेरित्यर्थः । त्वं शस्ते पथि अर्धराज्यप्रतिपादनरूपे पाण्डुसुतं युधिष्ठिरं परिकल्पय स्थापय । हे देवकल्प ईषदसमाप्तो देवो यस्मात्स तस्य संबोधनम् । ते तव यशः त्वमेव पाहि रक्ष ॥

एवं धृतराष्ट्रनृपं प्रशाम्य भगवान् दुर्योधनमपि प्रशामयति—

त्वं च सुयोधन मत्तः शृणु गिरमपगच्छति श्रियो धनमत्तः ।
तस्मादंशस्तेभ्यः प्रदीयतां तरितुमापदं शस्तेभ्यः ॥ १११ ॥

हे सुयोधन दुर्योधन, त्वं च मत्तः मत्सकाशात् गिरं वाचं शृणु धनमत्तः धने मत्तः तदेकलग्नः अतिलुब्धः श्रियः लक्ष्म्या अपगच्छति दूरीभवति । शीघ्रमेवेत्यर्थः । तस्मात्

हेतोः शस्तेभ्यः भव्येभ्यस्तेभ्यः पाण्डवेभ्यः आपदं निजनाशरूपां विपदं तर्तुं तेभ्यः अंशः स्वकीयराज्यांशः प्रदीयताम् ॥

इदमपि दुर्योधन ते वदाम्यहं विदितमस्तु दुर्योधनतेः ।
राज्यमहार्यं तेभ्यस्तव जीवत्यर्जुने महार्यन्तेभ्यः ॥ ११२ ॥

हे दुर्योधन, अहं वदामि वच्मि दुर्योधनतेः दुर्योधानां कुशूराणां शकुन्यादीनां नतिः प्रणामो यस्य स तस्य ते विदितमस्तु । जीवति किरीटिनि अर्जुने सति महार्यन्तेभ्यः महारीणां महारिपूणामन्तेभ्यः नाशसदृशेभ्यः एभ्यः पार्थेभ्यः सकाशात् तव कर्तुः राज्यमहार्यं न हर्तुं शक्यम् । 'तव्यानीययकाराणां षष्ठी कर्तरि वा स्मृता' इति कर्तरि षष्ठी । अत्र अर्जुने इति पृथङ्निर्देशस्तेभ्यः सर्वेभ्योऽपि नरांशत्वेन महापराक्रमित्वद्योतनार्थः ॥

अधुना पार्थस्यैव महापराक्रमित्वं दुर्योधनाय स्मारयति भगवान्—

पतितं तोयदवारि स्फुरितैरिषुभिः समन्ततो यदवारि ।
धाम मतावध्यस्य ध्येयमनेनैव रिपुशतावध्यस्य ॥ ११३ ॥

अर्जुनेन खाण्डवदाहे स्फुरितैर्घनपञ्जरतया प्रक्षेपितैः इषुभिः शरैः पतितं सत् तोयदवारि इन्द्रेण कारितवृष्टिजलं समन्ततः परितः पतत् यदवारि दूरीकृतं तन्मतौ बुद्धौ अध्यस्य आरोप्य अनेनैव दृष्टिवारणेन अस्यार्जुनस्य धाम तेजः भवता ध्येयं चिन्तनीयम् । किंभूतस्यास्य । रिपुशतावध्यस्य रिपुशतेन शत्रुशतेनावध्यस्य हन्तुमशक्यस्य । 'रिपुमतावध्यस्य' इति पाठे रिपूणां शत्रूणां यन्मतं तद्वधायैकीभावाभिलापस्तेनावध्यस्य हन्तुमशक्यस्य ॥

न विदितमङ्ग तवान्यत्किं स हरेणापि सङ्गमं गतवान्यत् ।
तद्रभसं यच्छ मनः प्रयच्छ राज्यं च दत्तसंयच्छमनः ॥ ११४ ॥

अङ्ग हे दुर्योधन, तव तत् अन्यत् तस्य अद्भुतं कर्म किं न विहितम् । अपि तु विदितमित्यर्थः । तत्किमित्याह—सोऽर्जुनः हरेणापि प्रलये कृत्स्नं हरतीति हरः त्रैलोक्यनाथः तेनापि लीलाकिरातवेषेण यत्संगमं स्पर्धारूपं गतवान् । तत्तस्मात्कारणात् रभसं वृथावद्धसाहसं मनः यच्छ देहि त्यज । दूरीकुर्वित्यर्थः । राज्यं च तेभ्यः प्रयच्छ । कीदृशस्त्वम् । दत्तसंयच्छमनः दत्तं कृतं संयते युद्धस्य शमनं येन स तादृक् ॥

अपि विरसं ग्रामाणां पञ्चकमथ वा शमाय संग्रामाणाम् ।
तेभ्यः पौरव देहि प्रीतिं प्रीतेषु पौरवदेहि ॥ ११५ ॥

हे दुर्योधन, अथ वा संग्रामाणां रणानां प्रशमाय विरसं तुच्छं ग्रामाणामिन्द्रप्रस्थादीनां पञ्चकमपि अथ वा देहि । हे पौरव पुरुनृपवंशज, त्वमेषु प्रीतेषु एतावतैव सवि-

१. 'गता' मूल०. २. 'संगरं' मूल०.

नयत्वात्तुष्टेषु त्वं पौरवत् पुरवासिजनवत् प्रीतिं हर्षमेहि । यथा पौरास्तेषु हृष्टास्तथा त्वमपि भवेत्यर्थः ॥

कृतविरमायामुक्तौ कृष्णस्यैवं क्षणेन मायामुक्तौ ।
वृद्धौ महितावार्यौ भीष्मद्रोणावथो न महितावार्यौ ॥ ११६ ॥
सोदरमध्यगमन्ये तथैव सुहृदः समाजमध्यगमन्ये ।
अधिकतरामर्षिभ्यां सार्धमयाचन्त कण्वरामर्षिभ्याम् ॥ ११७ ॥

एवमनेन प्रकारेण कृष्णस्य भगवतः कृतविरमायां कृतः विरमो विरामो यया सा तादृश्यां सत्यां क्षणेन मायाया अहन्तारूपायाः सर्वेषां मुक्तौ सत्यामार्यौ ज्येष्ठौ महितौ पूजितौ वृद्धौ वयोवृद्धौ च भीष्मद्रोणौ । कीदृशौ । अहितावार्यौ शत्रूणामवार्यौ न निवारयितुं शक्यौ । तथा ये अन्ये सुहृदो मित्राणि समाजं सभामध्यगमन् प्राप्ताः । ते च अधिकतरामर्षिभ्यां कण्वः कण्वाख्यऋषिः रामर्षिश्च जामदग्न्यः ताभ्यां सह सोदर्यमध्यगं भ्रातृमध्यगतं तं दुर्योधनमयाचन्त । श्रीभगवदुक्तवाक्यमन्वमोदन्तेत्यर्थः ॥

तत्र समक्षमवाचां सुहृदां दुर्योधनं समक्षमवाचाम् ।
निजसुतमुत्तमया च त्वरया नृपतिर्निरस्तमुत्तमयाचत् ॥ ११८ ॥

नृपतिः राजा धृतराष्ट्रः समक्षमवाचां समा सदृशी क्षमा हिता वाक् । शसयोरैक्यात् । समेन शमेन क्षमा हिता वाक् येषां ते तादृशानां तत्र सभायां समक्षं प्रत्यक्षमवाचामवाङ्मुखानां किंत्वेष दुर्बुद्धिर्दुर्योधनः कथयिष्यतीति शङ्कया सचिन्तमवनतमुखानां सुहृदां मध्ये उत्तमया अधिकया च त्वरया शीघ्रमेव तं निजसुतं दुर्योधनमयाचत् ययाचे । कीदृशो नृपतिः । निरस्ता दूरंगता निजसुतस्य दुष्टबुद्धित्वशङ्कया मुत् हर्षो यस्य स तादृक् ॥

धृतराष्ट्रो निजसुतं दुर्योधनं किमयाचदित्याह—

शृणु सुत सामान्यस्य त्वं शौरेः सर्वलोकसामान्यस्य ।
शुभमनसा मान्यस्य स्वान्तं खलु[1] वाचि रंहसा मा न्यस्य ॥ ११९ ॥

हे सुत सुवति सुतः पुत्रः तत्संबोधनं सर्वलोकसामान्यस्य सर्वलोकेषु स्वकीयपरकीयलोकेषु यद्वा सर्वलोकेषु त्रिजगद्विषयेऽपि सामान्यस्य माध्यस्थद्रष्टृत्वरूपतया स्थितस्य परमात्मरूपस्य । तथा च सांख्यसप्ततौ—'कैवल्यं माध्यस्थं द्रष्टृत्वमकर्तृभावश्च' इति । एवंविधस्यापि शौरेः श्रीकृष्णस्य भगवतः सामानि चाटूनि शृणु । पुनः कीदृशस्य । शुभमनसा विशुद्धचेतसा मान्यस्य पूज्यस्य । हे सुत, अस्य च शौरेर्वाचि स्वान्तं मनः रंहसा वेगेन मा न्यस्य मा निधेहि । न्यस्य इति क्रिया । शनैः स्थिरीकृत्य एतद्वाचि मनो निधेहीत्यर्थः ॥

---

१. 'खलवाचि' इति मूलपाठे 'कर्णादिवचने' इति टिप्पणी.

अथ हरिमानीतान्तःशुचा गुरुव्याहृतेन मानी तान्तः ।
सुहृदां तापन्यायं वाचा निजगाद साधितापन्यायम् ॥ १२० ॥

अथानन्तरमानीतान्तःशुचा आनीता उत्पादिता अन्तःशुक् पार्थप्रस्तावनारूपा येन तत्तादृशेन गुरुव्याहृतेन धृतराष्ट्रवचनेन तान्तः खिन्नः मानी अभिमानवान् अयं दुर्योधनः सुहृदां मित्राणां तापन्या संतापकारिण्या वाचा साधितापन्यायं [कृत्वा] साधिताः स्वबुद्ध्या उल्लेखिता अपन्यायाः कुन्याया यत्र तत् । क्रियाविशेषणमेतत् । हरिं श्रीकृष्णं जगाद ॥

दुर्योधनः श्रीकृष्णं किमवोचदित्याह—

यादव मान्यङ्केन न्याये तिष्ठन्तमेव मान्यं केन ।
सकलजना गर्हन्ते श्रोतुं तद्वाक्यमपि मनागर्हं ते ॥ १२१ ॥

हे यादव यदुवंशज श्रीकृष्ण, मान्यङ्केन मानिनोऽङ्कश्चिह्नं तेन । मानिनोऽभिनयेन न्याये तिष्ठन्तं मानिनमिव स्वात्मानं प्रकाशयन्तमित्यर्थः । तथा केन पुरुषेण मान्यम् । न केनापि । एवंविधं पुरुषं सकलजना गर्हन्ते निन्दन्ते । हे यादव, तद्वाक्यमपि तेषां तादृशानां पार्थानां वाक्यमपि मनाक् श्रोतुमर्हं युक्तम् । काक्वा नार्हमित्यर्थः ॥

दुर्योधनः पुनः कृष्णमुत्तरयति—

वसुधा मे नाम पितुः श्रितवान्पाण्डुस्तदर्थमेनामपि तु ।
तद्दायादस्येयं कथं भवेन्नैव तां भयादस्येयम् ॥ १२२ ॥

हे कृष्ण, आदौ नाम निश्चये मे मम पितुः ज्येष्ठत्वाद्वसुधा अस्ति तां च तदर्थं स एको मत्पितुरन्धत्वरूप एकोऽर्थो यत्र तत् । क्रियाविशेषणमेतत् । तदन्धत्वैकापाध्यर्थमित्यर्थः । एनां वसुधां भूमिं पाण्डुः श्रितवान् । तस्मात्तद्दायादस्य कनिष्ठपाण्डुपुत्रस्य कथमियं भूमिर्भवेत् । 'दायादौ सुतबान्धवौ' इत्यमरः । हे यादव, अहं भयात्कस्यचिद्भयात् तां भूमिं स्वपितुः ज्येष्ठत्वक्रमागतां नैव अस्येयम् न क्षिपामि न त्याज्येयम् । 'असु क्षेपणे' धातुः ॥

अपि च निगूढो वासः पणितः पार्थैर्न सम्यग्गूढो वासः ।
दापयितावन्या यस्तस्मादस्मासु कः स तावन्न्यायः ॥ १२३ ॥

हे यादव, पार्थैर्युधिष्ठिरादिभिः निगूढो वासः वर्षैकपर्यन्तं गुप्तस्थितिरूपः पणितः द्यूते पणीकृतः । वा पणीकृतश्च । वाशब्दश्चार्थे । स च तैर्न सम्यग्गूढो धृतः । अधुनापि तत्समयस्य किंचिदवशिष्टत्वात् । तस्माद्धेतोः तदनिर्वाहाद्धेतोः यः न्यायस्तेषां पार्थानामवन्या भूमेः दापयिता स तावत् अस्मासु न्यायः कः ॥

प्रवृणे यादव निधनं न ददामि स्वल्पमपि भयादवनिधनम् ।
समरे सन्नाशङ्कः क्षत्रयुवा नार्थयते सन्नाशं कः ॥ १२४ ॥

हे यादव श्रीकृष्ण, निधनं मरणमप्यहं प्रवृणे स्पृहयामि। न पुनः स्वल्पमपि अत्यल्पमपि अवनिधनं भूमिरूपं धनं ददामि। सन्नाशङ्कः सन्ना आशङ्का देहादिशैथिल्यरूपा यस्य सः। स्वस्थ इत्यर्थः। तादृशः कः। क्षत्रयुवा क्षतात्त्रायते इति क्षत्रं क्षत्रयुवा क्षत्रियकुमारः समरे युद्धे सन्नाशं सन् श्लाघ्यो नाशो मरणं नार्थयते नाकाङ्क्षते। अपि तु सर्व एव क्षत्रियकुमारः समरे श्लाघ्यं मरणं काङ्क्षते इत्यर्थः।'जिते च प्राप्यते लक्ष्मीर्मृते चापि सुराङ्गनाः' इति न्यायेन समरे मरणमस्मादृशां वीराणामतिप्रशस्यमेवेत्यर्थः ॥

इत्थं सामोदस्य ब्रुवतः श्रुत्वा वचोऽस्य सामोदस्य ।
वचनं मानवददयं वृष्णिश्रेष्ठोऽथ विकृतिमानवददयम् ॥ १२५ ॥

इत्थमनेन प्रकारेण साम सान्त्वं यथार्हं भगवतः श्रीकृष्णस्य उदस्य दूरीकृत्य ब्रुवतः वक्तुः सामोदस्य सहर्षस्य अस्य दुर्योधनस्य वचः श्रुत्वा विकृतिमान् सक्रोध इव अयं वृष्णिश्रेष्ठः श्रीकृष्णः मानवत् मानसहितम् अदयं दयारहितं च अवदत् जगाद ॥

श्रीकृष्णः दुर्योधनं वचोवाणैस्तुदति—

वाञ्छितमस्तु तवादः प्राप्स्यसि निधनं त्वमेवमस्तुतवादः ।
कः खलु शंसत्येनः स्थितवति धर्मात्मजे भृशं सत्त्वेन ॥ १२६ ॥

हे दुर्योधन, तवादः 'प्रवृणे यादव निधनम्' इत्यादि क्रमेण वाञ्छितं त्वया तत्तथास्तु। यतस्त्वं चैवंप्रकारेण स्वयमेवास्तुतः अप्रशस्तः वादः यस्य स एवंभूतः सन् निधनं प्राप्स्यसि सत्त्वेन कृतेन स्थितवति धर्मात्मजे युधिष्ठिरे कः खलु प्राकृतो जनः एनोऽपराधममङ्गलरूपमपि वा शंसति कथयति ।' न कोऽपीत्यर्थः ॥

'वसुधा मे नाम पितुः' इत्यस्योत्तरमाह—

सत्त्वमितवता तेन क्षितिर्धृता पाण्डुना न तव तातेन ।
तत्र सदासावन्धः पार्थिवभावो भवेद्यदा सावन्धः ॥ १२७ ॥

हे दुर्योधन, सत्त्वं सत्त्वगुणं सात्त्विकभावमितवता तेन पाण्डुना राज्ञा क्षितिर्भूमिर्धृता, न पुनस्तव तातेन जनकेन धृतराष्ट्रेण ज्येष्ठेनापि। अत्र हेतुः—तत्र च असौ तव तातः सदा सर्वदा अन्धस्तामसप्रकृतिः अथ च अन्धः अदृक्। पार्थिवेति। पार्थिवभावः नृपत्वं तदैव भवेत् यदा हि सावन्धः पुरुषो भवेत्। सह आवन्धेन शरीरसावधानत्वेन वर्तते यः स तादृशः ॥

'अपि च निगूढो वासः' इत्यस्योत्तरमाह—

अपि च पराज्ञातेन ध्रुवमुषितं धर्मजेन राज्ञा[1] तेन ।
सकलमिहालोकेन व्यक्तं विज्ञायते महालोकेन ॥ १२८ ॥

हे दुर्योधन, ध्रुवं निश्चये तेन धर्मात्मजेन युधिष्ठिरेण राज्ञा पराज्ञातेन परैर्लोकैर-

1. 'पराज्ञा' कश्मीर०.

ज्ञातेन उषितं निजसमयपरिपालनावधि स्थितम् । इह च जगति महालोकेन महाजनेन सकलमेवैतत् आलोकेन प्रकाशेन व्यक्तं विज्ञायते । निजसमयः प्रतिपालित इत्यर्थः । 'सकलमहालोकेन' इति पाठे—अह अद्भुते खेदे वा । अन्यत्समानम् ॥

अधुना 'प्रघृणे यादव निधनम्' इत्यस्योत्तरमाह—

यैः क्रियते जगति बलादक्षतरक्षोभिमानसारोद्धारः ।
ते पार्थास्तव दर्पे दक्षतरक्षोभिमानसा रोद्धारः ॥ १२९ ॥

हे दुर्योधन, यैः पार्थैरिह जगति अक्षतरक्षोभिमानसारोद्धारः अक्षतः यः रक्षसां राक्षसानामलम्बुसादीनां बकादीनां योऽभिमानसारः तस्योद्धारः तदुन्मूलनं क्रियते । ते पार्था युधिष्ठिराद्यास्तव वराकस्य दर्पे रोद्धारः रोधिष्य(तय)न्ति । गर्वं विनाशयिष्यन्तीत्यर्थः । कीदृशाः । दक्षतरक्षोभिमानसाः दक्षतरम् अतिदक्षं कार्याकार्यविवेकक्षमं क्षोभि भवदपनयस्मरणेन क्षोभयुक्तं मानसं चित्तं येषां ते तादृशाः ॥

अथ पुनरपि पार्थानां महापराक्रमं प्रशंसयन्नाह—

यः सुतरा ज्यायस्तः पतगानां यस्य दृढतरा ज्यायस्तः ।
यो न हराज्यायस्तः स च भीमश्च प्रभू स्वराज्याय स्तः ॥ १३० ॥

हे दुर्योधन, सोऽर्जुनः पतगानां पक्षिणां ज्यायान् गरुडस्तस्मात् पतगानां ज्यायस्तः गरुडात् सुतराः सु शोभनं तरो वेगो यस्य स सुतराः अस्ति । तथा यस्यार्जुनस्य अयस्तः लोहादपि दृढतरा अतिदृढा ज्या मौर्वी धनुषः अस्ति । 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । तथा योऽर्जुनः हराज्यायस्तः न भवति हरस्य किरातवेषधारिणः आजौ संग्रामे आयस्तः खिन्नः न बभूव । स चार्जुनः तथा स च भीमः भीमसेनः उभौ स्वराज्याय स्वकीयराज्याय प्रभू समर्थौ स्तः । स्वहस्तवशगं राज्यं कर्तुं समर्थौ स्त इत्यर्थः । अत्र द्वौ चकारौ द्वयोरपि प्राधान्यावगमाय ॥

अधुना तत्र सभायां प्रत्यक्षं स्थितानपि दुर्योधनपक्षपातिनः महारथान् भीष्मादीन् अर्जुनपराक्रमतिरस्कृतान् वर्णयितुमाह—

यैश्च पुरा सन्नेमे रथतो निद्रावतां धुरा संनेमे ।
ते पुनरासन्ने मे कुर्युर्गाण्डीविनो निरासं नेमे ॥ १३१ ॥

यैर्महारथैः प्रत्यक्षं स्थितैरेतैः पुरा गोग्रहणसमये गाण्डीविनार्जुनेन प्रस्वापनास्त्रे प्रयुक्ते सन्नेमेः सती नेमिश्चक्रान्तभागो यस्य स तादृशात् रथतो रथात् । जातावेकवचनम् । रथेभ्य इत्यर्थः । 'चक्रं रथाङ्गं तस्यान्ते नेमिः स्यात्स्त्री प्रधिः पुमान्' इत्यमरः । रथेभ्यः अवतार्य निद्रावेशात् निद्रावतां निद्रालसानां धुरा अग्यत्वं संनेमे सन्नता लब्धा, यैरेतैः । ते पुनः इमे तव वीरा नेमे अर्धपरिमिताः पुनस्तत्रासन् । नेमे इति नेमशब्दस्य अर्धपर्यायस्य सर्वनाम्नः प्रथमाबहुत्वे रूपम् । तथा च बालबोधिनीवृत्तिप्रकाशे—'केचि-

त्वर्धपर्यायस्यैव नेमशब्दस्य सर्वनामत्वमित्याहुः। 'खण्डेऽर्धः शमले नेमः' इति। त इमे तव वीराः गाण्डीविनः अर्जुनस्य निरासं पराभवं न कुर्युः। न कर्तुं न शक्ता इत्यर्थः। यद्वा त इमे तव वीरा मे मम आसन्ने। आसदनमासन्नं सविधे स्थानम्। 'नपुंसके भावे क्तः'। मत्सविधे मत्सूतभावे गाण्डीविनः निरासं न कुर्युः न कर्तुं शक्ताः॥

इति गिरमुद्राभस्यः श्रुत्वास्य रिपुश्चलत्समुद्राभस्य।
विधुरावनिरासनतः प्रोदपतत्सदसि यादवनिरासनतः॥ १३२॥

इत्यनेन प्रकारेण दुर्योधनश्चलत्समुद्राभस्य उच्चलन् यः समुद्रस्तत्तुल्यस्य क्षोभवतः अस्य भगवतः श्रीकृष्णस्य गिरं वाचं श्रुत्वा उद्राभस्य उद्गतं राभस्यं रभसस्य साहसावेगस्य भावः यस्य स तादृक् सन् सदसि सभायां यादवनिरासनतः श्रीकृष्णनिरासनात् हेतोरासनतः स्वकीयासनात् प्रोदपतत् उदतिष्ठत्। कीदृशः। सक्रोधं वेगेनोत्थानात् विधुरावनिः व्याकुला विधुरा सकम्पा अवनिर्यस्मात्सः॥

अधिकतमाशान्तस्य ज्ञात्वात्मानं निबद्धुमाशां तस्य।
चुक्षोभासुरहा स प्राजृम्भत क्षणेन भासुरहासः॥ १३३॥

अधिकतमाशान्तस्य अधिकतमः अशान्तः न शमप्रधानः। दुराशय इत्यर्थः। तस्य तादृशस्य दुर्योधनस्य आत्मानं स्वं निबद्धुं रोद्धुमाशामभिलाषं ज्ञात्वा असुरहा दैत्यहा श्रीकृष्णः चुक्षोभ क्षोभमगमत्। च पुनः क्षणेन प्राजृम्भत जृम्भामकरोत्। तत्र सदसि स्थितानां भीष्मादीनां स्वकीयविश्वरूपदर्शनायेत्यर्थः। कीदृशः श्रीकृष्णः। भासुरहासः भासुरो दीप्तिमान् अतिस्वच्छः हासो हसितं यस्य सः॥

विश्वरूपदर्शनमाह—

धृतमहिम स्तम्बान्तं ब्रह्माद्यं जगदिदं समस्तं वान्तम्।
आदायानन्तेन स्वजठरभागे ततः शयानं तेन॥ १३४॥

अनन्तेन श्रीकृष्णेन धृतमहिम धृतं महत्त्वं विस्तृतत्वं येन तत् धृतमहिम इदं समस्तं जगत् ब्रह्माद्यं ब्रह्मादिदेवगणादारभ्य स्तम्भान्तं तृणस्तम्भावधि यद्वा ब्रह्माद्यं ब्रह्मभुवनादारभ्य स्तम्भः अधः कालाग्निरुद्रभुवनरूपः तदवधि समस्तं जगदादाय स्वजठरभागे स्वकुक्षिमध्ये शयानं सत् तत्रस्थितानां भीष्मादीनां विश्वरूपस्वैभवसंदर्शनार्थं वान्तं निगीर्णम्। सर्वं प्रकटीकृतमित्यर्थः॥

तत्र च राधेयाद्यः संघो रुचिमच्युतापराधेऽयाद्यः।
अभजत मोहं तान्तः शान्तनवाद्योऽत्यजत्तमोहन्तात्तः॥ १३५॥

तत्र च सभायां यो राधेयाद्यः कर्णाद्यः संघः सार्थः अच्युतापराधे अच्युतस्य अपराधः रोधनरूपः तत्र रुचिमभिलाषमयात् जगाम। स कर्णादीनां समाजः तद्विश्वरूपवैभवं दृष्ट्वा तान्तः खिन्नः मोहं मूर्छामभजत। त्रासेन मुमूर्छ इत्यर्थः। शान्तन-

चेति । हन्त हर्षे । शान्तनोरपत्यं शान्तनवः भीष्मस्तदाद्यः भीष्मद्रोणाद्यः संघः प्राज्ञानां तद्विश्वरूपवैभववेदिनां भीष्मादीनां संघः अन्तर्हृदि मोहमज्ञानरूपं तमः अत्यजत् तदेकतानत्वात्तेषाम् ॥

तत्र च सानन्दानां शिष्याणां मण्डलानि सानन्दानाम् ।
आत्तमहायोगानामवतेरुर्भूतले विहायोगानाम् ॥ १३६ ॥

तत्र च सभायां भगवतो विश्वरूपदर्शनानन्तरं सह आनन्देन वर्तन्ते ये ते सानन्दाः तेषां सानन्दानां रूढ्या सनकसनातनप्रभृतीनां मुनीनां शिष्याणां मण्डलानि समूहा भूतले अवतेरुः । श्रीभगवत्स्तुत्यर्थमित्यर्थः । कीदृशानाम् । आत्तो महान् योगोऽष्टाङ्गो यमनियमादिर्यैस्ते तादृशानाम् । तथा—विहायोगानाम् विहायः गगनं गच्छन्ति तादृशास्तेषाम् । खे गत्वा सिद्धानामित्यर्थः ॥

समितिस्तुष्टाव च सा गदाधरं गद्गदेन तुष्टा वचसा ।
जय जय पङ्कजनेत्र प्रसीद विध्वस्तपङ्क जनेऽत्र ॥ १३७ ॥

सा समितिः सभा । सिद्धानामित्यर्थः । सा तुष्टा सती गद्गदेन हर्षात् मुहुर्मुहुः स्खलता वचसा गदाधरं भगवन्तं श्रीकृष्णं तुष्टाव च अस्तौषीच । किमिति । हे पङ्कजनेत्र पुण्डरीकाक्ष, त्वं जय जय । अत्यादरे वीप्सा । हे विध्वस्तपङ्क विध्वस्तं भक्तानां पङ्कं किल्बिषं येन तत्संबोधनम् । त्वमत्र जने । अस्मल्लक्षणे इत्यर्थः । प्रसीद प्रसन्नो भव ॥

पुनरपि भगवन्तं सिद्धान्तं सभा स्तौति—

इदमपि जन्मान्येभ्यः समस्तदुरितक्षयं व्रजन्मान्येभ्यः ।
अतिसुकृतवदेवाद्य ज्ञातं नो दर्शनेन तव देवाद्य ॥ १३८ ॥

हे देवाद्य देवानां ब्रह्मादीनामाद्यः तत्संबोधनम् । मान्येभ्यः पूज्येभ्यः अन्येभ्यः जन्मभ्यः सकाशात् इदमपि जन्म अर्थात्स्वकीयमद्य अतिसुकृतवदेव अतिपुण्यमेव । नः अस्माकं कर्तॄणां ज्ञातम् । अस्माभिर्ज्ञातमित्यर्थः । केन । एतादृशेन तव दर्शनेन इदं जन्म । कीदृशम् । समस्तदुरितक्षयं सर्वपातकक्षयं व्रजत् गच्छत् । क्षीणसर्वकिल्बिषमित्यर्थः । व्रजदिति क्लीबे प्रथमैकरूपम् ॥

व्यक्तिरसावाध्यातुः स्वच्छज्ञानान्वितस्य सा बाध्या तु ।
शक्तेरज तव देव प्रस्फुरिता शुक्तिकासु रजतवदेव ॥ १३९ ॥

हे अज विष्णो हे देव, तव परमात्मनः शक्तेः मायापरपर्यायायाः सकाशादसौ सा इयं जगद्रूपा आध्यातुः आसमन्तात् विश्वं विष्णुमयं ध्यायतीति आध्याता तस्य स्वच्छज्ञानान्वितस्य सुतरामतिशयेन अच्छं न मायाशबलं यत् ज्ञातं तेनान्वितस्य पुरुषस्य सेयं व्यक्तिः जगद्रूपा बाध्या । सर्वत्रैकं ब्रह्मेति ज्ञानेनेत्यर्थः । किंभूतेयं व्यक्तिः । शु-

१.'वाधा' मूल०.

क्तिकासु मुक्तास्फोटेषु रजतवदेव रूप्यवदेव प्रस्फुरिता आभासिता । यथा शुक्तिकासु रजतज्ञानमसदेव तथा परब्रह्मणि इदमपि दृश्यं नानाविधं जगदसदेवेत्यर्थः । 'मुक्तास्फोटः स्त्रियां शुक्तिः' इत्यमरः ॥

सविकाशं वै जनयन्रजसो रक्षां च महति सत्त्वेऽज नयन् ।
भुवनवितानं तमसि क्षपयन्ननु तत्त्वमच्युतानन्तमसि ॥ १४० ॥

हे अच्युत, कुतोऽपि न च्युतः अच्युतः । निजपदान्नास्ति च्युतं स्खलनमस्य अच्युत इति वा । तत्संबोधनम् । हे अच्युत हे भगवन् हे अज श्रीकृष्ण, ननु निश्चये, त्वं परं चिद्रूपः अनन्तं तत्त्वमेकमेवाद्वितीयं ब्रह्म असि । किं कुर्वंस्त्वम् । रजसो रजोगुणस्य लोभप्रवृत्तिकर्मारम्भाशमस्पृहात्मकस्य सविकासत्वे तमःसत्त्वाभ्यामधिकत्वे सति भुवनवितानं भुवनानां ब्रह्मादिस्तम्भपर्यन्तलोकानां वितानं समूहं रक्षां पालनरूपां नयन् प्रापयन् । विष्णुरूपेणेत्यर्थः । तथा तेनैव प्रकारेण महति रजस्तमोभ्यामधिके सत्त्वे सत्त्वगुणे प्रकाशज्ञानात्मके सति भुवनवितानं जनयन् उत्पादयन् । ब्रह्मरूपेणेत्यर्थः । तथा महति सत्त्वरजोभ्यामधिके तमसि तमोगुणे अप्रकाशाप्रवृत्तिप्रमादमोहात्मके सति भुवनवितानं क्षपयन् नाशयन् । रुद्ररूपेणेत्यर्थः । तदेतद्विष्णुब्रह्मरुद्ररूपतैकमेवाद्वितीयं ब्रह्मासीत्यर्थः । अत्र सत्त्वस्य प्रथममुद्देश्यत्वे रजोगुणस्य प्रथममुद्देशेन यः क्रमभङ्गः कृतः स सर्वथा पालनस्यैवोद्देशत्वात्कवेरभिमतः । यथा श्रीपुष्पदन्तगणविरचिते महिमाख्यस्तवे—'बहुलरजसे विश्वोत्पत्तौ भवाय नमो नमः' इत्यादौ । तत्रापि सर्वथा पालनस्यैवोद्देशत्वात् क्रमभङ्गनिर्देशः ॥

दूरगमक्षरतायाः प्रचक्षतेऽनक्षगम्यमक्षरतायाः ।
रूपं नादमयं ते शब्दे चेतांसि ये जना दमयन्ते ॥ १४१ ॥

हे भगवन्, ते जनाः अक्षरताया अक्षेषु इन्द्रियेषु चक्षुरादिषु रता तस्यास्तादृश्याः अक्षरताया न क्षरति स्वरूपाचलतीत्यक्षमकारोकारमकाररूपं तस्य भावस्तत्ता तस्या दूरगं तदुत्तरभूमिकाभ्यः बिन्द्वर्धचन्द्रनिरोधिनीभ्योऽप्युत्तीर्णत्वान्नादस्य । तथाभिनवगुप्ताचार्यकृते तन्त्रसारे प्रकटीकृतम्—'श्रीसदाशिवः स्वकालपरिक्षये बिन्द्वर्धचन्द्रनिरोधिका आक्रम्य नादे लीयते' इत्यादि । तथा । अनक्षगम्यं न अक्षैः इन्द्रियैश्चक्षुरादिभिर्गम्यं यद्वा अकारादिक्षकारान्ता वर्णा अक्षास्तैर्न गम्यम् । तदुत्तीर्णमित्यर्थः । एवंविधं नादमयं ते रूपं घोषाद्यष्टविधनादातिरिक्तं परनादमयं ते तव रूपमाचक्षते वर्णयन्ति । तथा च श्रीस्वच्छन्दाख्ये महातन्त्रे 'घोषो रावः स्वनः शब्दः स्फोटाख्यो ध्वनिरेव च । झांकारो धुंकृतश्चैव अष्टौ शब्दाः प्रकीर्तिताः ॥ श्रवणाङ्गुलिसंयोगाद्यः शब्दः संप्रवर्तते । दीप्तवह्निस्वनाभासः स शब्दो घोषशब्दितः ॥ तदन्तेन भवो यस्य रोषान्मदविसर्पिणः । भिन्नशंस्यनिभो रूक्षः स रावः स्यात्तदन्तगः ॥' अन्यत्तत एवाभ्यूह्यम् । ते जनाः के इत्याह—ये जना ये लोकाः योगिजनाः शब्दे परब्रह्मस्वरूपे चेतांसि मनांसि दमयन्ते तदेकतानानि कुर्वन्ति ॥

गीर्भिरमेयज्ञेये निरता नित्याभिरुत्तमे यज्ञे ये ।
तुलिताम्भोदेहन्ते पूजयितुं त्वन्मयाः प्रभो देहं ते ॥ १४२ ॥

हे तुलिताम्भोद तुलिता अम्भोदा नवमेघाः श्यामसुन्दरवर्णत्वेन येन स तस्य संबोधनम् । हे भगवन्, नित्याभिर्वेदस्वरूपाभिर्गीर्भिः हेतुभिः तत्प्रधानत्वाद्यज्ञविधौ अमेये अपरिमिते अविच्छिन्ने ज्ञेये च उत्तमे यज्ञे विष्णवर्पणसारे ये त्वद्भक्ताः निरताः ते त्वन्मया भवन्मयाः, हे प्रभो, ते तव देहं साक्षाल्लोकानुग्रहाय अवतीर्णं भक्तजनानुग्रहाय शालग्रामशिलार्पितनिजप्रतिबिम्बवैभवरूपं वा पूजयितुमीहन्ते काङ्क्षन्ते ॥

उत्सन्नोरुध्वान्तस्त्वां हृदि मरुतश्च मुनिजनो रुद्ध्वान्तः ।
अविकारमणीयांसं सकलं वा स्मरति देव रमणीयांसम् ॥ १४३ ॥

हे देव श्रीकृष्ण, उत्सन्नोरुध्वान्तः उत्सन्नं दूरीकृतमुरु महत् ध्वान्तं मोहरूपं येन स तादृशो मुनिजनः वाचंयमव्रतिजनः मरुतः प्राणापानरूपान् अन्तः रुद्ध्वा रेचकपूरककुम्भकक्रमेण प्राणायामैरविकारं पृथिव्यादिषोडशविकारपृथक्स्थितमणीयांसं परमाणुभ्योऽप्यणुतरं परमात्मरूपं निष्कलं स्मरति । यदान्तर्लीनमानसः समाधौ दत्तचेता भवति इत्यर्थः । यदा तु बहिः संचारितेन्द्रियस्तदा श्रीकृष्ण तव स्वरूपं सकलं शङ्खचक्रगदाधरं चतुर्भुजं महार्हवैडूर्यकिरीटभूषणाद्यलंकृतं स्मरति । पुनः कीदृशम् । रमणीयांसं रमणीयावंसौ स्कन्धौ यस्य स तादृशम् ॥

वादिभिरेतत्तत्वं ध्रुवमिति यद्यन्मतं हरे तत्तत्त्वम् ।
तमसामस्तमयाय प्रभो नमस्ते समस्तमयाय ॥ १४४ ॥

हे हरे हरति पापानि वाङ्मनःकायकृतानीति हरिः तत्संबोधनम् । एतत् एतदेव अस्मदभिमतलक्षणज्ञानं ध्रुवं निश्चये तत्त्वमिति प्रकारेण विविधेन वादिभिः वेदान्तसांख्यन्यायशास्त्रादिवादिभिः यत् यत् मतं यद्यदभिमतं तत् तत् मतं त्वमेव तेन तेन मतेन ऋजुवक्रपथगामिनदीप्रवाहेण समुद्र इव त्वमेव गम्योऽसीत्यर्थः । तत्तस्मात् तमसां नैकविधमोहरूपाणामन्धकाराणामस्तमयाय तथा समस्तमयाय सफलत्वोत्पादितत्रिजगन्मयाय ते तुभ्यं नमः कुर्मः सदा सर्वदा कुर्महे इति संबन्धः ॥

इति मुनिजातं कलयन्नानार्थवतीर्गिरो निजातङ्कलयम् ।
भक्तिरसादनमत्तं भगवन्तं सदसि तत्प्रसादनमत्तम् ॥ १४५ ॥

इत्यनेन प्रकारेण सदसि कुरुसभायां विश्वरूपवैभवप्रकाशने तत्प्रसादनमत्तं तस्य श्रीकृष्णस्य प्रसादेन मत्तम् । क्षीवसामकमित्यर्थः ।तादृशम् । तथा—नानार्थवतीर्गिरः स्तुतिवाचः कलयत् वदत् मुनिजातं सनकसनन्दनादिसिद्धमुनिवृन्दं भगवन्तं श्रीकृष्णं भक्तिरसाद्भावनारसेन अनमत् प्रणनाम । तं भगवन्तं कीदृशम् । निजातङ्कलयं निजो य आतङ्कः संसारमयो रोगः तस्य लयो यस्मात्स तादृशम् ॥

अथ धृतनानाविद्यः स्वमायया शौरिररिजनानाविध्य।
शैलसमस्तम्भवनं विधूय निर्यातवान्समस्तं भवनम् ॥ १४६ ॥

अथानन्तरं धृतनानाविद्यः धृता नानाप्रकारा अन्यजनैरज्ञाता विद्या येन स तादृशः शौरिः श्रीकृष्णः स्वमायया स्वकीयमायया विश्वरूपसंदर्शनरूपया अरिजनान् शत्रुजनान् आविध्य सकम्पान् कृत्वा शैलसमस्तम्भवनं शैलसमं पर्वततुल्यं स्तम्भवनं स्थूणावृन्दं यस्मिंस्तत्तादृशे समस्तं सकलं भवनं सदोगृहं विधूय सकम्पं कृत्वा निर्यातवान्॥

निरतः संधावहितं राधेयं चानुनीय संधावहितम्।
पार्थान्पुनरापायं जनार्दनश्चिन्तयन्रिपुनरापायम् ॥ १४७ ॥

अहितं शत्रुं तथा संधावहितं संधावे पश्चादनुद्रवणे हितं राधेयं कर्णं च अनुनीय। उद्योगोत्तरेण तं शमयित्वेत्यर्थः। संधौ संधिकर्मणि निरतः सन् जनार्दनः श्रीकृष्णः अयं पुनरपि पार्थान् युधिष्ठिरादीन् आप। किं कुर्वन्। रिपुनरापायं रिपुनराणां शत्रुमनुष्याणामपायं नाशं चिन्तयन् ॥

पुंसः परमतमस्य श्रुत्वा वचनेन तदनु परमतमस्य।
पार्थाः सन्नाहितया चम्वा चेलू रणाय सन्ना हितया ॥ १४८ ॥

तदनु तदनन्तरं परमतमस्य अतिशयेन परम उत्कृष्टः तस्य अस्य पुंसः श्रीकृष्णस्य वचनेन परमतं परस्य दुर्योधनस्य मतं युद्धकरणरूपं श्रुत्वा सन्नाः खिन्नाः सन्तः हितया हितकारिण्या तथा सन्नाहितया बहुकञ्चुकया चम्वा सेनया उपलक्षिताः सन्तः रणाय संग्रामाय चेलुर्जग्मुः ॥

कृतकोपक्षेपास्ते कुरवः पार्थाश्च संधिपक्षेऽपास्ते।
क्षेत्रं परमाजिहत स्वर्गं प्राप्नोति यत्र परमाजिहत ॥ १४९ ॥

ते कुरवः कौरवाः पार्थाश्च युधिष्ठिराद्याश्च संधिपक्षे संधेः परस्परमिलनस्य पक्षस्तस्मिन् अपास्ते दूरीकृते सति। शत्रुभिरिति शेषः। तत् परमुत्कृष्टं पुण्यं क्षेत्रं कुरुक्षेत्रमाजिहत आगताः। तत् किम्। यत्र परमाजिहतः परमाजौ महासंग्रामे हतः पुरुषः स्वर्गं प्राप्नोति ॥

तत्र तु विरराम रणाद्राधेयः कुरुचमूपतेरामरणात्।
कौरवगणनेत्रा स प्रोक्तोऽर्धरथो रथौघगणनेऽत्रासः ॥ १५० ॥

तत्र च रणभुवि राधेयः कर्णः कुरुचमूपतेः कौरवसेनान्यः अग्रिमाश्वासे वक्ष्यमाणस्य भीष्मस्य मरणात् आ मरणावधि रणात् युद्धात् विरराम निवृत्तः। अत्र हेतुमाह—अत्रासो निर्भयः स कर्णः रथौघगणने रथमहारथादिगणने कौरवगणनेत्रा कौरवगणं नयतीति कौरवगणनेता तादृशेन तेन भीष्मेण अर्धरथ एव यतो गणितः अत एव यावत्कालं भीष्मः सेनानीस्तावदहं युद्धं न करोमीति प्रतिज्ञाय रणान्निवृत्त इत्यर्थः॥

तत्र स चापत्यजने भीष्मोभीते नृपस्य चापत्यजने ।
राज्ञां मतिमानयुतं प्रतिजज्ञे हन्तुमनिशमतिमानयुतम् ॥ १९१ ॥

स च भीष्मः दुर्योधनेन सेनानीः प्रणिपत्य कृतः तत्र तस्मिन् अपत्यजने दुर्योधनादिजने तां प्रतिज्ञां श्रुत्वा भीते सति। तथा नृपस्य कर्णस्य चापत्यजने चापस्य अर्थायुद्धार्थं गृहीतस्य त्यजने सति । कर्णे उदासीन एवं स्थिते सतीत्यर्थः । अनिशं प्रतिदिनं राज्ञां क्षत्रियाणामयुतं दशसहस्रमितं हन्तुं प्रतिजज्ञे प्रतिज्ञां कृतवान् । कीदृशमयुतम् । अतिमानयुतम् अतिमानेन वीरसामान्यतया युतं सहितम् ॥

वलद्वयी च विस्तृता समुद्रसम्पदन्तदा ।
चकार संयुगाजिरे समुद्रसं पदं तदा ॥ १९२ ॥

सा वलद्वयी कुरुपाण्डवकटकद्वयी विस्तृता अतिविस्तारयुक्ता अत एव विस्तारेण समुद्रसंपदः अर्णवलक्ष्म्याः अपि अन्तदा। विस्तारेण समुद्रस्यापि जेत्रे(त्री)त्यर्थः । तादृशी तदा तस्मिन् समये रणाजिरे संग्रामाङ्गणे पदं स्थानं विनाशरूपं चकार । कीदृशम् । समुद्रसं सह मुदस्तुष्टेः युद्धरूपाया रसः कौतुकं यस्मिन् तत्तादृशमिति ॥

इति श्रीमहाकविवासुदेवकृते युधिष्ठिरविजयाख्ये महाकाव्ये षष्ठ आश्वासः ॥

## सप्तम आश्वासः ।

निहितविकारचयं तं देवं चित्रं जगद्रचयन्तम् ।
यं प्राप्य स विषमेषुर्भस्मीभूतः स पातु वो विषमेषु ॥

अथ सेनाद्वयसंयोगानन्तरं वृत्तान्तं वर्णयन्नाह—

अथ रभसेनानीकं व्यूह्य सरित्सूनुना ससेनानीकम् ।
कुरवः शौर्याभरणास्तस्थुर्युद्धाय शक्रशौर्याभरणाः ॥ १ ॥

अथानन्तरं सरित्सूनुना सरितो गङ्गायाः सूनुर्भीष्मः तेन ससेनानीकं सह सेनान्या सेनानायकेन वर्तते यः स ससेनानीकस्तमनीकं सैन्यं रभसेन वेगेन व्यूह्य व्यूहरचनया सज्जीकृत्य कुरवो दुर्योधनाद्याः युद्धाय तस्थुः । कीदृशाः । शौर्याभरणाः शौर्यमेवाभरणं येषां ते तादृशाः। पुनः कीदृशाः। शक्रशौर्याभरणाः शक्रः इन्द्रः, शौरिः श्रीकृष्णश्च, तौ शक्रशौरी तदाभो रणः युद्धं येषां ते तादृशाः ॥

तानभिदुद्राव ततः सरोषपार्षतचमूभृदुद्रावततः ।
सकटुकलापी कुन्तीपुत्रवलौघः शरी कलापी कुन्ती ॥ २ ॥

ततोऽनन्तरं कुन्तीपुत्रवलौघः कुन्तीपुत्रस्य युधिष्ठिरस्य वलौघः सैन्यौघः तान् कुरून् अभिदुद्राव संमुखमद्रवत् । कीदृशः । सरोषपार्षतचमूभृत् सरोषः पार्षतः धृष्टद्युम्नः स एव चमूभृत्सेनानीर्यस्य स तादृक् । पुनः कीदृशः । उद्रावततः उच्चैः रावः

शब्दः उद्रावः तेन ततः विस्तृतः। पुनः कीदृशः। सकटुकलापी सकटुकमरीन् प्रति क्रोधकटुकं लपति गदतीति सकटुकलापी। पुनः कीदृशः। शरी शरवान्। तथा—कलापी तूणवान्। तथा—कुन्ती कुन्तवांश्च॥

भ्रातृभिरेव युयुत्सुर्विभीषणो राघवं पुरेव युयुत्सुः।
कौन्तेयानभियातानाश्रितवान्नीतिमत्तया न भिया तान्॥ ३॥

युयुत्सुः युयुत्सुर्नाम धृतराष्ट्रपुत्रः भ्रातृभिरेव युयुत्सुः भ्रातृभिर्दुर्योधनादिभिः सह युयुत्सुर्योद्धुमिच्छुः अभिया तान् रणाभिमुखं गतान् कौन्तेयान् युधिष्ठिरादीन् तानाश्रितवान् आशिश्रिये। कया। नीतिमत्तया स्वनीतिमत्त्वेन न तु भिया भयेन युयुत्सुर्योद्धुमिच्छुः। क इव। विभीषण इव। यथा पुरा विभीषणो नाम राक्षसः भ्रात्रा रावणेन सह युयुत्सुर्योद्धुमिच्छुः नीतिमत्तया राघवं रामचन्द्रमाश्रितवान् न तु भिया तद्वदित्यर्थः॥

दृष्ट्वा मान्यानमितान्पार्थो योद्धुं कुरूत्तमान्यानमितान्।
अमुचच्चापं करतः कृष्णेनाश्वासितः स चापङ्करतः॥ ४॥

यानं धुर्यमश्वं रथादि इतान् गतान् रथाश्वादिस्थितान् अमितानसंख्यान्, तथा मान्यान् माननीयान् पितृपितामहाचार्यमातुलभ्रातृसखिप्रभृतीन् कुरूत्तमान् कौरवान् योद्धुं स्थितान् दृष्ट्वा। पार्थः कृपाविष्टः सन् इति शेषः। करतः स्वहस्तात् चापं स्वधनुः अमुचत्। उदासीन एव तत्र तस्थावित्यर्थः। अपङ्करतः न पङ्को किल्विषे कर्मणि रतः सन् कृष्णेन श्रीकृष्णेन श्रीगीतार्थसंश्रावणात् 'य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्। उभौ तौ न विजानीतौ नायं हन्ति न हन्यते॥ न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः। अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥' इत्यादि सारार्थानुश्रासनेन आश्वासित आश्वासं नीतः पुनरपि युद्धकरणायाभिमुखीकृत इति भावः॥

युद्धारम्भेऽरीणां नादः समचुम्बदम्बरं भेरीणाम्।
द्रवतां वै धुर्याणां खुरजन्म रजोऽपि रहितवैधुर्याणाम्॥ ५॥

अरीणां शत्रूणां युद्धारम्भे संग्रामारम्भे भेरीणां दुन्दुभीनां नादः अम्बरमाकाशमचुम्बत् चुचुम्ब। तथा रहितवैधुर्याणां त्यक्तविक्लवत्वानां धुर्याणां हस्त्यश्वरथादीनां द्रवतां खुरजन्म खुरोत्थं रजः धूलिरपि अम्बरं गगनमचुम्बत्॥

जनितारावे शङ्खे चारणचक्राणि चक्रुरावेशं खे।
विबभावभ्रामरजः संमर्दः सर्वदिक्षु बभ्राम रजः॥ ६॥

युद्धार्थं जनितारावे शङ्खे सति कम्बुनि सति चारणचक्राणि चारणा देवभेदास्तेषां चक्राणि समूहाः खे गगने आवेशं चक्रुः। आविविशुरित्यर्थः। तथा अभ्रामरजः अभ्रे

आकाशे अमरजः अमरेभ्यो देवेभ्यो जातः संमर्दः संघर्षः विबभौ रेजे । तथा रजो धूलिश्च विमर्दजः सर्वदिक्षु सर्वकाष्ठासु बभ्राम ॥

मुहुरकृपणवाद्यानामाहत इव स्वनेन पणवाद्यानाम् ।
अनुगतवन्दिव्यजनः समागमद्द्रष्टुमाहवं दिव्यजनः ॥ ७ ॥

मुहुः पुनः पुनः अकृपणैर्महद्भिर्जनैः वाद्यानां वादनीयानां पणवाद्यानां पणवः वादित्रविशेषः आद्यो येषां ते पणवाद्यानां पणवानकगोमुखोद्ध(?)ढक्कादीनां स्वनेन शब्देन आहत इव दिव्यजनः स्वर्गीयजनः आहवं युद्धं द्रष्टुं खमाकाशमागमत् । अनुगतवन्दिव्यजनः अनुगता वन्दिनः स्तुतिपाठका व्यजनानि चामराणि यस्य सः ॥

नागं नागोऽधावद्रथिनं च रथी नरं च ना गोधावत् ।
तुरगवरं च तुरङ्गः प्राप वलौघः परस्परं चतुरङ्गः ॥ ८ ॥

नागो हस्ती नागं हस्तिनमधावत् । तथा रथिनं च रथी रथिकः अधावत् । तथा नरं च पदातिं च ना पदातिः अधावत् । कथं गोधावत् गोधा ज्याघातवारणम् तद्विद्यते यत्र तत् । तुरगवरं च अश्ववरं च तुरङ्गः अश्वः प्राप । तदेवं चतुरङ्गः हस्तिरथाश्वपदातिरूपः वलौघः सैन्यौघः परस्परं मिलितः ॥

अवनिभृदाहवहोत्रव्यापारे जीवहव्यदाहवहोऽत्र ।
धुतपांसावलसदसिः स्फुटमग्निशिखेव वर्चसा वलसदसि ॥ ९ ॥

धुतः पांसुर्धूलिर्यस्मिन् स तादृशे अत्र अस्मिन् वलसदसि वलं सैन्यमेव सदः सभा वेदिरूपा तत्र अवनिभृदाहवहोत्रव्यापारे अवनिभृतां राज्ञां य आहवः युद्धं तदेव होत्रव्यापारः अग्निहोत्रव्यापारः यज्ञरूपः तत्र जीवहव्यदाहवहः युद्धे हि जीवा एव हव्यं तस्य दाहवहो दाहकः असिः खड्गः स्फुटमग्निशिखा इव अग्निज्वालेव वर्चसा तेजसा दीप्यन्ती अभव(लस)त् । वलवेदिकायां विरच्यमानयुद्धयज्ञे वीरजीवहव्यदाहका खड्गधाराग्निशिखा दीप्यन्तीव रेजे इत्यर्थः ॥

अजनि तु भूरिभराजौ चलितायां तत्क्षणेन भूरिभराजौ ।
लघुतां रथवाहास्तव्योमस्थितपांसुपङ्क्तिरथ वाहास्त ॥ १० ॥

तत्क्षणेन आजौ संग्रामे इभराजौ गजपङ्क्तौ चलितायां भूर्भूमिः भूरिभरा महाभारवती तु अजनि जाता । अथ वा पक्षान्तरे । रथवाहास्तेति । रथैश्च वाहैश्च अश्वादिभिश्च अस्तः क्षिप्तः व्योमस्थिते यः पांसुर्धूलिः तत्पङ्क्तिः लघुततामहास्त अत्यजत् । अतिघनाभूदित्यर्थः ॥

तत्र विवेदनतावद्योद्धा पतितं भुजं विवेद न तावत् ।
अरिनिशितमहास्यस्तं प्रहर्तुमप्यैच्छदधिकृतमहास्यस्तम् ॥ ११ ॥

अरिनिशितमहास्यस्तमरैः शत्रोः निशितः तीक्ष्णो यो महासिर्महाखङ्गः तेनास्तं कृत्तं पतितं भुजं योद्धा वीरस्तावत् न विवेद नाज्ञासीत् । युद्धरभसेनेत्यर्थः । कथं कृत्वा । विवेदनतावत् विगता वेदना व्यथा यस्य स विवेदनः तस्य भावस्तत्ता सा विद्यते यस्मिन्कर्मणि तत् विवेदनमिवेत्यर्थः । तथा—योद्धा वीरः तमरिं प्रहर्तुमप्यैच्छत् । कीदृशः । अधिकतमहास्यः अधिकतमं हास्यः असिना कृत्तभुजत्वात् ॥

क्षिप्तेनोपरि करिणा रथेन गगनादपातिनो परिकरिणा ।
वायुषु सङ्के गलता द्युस्त्री तत्रास्त धृतरसं खेऽगलता ॥ १२ ॥

तत्र युद्धे कुरुपाण्डवानां करिणा हस्तिना उपरिक्षिप्तेन रथेन कर्त्रा गगनादाकाशात् न अपाति न पेते । अत्र हेतुः—वायुषु सत्सु । खे वायुषु भ्रमत्सु हस्तिनोपरिगगने क्षिप्तोऽपि रथः गगनान्न पपातेत्यर्थः । सङ्के इति । शसयोरैक्यात् शङ्के गलता शङ्खविषये गलता गलस्य कण्ठस्य भावो यस्याः सा तादृशी । कम्बुकण्ठी इत्यर्थः । तादृशी द्युस्त्री स्वर्गस्त्री अप्सराः खे आकाशे अगलता अपतता तेन रथेन धृतरसम् आस्त धृतो रसः कौतुकं यस्मिन् कर्मणि तथा । क्रियाविशेषणमेतत् । तद्दृष्ट्वा साश्चर्यासीदित्यर्थः ॥

तत्र घनप्रासारिक्षुरिके रक्षोगणेन न प्रासारि ।
गतशङ्काबन्धेन स्थितमग्रेभक्षणेन कावन्धेन ॥ १३ ॥

तत्र घनप्रासारिक्षुरिके प्रासाः कुन्ताः, अरीणि चक्राणि, क्षुरिकाः शस्त्राश्च, घना यस्मिन् तत् तादृशे तत्र युद्धे रक्षोगणेन क्रव्यादघनेन न प्रासारि न प्रसृतम् । त्रासेन प्रासादिभ्य इत्यर्थः । तत्र च युद्धे कावन्धेन कवन्धानां गतशिरस्कानां खङ्गादिच्छेदेन अपमूर्धकलेवराणां समूहः तेन गतशङ्काबन्धेन स्थितम् गतः शङ्काबन्धो यस्य तत् तादृशं तेन अशिरस्त्वेन अचक्षुष्ट्वात् तत्तु मूलादर्शनाद्गतशङ्काबन्धेन स्थितम् । कीदृशेन । अग्रेभक्षणेन अग्रेपुरः इभक्षणः हस्त्युत्सवः युद्धार्थो यस्य तत् तादृशं तेन ॥

न मृतं नामानेन प्राङ्निहतं येन सुकृतिना मानेन ।
खङ्गवती क्षामासेरागतिरसिपाणिना प्रतीक्षामासे ॥ १४ ॥

येन सुकृतिना पुण्यवता मानेन मानाधिकं कृत्वा । संमुखं युध्यतेत्यर्थः । प्रागादौ निहतं मृतं नाम निश्चये अनेन पुंसा न मृतम् । तद्यशःशरीरस्य कल्पस्थायित्वात् इत्यर्थः । तथा तत्र युद्धे क्षामासेः क्षामः प्रहारादिना कुण्ठः भग्नो वा असिः खङ्गो यस्य स तादृशस्य वीरस्य खङ्गवती सखङ्गा आगतिः असिपाणिना खङ्गहस्तेन पुरुषेण प्रतीक्षामासे । यावदयं भग्नासिः पुनर्नवं खङ्गमानाययामास तावत्तेन प्रतीक्षा कृतेत्यर्थः ॥

गुरुमत्सरसादरुषः पतिताः क्षरितासृजश्च सरसादरुषः ।

दुधुवुः पादानश्वा हर्षाद्भपति स्म कृतवपादानः श्वा ॥ १५ ॥

गुरुमत्सरसादरुषः गुरुर्महान् मत्सरः परोत्कर्षासहनं सादः कष्टं च, रुट् रोषश्च, येषां ते तादृशाः क्षरितमसृक् रक्तं यस्य तत् तादृशात् सरसादार्द्रात् अरुषः व्रणात् हेतोः पतिता भूमौ पतिता अश्वा हयाः पादान् (असृजा) दुधुवुरित्यर्थः । तथा—हर्षात् कृतवपादानः कृतं वपादानं वसादानं यस्य स तादृशः श्वा भपति स्म रौति स्म ॥

जडजङ्घोरःस्वरदः पतितोऽपरकार्यकोपघोरस्वरदः ।

भ्रष्टगुरुग्रैवेयं प्रचुरमदानां प्रवृत्तिरुग्रैवेयम् ॥ १६ ॥

अरदः अविद्यमाना रदा दन्ता यस्य सः अरदः मत्कुणः अपरकारी अन्यो हस्ती जडजङ्घोरःसु जडा युद्धाङ्गणभूमौ अतिधावनात् जङ्घाः उरांसि वक्षांसि च येषां ते तादृशेषु पुरुषेषु पतितः । कीदृशः । अकोपघोरस्वरदः अकोपेन ईषत्कोपेन । नञ् ईषदर्थे । घोरो यः स्वरो बृंहितं ददाति तादृशः । कथं कृत्वा भ्रष्टगुरुग्रैवेयं भ्रष्टानि पतितानि गुरूणि महान्ति ग्रैवेयाणि ग्रीवाभरणानि यस्मिन् कर्मणि तथा । क्रियाविशेषणमेतत् । अत्रार्थान्तरन्यासमाह—प्रचुरमदानां समदानामियमुग्रैव कठिनैव प्रवृत्तिः । मार्ग इत्यर्थः ॥

प्राप विमानं दिवि ना निहतः संप्राश्य रुधिरमानन्दि विना ।

असृजाशा कपिशा च स्वतृषं व्यपनेतुमपि शशाक पिशाचः ॥ १७ ॥

आनन्दि तृप्तिवशान्मोदकं रुधिरं रक्तं प्राश्य चर्वयित्वा । वीरक्षतोत्थमित्यर्थः । विना पक्षिणा निहतो मारितः ना पुरुषः दिवि आकाशे विमानं देवयानं प्राप । असृजा रक्तेन च वीरक्षतोत्थेन आशा दिक् । जातावेकवचनम् । आशा इत्यर्थः । कपिशा कपिशवर्णा आसीत् । स्वतृषं स्वा चासौ तृट् च तां रणाङ्गणधावनोत्थां व्यपनेतुं दूरीकर्तुमपि पिशाचो देवयोनिः सत्त्वविशेषः शशाक अशकत् ॥

अशनैरस्थिरदन्तस्थानाः श्वानो बभूवुरस्थि रदन्तः ।

लोहितपङ्कं कवलं चक्रे च क्रव्यलोलुपं कङ्कबलम् ॥ १८ ॥

तत्र समरभूमौ अस्थि हतवीरसंबन्धि रदन्तः विलिखन्तः । 'रद विलेखने' धातुः । अत एव अशनैर्बहु अस्थिरदन्तस्थानाः अस्थिराणि दन्तस्थानानि दन्तभूमयो येषां ते

१. मूलपुस्तके तु—

'नागानाराचारुर्दशा च तुरगानवाप नाराचारुः ।

न्यपतत्सादी प्रासे स्फुरितेऽरिभटस्य रंहसा दीप्रासेः ॥'

इत्ययमपि प्रागितः समुपलभ्यते.

२. 'असृजा' इत्यत्राधिकं प्रतीयते. ३. 'कृष्ट' मूल०.

तादृशाः श्वानः सारमेया बभूवुः । तथा—क्रव्यलोलुपं क्रव्ये आममांसे लोलुपं कङ्कबलं कङ्कानां पक्षिविशेषाणां बलं (चक्र)लोहितपङ्कं रक्तकर्दमं कवलं ग्रासं चक्रे । जग्रासेत्यर्थः ॥

असृगशनादशिवानां पङ्क्तिः परमाहवे ननाद शिवानाम् ।
काष्ठा काकालीभिर्नैव मलिष्ठा बभूव का कालीभिः ॥ १९ ॥

तत्र च परमाहवे कुरुपाण्डवानां महायुद्धे असृगशनात् रक्तास्वादात् अशिवानामसङ्गलानां शिवानां शृगालादीनां पङ्क्तिः श्रेणिः अनदत् । तथा—कालीभिः कृष्णाभिः काकालीभिः काकपङ्क्तिभिः हतवीरमांसास्वादलोभेनागताभिः मलिष्ठा मलिना का न काष्ठा का न दिग् बभूव । अपि तु सर्वैव मलिष्ठेति । अन्येष्वपि गुणवाचिषु शब्देषु इष्ठेयसौ प्रत्ययौ भवत एव ॥

सति समरे कामबलान्नतयोरुभयोरिरंसुरेकामबलाम् ।
विववारोदसुरस्त्री निराकृतान्यामुना रुरोद सुरस्त्री ॥ २० ॥

सति च समरे युद्धे कामबलात् मदनप्रमाथात् नतयोर्नम्रयोः तादृशं वीरं वीक्ष्य रणभूमावापतितयोस्तयोः सुरस्त्रियोर्मध्ये एकामबलां सुरस्त्रीम् अस्त्री मन्त्रप्रयुक्तशस्त्रविद्याकुशलः उदसुः विगतप्राणः किंचित् प्राणो वा एकामतिकमनीयां विववार वृतवान् । अन्या च अमुना कण्ठगतप्राणेन वीरेण निराकृता सुरस्त्री स्वर्वेश्या रुरोद अरुदत् ॥

इत्थं तत्रासरणे परस्परं सेनयोर्गतत्रासरणे ।
भीष्मोऽविक्षत्तं पार्थबलौघं हृतच्छविक्षत्त्रस्तम् ॥ २१ ॥

इत्थमनेन प्रकारेण असरणे शसयोरैक्यात् अशरणे अरक्षके परस्परमन्योन्यं सेनयोः द्वयोः कुरुपाण्डवसंबन्धिन्योः गतत्रासरणे गतत्रासो विन्नासश्चासौ रणः तत्र तं प्रसिद्धं पूर्वोद्दिष्टं वा पार्थबलौघं युधिष्ठिरकटकौघं भीष्मो गाङ्गेयः कुरुसेनानीः दशदिनानि प्रतिज्ञाकारी अविक्षत् विवेश । 'विश प्रवेशने' धातुः । कीदृशो भीष्मः । हृतच्छविक्षत्त्रः हृतच्छवीनि कृतानि क्षत्राणि क्षत्रिया येन सः ॥

भीष्मस्य पराक्रमं वर्णयन्नाह—

अधिकतमनिशातान्ता बिभ्राणाः कङ्कपत्रमनिशातान्ताः ।
अगुरापुङ्खादन्तः क्षितिं पितामहशरा रिपुं खादन्तः ॥ २२ ॥

अधिकतममतिशयेन निशातास्तीक्ष्णाः अन्ताः फलानि येषां ते तादृशाः । तथा—कङ्कपत्रम् । जातावेकवचनम् । कङ्काभिधपतत्रिणां पक्षान् बिभ्राणाः । तथा—अनिशातान्ताः अनिशं सदैव शत्रूणां विमर्दात् आतान्ताः खिन्नाः ईषत् । तथा—रिपुं शत्रुम् । जातावेकवचनम् । रिपूनित्यर्थः । खादन्तो ग्रसमानाः पितामहशरा आपुङ्खात् पुङ्खावधि क्षितावन्तः अगुः । सकञ्चुकवीरान् भित्त्वा क्षितिं विविशुरित्यर्थः ॥

नृपसमितावृद्धेन त्रिभुवनमान्येन बलवता वृद्धेन ।
भीष्मेणादभ्राजिस्तम्भितहरि जिष्णुना क्षणादभ्राजि ॥ २३ ॥

नृपसमितौ राजसभायाम् ऋद्धेन समृद्धेन । तथा त्रिभुवनमान्येन बलवता वृद्धेन च भीष्मेण क्षणात् जिष्णुना जयशीलेन अभ्राजि शुशुभे । अदभ्राजिस्तम्भितहरि अदभ्रा घना वा आजिः युद्धं तया स्तम्भितः रुद्धः घनशरौघवृष्टया हरिः श्रीकृष्णः पार्थस्य सारथित्वात् पार्थरोधेन तस्यापि रोधनात् हरिः सूर्यो वा यस्मिन् कर्मणि तत् । क्रियाविशेषणमेतत् । 'इन्द्रचन्द्रार्कवाताश्वशुकभेकयमाहिषु । कर्पा सिंहे सुवर्णाभवर्णे विष्णौ हरिं विदुः ॥' इत्यनेकार्थेषु ॥

स हि मुहुरुद्धाराणि श्रीधरचक्रस्यापि रुद्धाराणि ।
हतकेतनवाहानि प्रधनानि पितामहोऽकृत नवाहानि ॥ २४ ॥

हि निश्चये । स पितामहो भीष्मः नवाहानि नवदिनपर्यन्तं प्रधनानि युद्धानि मुहुरकृत कृतवान् । कीदृशानि । उद्धाराणि उद्भटानि । पुनः कीदृशानि । श्रीधरचक्रस्यापि सुदर्शनस्यापि रुद्धा अरा धारा यैस्तानि । पुनः कीदृशानि । हतकेतनवाहानि हतानि केतनानि ध्वजा वाहा अश्वाश्च रिपुसंबन्धिनो येषु तानि ॥

राज्ञामयुतमुदस्तं पार्थाः संप्रेक्ष्य नित्यमयुतमुदस्तम् ।
उपगतशिबिरा मरणं भीष्ममयाचन्त भरतशिबिरामरणम् ॥ २५ ॥

पार्था युधिष्ठिराद्याः पाण्डवा नित्यं प्रतिदिनमुदस्तं हतं राज्ञां क्षत्रियाणामयुतं दशसाहस्रं संप्रेक्ष्य अयुतमुदः न युता मुत् हर्षो येषाम् । विमनस्का इत्यर्थः । तादृशाः सन्तः उपगतशिबिरा रात्रौ शिबिरं निवेशस्थानं कुरुसत्कमुपागता भीष्मं पितामहं मरणमयाचन्त मरणमवृणुत । भीष्मस्य निजजनकदत्तवरेण स्वेच्छायत्तमरणत्वेन प्रसिद्धत्वात् । कीदृशं भीष्मम् । भरतशिबिरामरणम् भरतो राजा, शिबिश्च नृपः, रामो रामचन्द्रः परशुरामो वा, तद्वद्रणः संग्रामो यस्य स तं तादृशम् ॥

स्वमरणं याचितो भीष्मपितामहः पार्थान् किमित्याह—

कर्ता सज्जन्यस्य द्रुपदात्मजमग्रतश्च सज्जन्यस्य ।
सरभसमाश्वेताः श्वः सेना संवार्य हन्तु मा श्वेताश्वः ॥ २६ ॥
इति मुदिताः स्ववधार्थं प्रोक्ते भीष्मेण चोदिताः स्ववधाय ।
पुनरेव रजन्यन्ते पाण्डुसुताः कुर्वते स्म वरजन्यं ते ॥ २७ ॥

हे पार्थाः, सज्जन्यस्य सत् परमं च तज्जन्यं युद्धं तस्य कर्ता । तथा द्रुपदात्मजं शिखण्डिनं प्राक् शिखण्डिन्याख्यया स्थितं कन्यारूपं पश्चादीश्वराप्तवरेण संपन्नं शिखण्डिनमग्रतः अग्रे न्यस्य स्थापयित्वा सज्जन् मया युद्धाय मिलन् सोऽयं श्वेताश्वः अर्जुनः सेनाः कर्णादिवीरसंभृताः संवार्य निवार्य श्वः श्वोदिने सरसं सयुद्धकौतुकम् । 'सरभसम्' इति

तादृशस्य अस्य दुर्योधनस्य वादान् उक्तीः श्रुत्वा प्रमुदितवाचा प्रमुदिता स्तुता वाक् येन स तादृशेन। तथा श्रेणीसिंहेन वीरश्रेणीसिंहेन कौरवाचार्येण कुरूणामाचार्येण ॥

न गुडाकेशस्तस्य स्थास्यति यदि तावदन्तिके शस्तस्य।
धर्मसुतो नह्येत ध्रुवमापाद्यं तदग्रतो नह्येतत् ॥ ३७ ॥
इति भारद्वाजेन ब्रुवता शरराशिना स्फुरद्वाजेन।
पार्थबलं समदारिव्रातं शितशस्त्रसंकुलं समदारि ॥ ३८ ॥

इति ब्रुवता कथयता भारद्वाजेन द्रोणाचार्येण कर्त्रा स्फुरद्वाजेन प्रस्फुरत्पक्षेण शरराशिना बाणसमूहेन समदारिव्रातं समदः सगर्वः अरिव्रातः शत्रुसार्थः यस्मिंस्तत् शितशस्त्रसंकुलम् तीक्ष्णायुधभृतं पार्थबलं पाण्डवसैन्यं समदारि विदारितम्। इति किमिति ब्रुवता। हे राजन् हे दुर्योधन, शस्तस्य प्रशस्तस्य तस्य युधिष्ठिरस्य अन्तिके समीपे गुडाकेशोऽर्जुनस्तावत् यद्यन्तिके निकटे न स्यात् न भविष्यति युधिष्ठिरस्तदा मया नह्येत बध्येत इति त्वया ज्ञेयम्। 'णह बन्धने' धातुः। ध्रुवं निश्चये तदग्रतः अर्जुनाग्रतः मया न हि नैव एतदापाद्यम्। अर्जुनाग्रतो नैतत्सेत्स्यतीति भावः ॥

स हि कोपरसेनाशु द्रोणो बाणान्विकीर्य परसेनासु।
पाण्डवनायकबन्धं कर्तुमनेकं नभो निनाय कबन्धम् ॥ ३९ ॥

हि निश्चये स द्रोणः कोपरसेन अतिकोपेन आशु परसेनासु बाणान् शरान् विकीर्य क्षिप्त्वा पाण्डवनायकबन्धं युधिष्ठिरनृपबन्धं दुर्योधनेन प्रार्थितं कर्तुं नभः आकाशमनेकं कबन्धम्। जातावेकवचनम्। अनेकान् कबन्धान् अथ मूर्धकलेवराणि शत्रूणामनयत्। आकाशमनेककबन्धपरिवृतमकरोदित्यतः नयतिर्द्विकर्मकः ॥

संरम्भी माद्यन्तं सात्यकिसहदेवनकुलभीमाद्यन्तम्।
अरिलोकं समुदस्य क्षितिभर्तुः प्रापदन्तिकं समुदस्य ॥ ४० ॥

स च द्रोणाचार्यः संरम्भी क्रुद्धः सन् सात्यकिश्च सहदेवनकुलौ माद्रीतनयौ भीमादयश्च महारथाः अन्ते यस्य स तादृशमरिलोकं शत्रुलोकं समुदस्य निवार्य समुत् सहर्षः सन् अस्य क्षितिपस्य अन्तिकं समीपं प्रापत् ॥

द्विषदटवीरध्वजवान्मृद्नन्द्विपवत्कपिप्रवीरध्वजवान्।
पार्थः सहसा ददृशे दददथ भीतिं जनाय सह सादृदृशे ॥ ४१ ॥

कपिप्रवीरध्वजवान् कपिप्रवीरो हनुमान् तद्युक्तध्वजवान् तथा अध्वजवात् युद्धाध्वनि वेगात् हेतोर्द्विषदटवीः शत्रुरूपा अटवीः महारण्यानि द्विपवत् द्विप इव मृद्नन् स पार्थः अर्जुनः कर्मभूतः जनेन सहसा तत्क्षणं ददृशे दृष्टः। कीदृशः। सादृदृशे सादं युद्धक्लेशं पश्यतीति सादृदृक् तस्मै जनाय भीतिं भयं ददत् ददानः ॥

तद्धनुषः सारवतः शिताः शरा नतिमुपेयुषः सारवतः ।
लसमाना अवतेरुर्द्रोणाय ददुश्च सिंहनादवतेऽरुः ॥ ४२ ॥

नतिं नमनमुपेयुषः प्राप्तस्य, तथा सारवतः सारयुक्तात् दृढात्, तथा सारवतः स-शब्दाच्च तद्धनुषः तस्य पार्थस्य धनुषः चापाल्लसमानाः स्फूर्जन्तः शरा बाणा अवतेरुः । न पुनस्ते शराः द्रोणाय द्रोणाचार्याय सिंहनादवते सिंहनादो युद्धे वीराणां नादः सिंहनादः तद्वते अरुः व्रणम् । जातावेकवचनम् । अरूंषि व्रणानि इत्यर्थः । ददुः । 'व्रणोऽस्त्रियामीर्ममरुः' इत्यमरः ॥

अथ तरसापायासीद्द्रोणः सेना च तस्य सापायासीत् ।
अशनैरविरलमकरोद्धूतं जलधेर्जलं च रविरलमकरोत् ॥ ४३ ॥

अथानन्तरं द्रोणे सवाहिनीके शरैरवसादिते सति स च द्रोणः तरसा शीघ्रमेव रणात् अपायासीत् प्रचलितः । तस्य सेना चमूरपि सापाया नष्टा आसीत् । अशनैरमन्दम् अविरला ये मकरा जलचरविशेषास्तैरुद्धूतमुत्थापितं च जलधेर्जलं समुद्रस्य जलं रविः सूर्यः अलमकरोत् अलंचकार । एतावता दिनावसानं जातमित्यर्थः ॥

अथ रिपुरोधी राज्ञः शिबिरं संप्राप्य कुरुवरो धीराज्ञः ।
प्रतिपन्नापनयाय त्रैगर्तानशिपदर्जुनापनयाय ॥ ४४ ॥

अथानन्तरं रिपुरोधी रिपून् शत्रून् रुणद्धीति तादृशः कुरुवरो दुर्योधनः अथ धीराज्ञः दृढाज्ञो राज्ञः युधिष्ठिरस्य शिबिरं निवेशं प्राप्य अर्जुनापनयाय अर्जुनस्य अपनयः युधिष्ठिरात् पृथक्करणं तस्मै त्रैगर्तान् जनपदविशेषान् अशिषत् आज्ञापयामास अर्जुनापनयाय कीदृशाय । प्रतिपन्नापनयाय प्रतिपन्नं तैस्त्रिगर्तैः श्रुतिज्ञातमाप्नोति प्रतिपन्नापः तादृशो नयः यस्मिन् स तादृशाय । यद्वा प्रतिपन्नापनयायः इति कुरुवरविशेषणं वा । प्रतिपन्नान् शरणाश्रितान् आप्नुतः तादृशौ नयायौ नयशुभावहविधी यस्य सः । अत्र निसर्गाभावेऽप्यदोषः ॥

द्विषतामानन्दहनं साक्षीकृत्य प्रदीप्यमानं दहनम् ।
प्रविदधुरेते शपथं निनीषवः पाण्डवं परेतेशपथम् ॥ ४५ ॥

द्विषतां शत्रूणामानन्दहनम् आनन्दघ्नं तदीयवार्ताश्रवणात् एवंविधं दहनमग्निं प्रदीप्यमानं प्रकर्षेण दीप्यमानं साक्षीकृत्य साक्षाद्द्रष्टाकृत्य एते त्रिगर्ताः शपथं प्रतिज्ञारूपं प्रविदधुः अकुर्वन् । कीदृशाः । पाण्डवमर्जुनं परेतेशपथं परेतेशस्य प्रेतेशस्य यमस्य पथं मार्गं निनीषवः नेतुमिच्छवः । पथशब्दोऽकारान्तोऽप्यस्ति ॥

तदनु गतायामन्तं निशि पार्थे धृतधनुर्लतायामं तम् ।
आहूयाकुर्वत ते देशे समरं जिघांसया कुर्वतते ॥ ४६ ॥

तदनु तदनन्तरमन्तमवसानं गतायां निशि प्रभाते च प्रादुर्भूते ते त्रैगर्ता धृतधनुर्लेतायामं धृतः धनुर्लतायाश्चापलताया आयामः परिणाहो येन स तादृशं तमर्जुनमाहूय आकारयित्वा जिघांसया तद्वधेच्छया कुर्वतते कुरुभिः कुरुपाण्डवलोकैः अतते अभृते देशे यत्र न ते आसन् तत्रैव दूरमर्जुनं नीत्वेत्यर्थः। समरं युद्धमकुर्वत चक्रुः ॥

सोऽपि रणे सत्यजितं नियुज्य राज्ञश्च रक्षणे सत्यजितम्।
सरभसमकुरुत तेन त्रिगर्तसैन्येन समरमकुरुततेन ॥ ४७ ॥

सोऽप्यर्जुनोऽपि रणे संग्रामे सति अजितं न पराभूतं राज्ञो युधिष्ठिरस्य रक्षणे सत्यजितं नाम राजानं नियुज्य आज्ञाप्य सरभसं ससाहसावेगं तेन त्रिगर्तसैन्येन सह समरं युद्धमकुरुत। कीदृशेन सैन्येन। अकुरुततेन न कुरुभिः कुरुपाण्डवैस्ततं भृतं तेन ॥

सधनुर्बाणां सेनांद्रोणोऽपि व्यूह्य कौरवाणां सेनाम्।
रोषरसेनाराजौ धर्मतनूजं स्थितं स्वसेनाराजौ ॥ ४८ ॥

द्रोणोऽपि द्रोणाचार्योऽपि सधनुर्बाणांसेनां सधनुर्बाणावंसौ स्कन्धौ येषां ते तादृशा इनाः प्रभवः सेनानीलोका यस्याः सा तादृशीं कौरवाणां दुर्योधनादीनां सेनां चमूं व्यूह्य व्यूहक्रमेण संस्थाप्य स्वसेनाराजौ स्वसेनापङ्क्तौ स्थितं धर्मतनूजं युधिष्ठिरं रोषरसेन रोषस्य रिपून् प्रति क्रोधस्य यो रसः तेन आजौ युद्धे युधिष्ठिरमार गतवान् ॥

तं द्रोणमुपायान्तं शत्रूणामधिकदारुणमुपायान्तम्।
क्रोधेनाराचाल्यः सत्यजिदौह्यन्त तेन नाराचाल्यः ॥ ४९ ॥

क्रोधेन अचाल्यः अकम्पनीयः सत्यजित् राजा शत्रूणामधिकदारुणमतिकठिनमुपायान्तमुपायस्य अन्तस्वरूपं तं द्रोणं आयान्तं समीपमागच्छन्तमार समीपमगमत्। तेन च सत्यजिता नाराचाल्यः नाराचानां लोहमयानां शरविशेषाणामाल्यः पङ्क्तयः औह्यन्त अक्षिप्यन्त ॥

रणनर्मणि मत्तस्य व्यस्य शिरः पविप्रमुखमणिमत्तस्य।
द्रोणो विततक्षेमं धर्मतनूजं समेत्य विततक्षेमम् ॥ ५० ॥

रणनर्मणि युद्धक्रीडायां मत्तस्य क्षीबस्य तस्य सत्यजितो राज्ञः पविप्रमुखमणिमत् पविः वज्रं हीरकाख्यो मणिभेदः तत्प्रमुखास्तत्प्रभृतयो ये मणयस्ते विद्यन्ते यस्मिंस्तत् तादृशं शिरः व्यस्य शिरो निकृत्य विततक्षेमं विस्तृतकल्याणमिमं धर्मतनूजं युधिष्ठिरं विततक्ष शरैः तनूचकार। 'तक्ष त्वक्ष तनूकरणे' धातुः ॥

हयहेतिरथापायात्समरात्संचिन्त्य भूपतिरथापायात्।
भग्नयुगच्छत्रासिप्रभग्नतां चास्य बलमगच्छत्रासि ॥ ५१ ॥

१. 'द्रोणेन' इत्येव युक्तं प्रतिभाति.

हया अश्वा हेतयः शस्त्राणि रथः शताङ्गं च तेषामपायात् नाशात् हेतोः संचिन्त्य सचिन्तो भूत्वा, भूपतिर्युधिष्ठिरः अथानन्तरमपायात् प्रचचाल । भग्नानि युगानि रथावयवाः छत्राणि आतपत्राणि असयः खड्गाश्च यस्मिंस्तत् तादृशं च अस्य युधिष्ठिरस्य बलं प्रभग्नतां पराजयित्वं चागमत् । कीदृशम् । त्रासि त्रासो विद्यतेऽस्य त्रासि ॥

अथ पृथुबलमानमदः स्वबलं दृष्ट्वा भयेन वलमानमदः ।
अचलत्प्रसभं गदया समरे भीमः सपत्नरसभङ्गदया ॥ ९२ ॥

अथानन्तरमदः स्वबलं च तत्स्वसैन्यं भयेन वलमानं प्रत्याव्रियमानं(णं) दृष्ट्वा समरे युद्धे प्रसभं प्रसह्य सपत्नरसभङ्गदया सपत्नानां शत्रूणां यो रसः युद्धकौतुकं तस्य भङ्गो नाशः तं ददातीति सपत्नरसभङ्गदा तया तादृश्या गदया आयुधविशेषेण उपलक्षितो भीमः अचलत् चचाल । कीदृशः । पृथुबलमानमदः पृथु महत् बलं मानश्च मदो गर्वश्च यस्य स तादृशः ॥

तं कटभूमिश्रमदा रुरुधुः करिणः समेत्य भूमिश्रमदाः ।
तेषामभिनदतां तं गदया भीमः समूहमभिनदतान्तम् ॥ ९३ ॥

कटभूमिश्रमदाः कटभुवि गण्डभूमौ मिश्रः समवेतो मदो येषां ते तादृशाः । गण्डः करिणां मुख्यं मदप्रक्षरणस्थानम् । तथा च—'द्वौ गण्डौ चक्षुषी द्वे करो मेढ्रं गुदस्तथा । सप्तस्वेतेषु स्थानेषु मदं प्रक्षरति द्विपः ॥' इति । 'गण्डः कटो मदो दानम्' इत्यमरः । तथा—भूमिश्रमदाः भूमये पृथ्व्यै श्रमम् अतिबृहत्त्वभरेण ददातीति तादृशः करिणः गजाः कुरुसेनासंस्थाः समेत्य उपागत्य तं भीमसेनं रुरुधुः अरुधन् । ततः—अभिनदतां बृहतां तेषां गजानां समूहं भीमः अभिनत् अभैत्सीत् । 'भिदिर् विदारणे' धातुः । कीदृशं करिणां समूहम् । अतान्तं न तान्तः खिन्नः समरे तादृशम् । 'तमु ग्लाने' धातुः ॥

तेषामप्रतिमानां द्विरदानां ततिमनुत्तमप्रतिमानाम् ।
उन्नतदन्तकराणां सोऽनैषीदन्तमसुहृदन्तकराणाम् ॥ ९४ ॥

अप्रतिमानां निरुपमानानाम् । तथा—अनुत्तमप्रतिमानाम् अनुत्तमा अनन्यसदृशी मुख्या प्रतिमा प्रतिमानं येषां ते तादृशास्तेषाम् । 'वाहित्थस्याधोभागः दन्तयोर्मध्यभागः प्रतिमानमुच्यते' इति रायमुकुट्याम् । 'प्रतिमानं प्रतिच्छायागजदन्तान्तरालयोः' इति रुद्रः । 'अधः कुम्भस्य वाहित्थं प्रतिमानमधोऽस्य च' इत्यमरः । तथा—उन्नतदन्तकराणाम् उन्नता दन्ताः करा हस्ता येषां ते । तथा—असुहृदन्तकराणाम् असुहृदां रिपूणामन्तकरा नाशकरास्तेषाम् ॥

अभ्रमिव क्रन्दन्तं बिभ्राणं विभ्रमेण वक्रं दन्तम् ।
उन्नतमङ्कुशलतया चोदयमानो गजोत्तमं कुशलतया ॥ ९५ ॥

अरिसेनानाशरतः कौरवसैन्यान्निरेत्य नानाशरतः।
पार्थमहासेनास्ता भगदत्तोऽभ्याजगाम हासेनास्ताः॥ ९६॥

अभ्रमिव वार्षिकं मेघमिव क्रन्दन्तं बृहन्तम्। तथा—विभ्रमेण विच्छित्त्या वक्रं कुटिलं दन्तं बिभ्राणं धारयन्तम्। तथा—उन्नतमाकृत्या गजोत्तमं गम्भीरवेदिनं गजराजमङ्कुशलतया सृण्या चोदयमानः प्रेरयन् कुशलतया गजचारणकर्मण्यतीवनैपुण्येन उपलक्षितः। तथा—अरिसेनानाशरतः अरिसेनानां रिपुचमूनां नाशे रतः भगदत्तः भगदत्तो नाम नृपः प्राग्ज्योतिषेश्वरः नानाशरतः नानाविधा नाराचनालीकस्वर्णपुङ्खविपाक्तादिभेदेन शरा यस्य तत्तादृशात् कौरवसैन्यात् कुरुकटकान्निरेत्य निर्गत्य ताः पार्थमहासेनाः पार्थानां पाण्डवानां महासेना अक्षौहिणीरूपाः अभ्याजगाम संमुखमाजगाम। कीदृशास्ताः। हासेन अट्टहासेन अस्ता दूरीकृताः॥

स्वच्छं दन्तं दधतं स्वच्छन्दं तं प्रचारयन्द्विपराजम्।
अस्तोकारिविमुक्तैरस्तोऽकारिक्षुरैर्न भगदत्तोऽयम्॥ ९७॥

तं द्विपराजं गजवरं स्वच्छन्दं स्वेच्छाचारिणम्। तथा—दन्तं स्वच्छमतिनिर्मलं दधतं प्रचारयन् कुशलतया अयं भगदत्तो राजा अस्तोकारिविमुक्तैः अस्तोका अनल्पा ये अरयः पाण्डवसेनावीराः तैर्विमुक्ताः क्षिप्ताः तादृशैः क्षुरैः रोमच्छेदकरबाणविशेषैः। 'रोमच्छेदककाण्डेक्षुक्षुरौ तीक्ष्णे भवेत्त्रिषु' इति मङ्खः। अस्तः क्षिप्तो दूरीकृत इत्यर्थः। न अकारि न कृतः। तं दूरीकर्तुं तच्छराः समर्था नासन्नित्यर्थः॥

नवशीकरमुक्ताभिर्द्रावितुरगस्तदीयकरमुक्ताभिः।
गच्छन्नतुलेभेशं गर्वेण वृकोदरोऽपि न तु लेभे शम्॥ ९८॥

तदीयकरमुक्ताः तदीयस्तत्संबन्धी भगदत्तद्विपराजसंबन्धी यः करो हस्तः तस्मान्मुक्ता निःसृताः ताभिस्तादृशीभिः नवशीकरमुक्ताभिः नवा ये शीकरा वमथुजलकणास्त एव मुक्ता मुक्ताफलानि ताभिः द्रावितुरगाः प्लुताश्वः वृकोदरोऽपि भीमोऽपि अतुलेभेशम् अतुलः निरुपमः य इभेशः गजराजः तं गच्छन्। अभिमुखमित्यर्थः। तादृशोऽपि शं सुखं न तु लेभे न प्राप॥

स जनितबन्धुरवं तं शैनेयरथं निरास बन्धुरवन्तम्।
सात्यकिरातेने न प्लुतः पुनः संगरं किरातेनेन॥ ९९॥

स भगदत्तगजवरः बन्धुरवन्तं बन्धुराणि रम्याणि धूर्युगाक्षनेम्यादीनि यस्मिन् स तादृशम्। 'बन्धुरं संनते नम्रे' इत्यमरः (?)। तं प्रसिद्धं शैनेयरथं शैनेयस्य सात्यकेः रथः तं निरास दूरीकृतवान्। कथं कृत्वा। जनितबन्धुरवं जनितः बन्धूनां सात्यकिसंबन्धिनां रवो हाहारवो यस्मिन् कर्मणि। क्रियाविशेषणमेतत्। सात्यकिः पुनः प्लुतः प्रचलितः सन् किरातेनेन किरातस्वामिना प्राग्ज्योतिषेश्वरेण भगदत्तेन सह संगरं युद्धं पुनर्न आतेने न कृतवान्॥

स हि तेपु यदा भङ्गं सहितेपु चकार सुप्रतीकारोही ।
कोऽपि च विभ्रस्तु मनः कोऽपि चकाशे न सुप्रतीकारो हि॥६०॥

(तदेवं प्रतीकारेण) हि निश्चये सुप्रतीकारोही सु शोभनानि प्रतीकानि अङ्गानि यस्य स सुप्रतीकः गजवरः सुप्रतीकाख्यं, दिग्गजवंशो वा सुप्रतीकः तमारोहतीति तादृशः सन् तेपु भीमसेनसात्यकिप्रभृतिपु महारथेपु सहितेपु मिलितेपु तथा कोऽपि सकोपं मनश्चित्तं विभ्रन्तु च यदा भङ्गं पराभवं चकार, तदा हि विस्मये कोऽपि वीरो न चकाशे न बभौ। कीदृशः । सुप्रतीकारः सु शोभनः प्रतीकारो वैरनिर्यातनं यस्मात्स एवंविधो कोऽपि पार्थसैन्ये महारथो नासीद्यो भगदत्तस्य वैरनिर्यातनं विदध्यादित्यर्थः ॥

सेना समदं तेन प्रमथ्यमानाद्रिशृङ्गसमदन्तेन ।
अधिकमिहाहावादाद्वार्तां तामर्जुनाय हाहावादात् ॥ ६१ ॥

अद्रिशृङ्गसमदन्तेन अद्रिशृङ्गस्य गिरिशिखरस्य समौ सदृशौ दन्तौ यस्य स तादृशेन तेन[1] भगदत्तद्विपवरेण समदं सगर्वं प्रमथ्यमाना प्रकर्षेण मथ्यमाना सेना चमूः अधिकम् इह रणे हाहावादात् हाहा इति पूत्कारात् अह कष्टं तां वार्तां प्रवृत्तिं सेनाप्रमथनरूपामर्जुनाय पार्थाय अवादात् निश्चयेन व्यतरत् । स्वसेनायां जनितहाहारवेण श्रुतेन अर्जुनोऽत्यन्तं निजसैन्यप्रमथनं ज्ञातवानित्यर्थः ॥

अथ गजमभियातेन श्वेताश्वेनातिमात्रमभिया तेन ।
भगदत्तोऽमरशक्तिर्विदधौ विध्वस्तचापतोमरशक्तिः ॥ ६२ ॥

अथानन्तरमतिमात्रं बहु अभिया अविद्यमाना भीर्भयं यस्य स तादृशेन तथा गजं भगदत्तगजमभि संमुखं यातेन गतेन तेन श्वेताश्वेन अर्जुनेन भगदत्तः प्राग्ज्योतिपेश्वरः विध्वस्तचापतोमरशक्तिः विध्वस्तो दलितश्चापो धनुः तोमरमायुधविशेषः शक्तिश्चायुधविशेषो यस्य स तादृशः विदधौ कृतः । कीदृशो भगदत्तः । अमरशक्तिः अमरस्येव देवस्येव शक्तिः सामर्थ्यं यस्य स तादृशः ॥

शत्रुसमाजावार्यः शक्रभुवे वैष्णवाख्यमाजावार्यः ।
अर्कमिवारितमस्त्रं भगदत्तो मुक्तवानवारितमस्त्रम् ॥ ६३ ॥

सः आर्यः प्रभुः शत्रुसमाजावार्यः शत्रुसमाजेन रिपुसमूहेन अवार्यः वारयितुमशक्यः अवारितं न केनापि वारितं वैष्णवाख्यं विष्णुना प्रसादीकृतं वैष्णवास्त्रमाजौ संग्रामे शक्रभुवे अर्जुनाय मुक्तवान् चिक्षेप । कीदृशमस्त्रम् । अरितमस्त्रम् अरय एव तमांसि तेभ्यस्त्रायते इति अरितमस्त्रम् । 'त्रैङ् पालने' धातुः । कमिव । अर्कं श्रीसूर्यमिव । अर्कमपि कीदृशम् । तमस्त्रम् ॥

१. पुस्तकद्वयेऽप्येवं पाठः. 'स भगदत्तः द्विपवरेण' इति पाठो भवेत्.

वेगादेव स्वंसः स्वयमस्त्रमधत्त वासुदेवः स्वं सः ।
तच्च शुभोरसि तस्य स्रगजनि रम्या जगत्प्रभोरसितस्य ॥ ६४ ॥

वासुदेवः । 'सर्वत्रासौ समस्तं स वसत्यत्रेति वै यतः । तेनासौ वासुदेवेति विद्वद्भिः परिकीर्तितः॥' इति विष्णुपुराणम् । वसुदेवस्यापत्यं वा स श्रीकृष्णः स्वमस्त्रं वैष्णवाख्यं वेगादेव तेन भगदत्तेन अर्जुनाय क्षिप्तं स्वयमधत्त । अर्जुनप्रतिपालनार्थमिति शेषः । कीदृशो वासुदेवः । स्वंसः सु शोभनौ मांसलावंसौ स्कन्धौ यस्य सः । तस्य वैष्णवमस्त्रमसितस्य कलौ युगे गृहीतश्यामवर्णस्य तस्य जगत्प्रभोः जगन्नाथस्य श्रीकृष्णस्य शुभोरसि कौस्तुभमणि(श्रि)त्यामङ्गलवक्षःस्थले रम्या स्रक् मृदुर्मनोहरा माला इव अजनि जाता । अनायासकारित्वात् ॥

अथ मतिमानिषुमहिते शक्रतनूजो मुमोच मानिषु महिते ।
तद्भिन्नः स ममार स्थानं च महेन्द्रसद्मनः सममार ॥ ६५ ॥

अथानन्तरं मतिमान्प्राज्ञः शक्रतनूजः अर्जुनः मानिषु मानवत्सु महिते पूजिते अहिते शत्रौ भगदत्तनृपे इषुं बाणं मुमोच चिक्षेप । स च भगदत्तः तद्भिन्नः तेनार्जुनबाणेन भिन्नो विदारितो ममार मृतः । द्रोणाचार्यस्य सेनापतित्वे द्वितीयदिवसे इति शेषः । स च भगदत्तः महेन्द्रसद्मनः इन्द्रस्य गृहस्य समं तुल्यं स्थानं पदं च आर गतवान् । तादृशि संग्रामे तादृशान्महारथादर्जुनादवाप्तवधपुण्यमहिमेत्यर्थः ॥

अथ भगदत्तेभान्तं शरमिषुधावहरदग्निदत्ते भान्तम् ।
तेन ततान तदन्तं सोऽपि नदन्नवनिमभजतानतदन्तम् ॥ ६६ ॥

अथानन्तरं भगदत्तेभान्तं भगदत्तस्य य इभः हस्ती तस्य अन्तं नाशम्, तथा भान्तं दीप्यमानं शरं बाणम् अग्निदत्ते खाण्डववनदाहेन संतुष्टाग्निना प्रसादीकृते इषुधौ अक्षये तूणे शरमहरत् । ततः शरं निष्कर्षयामासेत्यर्थः । तेन च शरेण सोऽर्जुनः तदन्तं तस्य भगदत्तनृपहस्तिनः अन्तं ततान । सोऽपि हस्ती नदन् तद्बाणक्षतेन रोरूयमाणः अवनिं भूमिमभजत पतितः । मृत इत्यर्थः । कथम् । आनतदन्तम् आनतौ नम्रीभूतौ दन्तौ यस्मिन् कर्मणि तथा ॥

कृत्वासौ कर्यन्तं पार्थो गजवीर्यदत्तसौकर्यं तम् ।
जिष्णुर्जन्यायातः पुनरपि संशप्तकानजन्यायातः ॥ ६७ ॥

असौ पार्थः अर्जुनः गजवीर्येण हस्तिवीर्येण दत्तं सौकर्यं सुकरस्य भावः सौकर्यम् । कर्मणां सौकर्यमित्यर्थः । गजबलेनैव दत्तं सौकर्यं यस्य सः तादृशस्तं भगदत्तं जिष्णुः सन् जेता सन् असौ पार्थोऽर्जुनः कर्यन्तं भगदत्तकरिणः अन्तः नाशस्तं कृत्वा अतोऽनन्तरं पुनरपि जन्याय युद्धाय संशप्तकान् संशप्तकगणान् संग्रामे प्रतिज्ञाय अनिवर्ति-

जनानायात उपायात उपागतोऽजनि जातः । 'संशप्तकास्तु समये संग्रामादनिवर्तिनः' इत्यमरः ॥

अथ रविरस्तमहास्तद्द्युतिभिरिवावजृम्भिताभिरस्तमहास्त ।
क्षतकङ्कटकाये ते सेने द्वे अपि जवेन कटकाये ते ॥ ६८ ॥

अथानन्तरम् अवजृम्भिताभिः उल्लसिताभिस्तद्द्युतिभिः तस्यार्जुनस्य या द्युतयः कान्तयस्ताभिः अस्तमहाः अस्तं दूरीकृतं महस्तेजो यस्य स तादृगिव रविः सूर्यः अस्तमस्तगिरिम् अहास्त अगच्छत् । '¹हि गतिवृद्ध्योः' धातुः । क्षतकङ्कटकाये क्षतः कङ्कटः कञ्चुकं येषां ते क्षतकङ्कटाः तादृशाः काया देहा ययोस्ते द्वे सेने अपि जवेन वेगेन कटकाय सैन्याय इते गते निवेशं कर्तुमित्यर्थः ॥

निशि भगदत्तान्तेन स्वजनेन समन्वितोऽवदत्तान्तेन ।
अरिगणनोदी नत्वा द्रोणाचार्यं सुयोधनो दीनत्वात्(द्) ॥ ६९ ॥

दिनावसाने निशि भगदत्तान्तेन भगदत्तस्यान्तो नाशस्तेन हेतुना तान्तेन खिन्नेन स्वजनेन बन्धुवर्गेण समन्वितो भूत्वा अरिगणनोदी अरिगणं शत्रुगणं नोदयति प्रेरयति तादृक् दुर्योधनो दीनत्वात् दैन्यात् द्रोणाचार्यं नत्वा प्रणम्य अवदत् ॥

मतिमन्नङ्ग मयि त्वा मन्ये स्निग्धं(तात) यदर्जुनं गमयित्वा ।
न त्वं नह्यस्यहितं वाञ्छसि नूनं जनस्य न ह्यस्य हितम् ॥ ७० ॥

हे अङ्ग इष्ट मतिमन् प्राज्ञ तात द्रोणाचार्य, अर्जुनं गमयित्वा दूरं नीत्वापि त्वमहितं शत्रुं युधिष्टिरं यन्न नह्यसि न बध्नासि । न मदधीनीकुरुषे इत्यर्थः । 'णह बन्धने' धातुः । तत्तस्मात्कारणात् हे अङ्ग गुरो द्रोणाचार्य अहं मयि विषये त्वा त्वां स्निग्धं सस्नेहं मन्ये । सोल्लुण्ठनमुक्तिः । मयि स्निग्धं त्वां न मन्ये इत्यर्थः । नूनं निश्चये हि निश्चये । त्वमस्य जनस्य मल्लक्षणस्य हितं न वाञ्छसि । 'नूनं हि' इति द्वे अप्यव्यये निश्चयार्थे । निश्चयार्थस्य दृढत्वावबोधनाय वीप्सया निश्चितमेतन्निश्चितमेतदित्यर्थः ॥

वचनमसाविदमस्य श्रुत्वा रुपितेन चेतसा विदमस्य ।
मतिमकरोद्वेगेन व्यसनमिदं तरितुं गुरुतरोद्वेगेन ॥ ७१ ॥

विदमस्य विगतो दमोऽन्तरिन्द्रियोपशमो यस्य स तादृशस्य अस्य दुर्योधनस्य वचनं श्रुत्वा गुरुतरोद्वेगेन महोद्वेगवता रुपितेन सक्रोधेन चेतसा वेगेन शीघ्रमेव इदं व्यसनं दुर्योधनसत्क(क्त)मरिसंकटं तरितुं मतिं बुद्धिमकरोत् ॥

रणकेलीयातेषु व्यग्रोऽरिवलेषु यो वलीयानेषु ।
²अध्वनि हन्ताश्वस्तं भवतु तवायं जनो निहन्ता श्वस्तम् ॥ ७२ ॥

---

१. 'ओहाङ् गतौ' इति धातुर्बोध्यः.　　२. 'चित्तं' मूल०.

हे राजन् दुर्योधन, एषु अरिवलेषु शत्रुसैन्येषु मध्ये यो महावीरः, रणकेलीयानेषु रणक्रीडायात्रासु व्यग्रः व्यग्रचित्तोऽस्ति । तथा एष्वरिवलेषु यश्च बलीयानतिवलोऽस्ति, अयं जनो मल्लक्षणः तं वीरं श्वो दिवसे निहन्ता हनिष्यति । हन्त हर्षे । इदं तव अश्वस्तम् आश्वासः । 'नपुंसके भावे क्तः' । अध्वनि अविद्यमानः शब्दो यस्य तत्तादृशम् अशब्दवाच्यम् इदमेवाश्वस्तं तव भवतु । अयमेवाश्वासस्तव भवत्वित्यर्थः ॥

द्रोणाचार्यः पुनस्तं दुर्योधनं किं सान्त्वयामासेत्याह—

तं व्यूहं तनवानि द्रक्ष्यसि कर्माणि यत्र हन्त नवानि ।
यं न नरा जानीयुर्न च रिपुचक्राणि सहितराजानीयुः ॥ ७३ ॥

हे राजन्, त्वं द्रक्ष्यसि यत्र व्यूहे सेनारचनात्मके हन्त हर्षे नवानि नवनवानि अद्भुतानि कर्माण्यरिदुर्भेद्यत्वादीनि भविष्यन्ति तं व्यूहमहं तनवानि विस्तारये । 'तनु विस्तारे' । पुनस्तं व्यूहं कमित्याह—नराः सामान्यजनाः यं व्यूहं न जानीयुः, तथा सहितराजानि सहितः राजा प्रभुर्येषां तानि सहितराजानि । अतिराजशब्दवत् सहितराजशब्दोऽप्यदन्तः[1] । एवंविधानि रिपुचक्राणि शत्रुबलानि यं च व्यूहं न ईयुः न गमिष्यन्ति ॥

इत्थं वाणीमुक्त्वा द्रोणः करुणां रथी च वाणी मुक्त्वा ।
कर्तुमनाः समरचयन्नलिनव्यूहं जितोशनाः समरचयत् ॥ ७४ ॥

इत्थमनेन प्रकारेण वाणीं वाचमुक्त्वा रथी रथवान् वाणी सशरश्च करुणां दयां मुक्त्वा समरचयं युद्धसमूहं रचयन् करिष्यन् नलिनव्यूहं पद्मव्यूहं सेनारचनानिवेशं समरचयत् अकृत । कीदृशः । जितोशनाः जितः प्रज्ञया उशनाः शुक्रो येन स तादृक् ॥

परुषगिरोषसि तेन त्रिगर्तपतिना तदा च रोषसितेन ।
तद्वचनावहितेन व्यपकृष्टौ कृष्णफल्गुनावहितेन ॥ ७५ ॥

तदा चोषसि प्रभातकाले रोषसितेन कोपवद्धेन तथा परुषगिरा कठिनवचसा तद्वचनावहितेन तस्य दुर्योधनस्य यद्वचनं तत्र अवहितेन सावरोधेन तेन अहितेन रिपुणा त्रिगर्तपतिना सुशर्मणा कृष्णफल्गुनौ श्रीकृष्णार्जुनौ व्यपकृष्टौ दूरं नीतौ तत्सैन्यद्वयमेलकादित्यर्थः ॥

पार्थाः सिन्धुरवन्तं पद्मव्यूहं समीक्ष्य सिन्धुरवं तम् ।
प्रतिहतवेगा हन्त व्यसनसमुद्रं महाहवेऽगाहन्त ॥ ७६ ॥

---

१. 'अतिराज'शब्दस्य तत्पुरुषत्वेनादन्तत्वेऽपि बहुव्रीहावदन्तत्वस्य दुःशकत्वाच्चिन्त्यमेतत् । तस्मादर्शआद्यजन्तहितशब्दस्य राजन्शब्देन कर्मधारये टचादन्तत्वं निष्पाद्य हितराजेन सहितानि सहितराजानि—इत्येवं समाधेयम् । यद्वा—नान्तत्व एव जसि दीर्घेण रूपसिद्धिः.

हन्त कष्टे। सिन्धुरवं सिन्धुवत्समुद्रवत् रवः कोलाहलो यत्र स तादृशम्, तथा सिन्धुरवन्तं मतङ्गजसहितं पद्मव्यूहं द्रोणाचार्यरचितं समीक्ष्य दृष्ट्वा प्रतिहतवेगाः पार्थाः महाहवे महायुद्धे व्यसनसमुद्रान्तर्गता आसन्नित्यर्थः ॥

द्विषतामारम्भान्तं सौभद्रं धर्मजः कुमारं भान्तम् ।
अरिसमुदायान्तस्य व्यूहस्य नियुक्तवान्भिदायां तस्य ॥ ७७ ॥

द्विषतां शत्रूनामारम्भस्य अन्तो नाशरूपः तम्, तथा भान्तं शोभमानं कुमारं सौभद्रमभिमन्युं धर्मजो युधिष्ठिरः तस्य व्यूहस्य पद्मव्यूहस्य भिदायां भेदनं भिदा तस्यां नियुक्तवान् आज्ञापयामास । तस्य व्यूहस्य कीदृशस्य । अरिसमुदायान्तस्य अरीणां रिपूणां यः समुदायः संघस्तस्य अन्तो नाशरूपस्तस्य ॥

स च नृपकेसरवन्तं द्रोणे तिष्ठति सकार्मुके सरवं तम् ।
दृढमतिरभिनद्धासी रभसादभिमन्युरिषुभिरभिनद्धासी ॥ ७८ ॥

सकार्मुके सधनुषि द्रोणे द्रोणाचार्ये सति सरवं सकोलाहलं तं पद्मव्यूहम्, तथा नृपकेसरवन्तं नृपा एव तद्रक्षार्थं स्थापिताः केसराणि किंजल्काः तद्वन्तमभिमन्युः सौभद्रः इषुभिः शरैः अभिनत् बिभेद । कीदृशः । दृढमतिः दृढधीः । पुनः कीदृशः । अभिनद्धासिः अभिनद्धः ग्रथितः असिः खड्गो येन स तथा । पुनः कीदृशः । हासी वीरान् प्रति अट्टहासविधायकः ॥

तं पुनराजाविष्टं पद्मव्यूहं समीक्ष्य राजा विष्टम् ।
कर्तुं रक्षां तस्य प्रचचाल (समं)[1] चमूभिरक्षान्तस्य ॥ ७९ ॥

आजौ संग्रामे इष्टमभिलषितं तमभिमन्युं पुनः पद्मव्यूहं कर्मभूतमाविष्टं प्रविष्टं समीक्ष्य चमूभिः सेनाभिरुपलक्षितस्य अक्षान्तस्य परपरिभवाक्षमस्य तस्य अभिमन्योः रक्षां कर्तुं राजा युधिष्ठिरः प्रचचाल अगमत् ॥

तत्र समुद्यतमानांस्तद्गुप्त्यै पाण्डवान्समुद्यतमानान् ।
बिभ्रदसिं हरवरतः सिन्धुपतिस्तान्रुरोध सिंहरवरतः ॥ ८० ॥

तत्र तस्मिन् पद्मव्यूहरचने तद्गुप्त्यै तस्याभिमन्योर्गुप्त्यै रक्षायै यतमानान् सयत्नान् तथा समुद्यतमानान् सम्यक् उद्यतः प्रवृत्तः मानः वीरंमन्यता येषां ते तादृशान् पाण्डवान् अर्जुनविरहितांश्चतुरः युधिष्ठिरादीन् सिन्धुपतिर्जयद्रथो रुरोध विफलायासान् व्यधत्त । अत्र हेतुमाह—कीदृशः । हरवरतः श्रीशंभुदत्तवरात् त्वं विनार्जुनं चतुरोऽपि पार्थान् रोद्धुं क्षमो भवेति वितीर्णाद्वरात् असिं खड्गं बिभ्रत् धारयन् । पुनः कीदृशः । सिंहरवरतः सिंहनादरतः ॥

---

१. मूलपुस्तकपाठः.

द्विषदवलम्बालोपि प्रविश्य पार्थात्मजो बलं बालोऽपि।
संग्रामे कोदण्डी काल इव चचार समरमेको दण्डी॥ ८१॥

द्विषदवलम्बालोपि द्विषतां शत्रूणामवलम्बमाश्रयमालोपयतीति तादृशं तद्बलं सैन्यं कुरूणां प्रविश्य बालोऽपि काकपक्षधरोऽपि पार्थात्मजः अभिमन्युः कोदण्डी धनुर्धरः तथा दण्डी दण्डधरः संग्रामे काल इव समरं संग्रामं चचार अचरत्॥

स ततानामोघेषु स्वैरं क्रीडां विरोधिनामोघेषु।
देवचमूर्धन्यस्य प्रसूनवृष्टिं मुमोच मूर्धन्यस्य॥ ८२॥

सः अभिमन्युः अमोघेषु कृतार्थेषु विरोधिनां रिपूणामोघेषु व्रजेषु स्वैरं यथेच्छं क्रीडां समरक्रीडां विततान विस्तारयामास। ततश्च धन्यस्य प्रशस्तभागधेयस्य अस्य अभिमन्योर्मूर्धनि शिरसि प्रसूनवृष्टिं पुष्पवृष्टिं देवचमूः सुरसेना मुमोच॥

अथ कृतमन्त्रस्तेन द्रोणेन वृषः ससंभ्रमं त्रस्तेन।
संग्रामायस्तस्य क्षुरेण धनुरच्छिनत्समायस्तस्य॥ ८३॥

अथानन्तरं ससंभ्रमं तस्य बालस्याभिमन्योस्तादृगचिन्त्यं पराक्रमं वीक्ष्य स व्याकुलीभावं त्रस्तेन भीतेन तेन द्रोणेन द्रोणाचार्येण कृतो मन्त्रः गुप्तिवादो येन स तादृशः वृषः श्रेष्ठः। सेनानीरित्यर्थः। कर्णः। 'शुक्ले मूषके श्रेष्ठे सुकृते वृषभे वृषः' इत्यमरः। यद्वा वृषो धर्मस्वरूपः। महादातृषु मुख्यत्वात्। तस्य वृषः कर्णः समायः सच्छलः सन् संग्रामायस्तस्य संग्रामे युद्धे महद्युद्धं विधाय आयस्तस्य खिन्नस्य अभिमन्योः क्षुरेण रोमच्छेदकशरविशेषेण धनुश्चापमच्छिनत् चिच्छेद। 'रोमच्छेदककाण्डेक्षुक्षुरौ तीक्ष्णे भवेत्रिषु' इति मङ्खः॥

सारथिरस्य कृपेण द्रोणेनाश्वाश्च रणशिरस्यकृपेण।
यमलोकमनीयन्त ध्रुवमनयान्नैव कर्म कमनीयं तत्॥ ८४॥

अस्य च अभिमन्योः सारथिः सूतः ध्रुवं निश्चये अनयात् अनीतेः महाजनासंमतात् कृपेण कृपाचार्येण यमलोकमनीयन्त। हत इत्यर्थः। तथा अकृपेण निष्कृपेण द्रोणेन च अस्याभिमन्योः अश्वा हयाश्च रणशिरसि संग्राममूर्ध्नि यमलोकमनीयन्त। मारिता इत्यर्थः। अत्रार्थान्तरन्यासमाह—तत्तादृशं कर्म नैव कमनीयं न रम्यम्। महापुरुषासंमतमित्यर्थः॥

स हि रिपुसमुदायस्तं किं बहुना शरशतेन समुदायस्तम्।
बालं फल्गुनरहितं न्यपातयच्छलमुपैत्य फल्गुनरहितम्॥ ८५॥

हि निश्चये स रिपुसमुदायः शत्रुसमूहः द्रोणकर्णकृपशल्यकृतवर्माद्याः समुत् सह मुदा अभिमन्युवधं प्रति तुष्ट्या वर्तते यः स तादृक्। किं बहुनोक्तेन ततः द्रोणाचार्यस्य सेनापतित्वे तृतीये युद्धदिवसे शरशतेन बाणशतेन आयस्तमतिखिन्नं फल्गुनरहितं अर्जुन-

विनाकृतं बालं काकपक्षधरं तमभिमन्युं न्यपातयत् । अहनत् इत्यर्थः । किं कृत्वा । छलमुपेत्य छलं पूर्वोक्तं कृत्वा । कीदृशं छलम् । फल्गुनरहितम् फल्गवः नीचा ये नराः तेभ्यो हितम् ॥

ज्ञात्वा घोराद्रवतः कौरवसैन्यस्य ते लघोराद्रवतः ।
आर्जुनिमापन्नतनुं पाण्डुतनूजा विषादमापन्नतनुम् ॥ ८६ ॥

लघोः नीचस्वभावस्य तथा आद्रवतः आसमन्तात् द्रवतः सद्योगं कौरवसैन्यस्य घोरात् कठिनात् रवतः शब्दात् आर्जुनिमभिमन्युमापन्नतनुमापन्ना स्वां वैष्णवीं कलां प्राप्ता तनुः शरीरं यस्य स तादृक् तं तादृशम् । रणशिरसि हतं ज्ञात्वेत्यर्थः । पाण्डुतनूजा युधिष्ठिराद्याः चत्वारः ससैन्याः अतनुं महान्तं विषादं दुःखमापन् प्रापुः ॥

अथ रिपुसेनावलितः सायमहृष्टेन मानसेनावलितः ।
श्रुतवानस्तमुदं तं स्वजनं संप्राप्य फल्गुनस्तमुदन्तम् ॥ ८७ ॥

सायं समये अहृष्टेन भाविदुःखवेदनासूचकेन मानसेन रिपुसेनावलितः शत्रुचमूपङ्क्तेः सकाशात् आवलितः प्रत्यावृत्तः फल्गुनः अर्जुनः अस्तमुदमस्तं गता अभिमन्युघातेन मुत् प्रीतिर्यस्य स तादृशं स्वजनं स्वकीयलोकं संप्राप्य तं तथाविधमुदन्तं वृत्तान्तमभिमन्युवधाख्यं श्रुतवान् ॥

अथार्जुनः स्वसुतस्याभिमन्योर्वधेन विदीर्णहृदयो विलापं कुर्वन्नाह—

अनुचितमङ्ग तवादस्त्यक्त्वा यद्व्रजसि जनमिमं गतवादः ।
गमनं वत्स विधेहि त्वं मत्सहितो रमे भवत्सविधे हि ॥ ८८ ॥

हे अङ्ग सुत अभिमन्यो, तव अदः एतदनुचितम् । अदः किमित्याह—यदिमं जनं मल्लक्षणं त्यक्त्वा व्रजसि । परलोकमित्यर्थः । कीदृशस्त्वम् । गतवादः गतो वादो मया सह संलापो यस्य स तादृशः । चेत्त्वैतदभिलषितं तर्हि हे वत्स स्नेहपात्र, त्वं मत्सहितः गमनं यात्रां विधेहि । हि यस्मात्कारणात् भवत्सविधे भवन्निकट एव रमे हर्षं लभे ॥

क्रोशति नामात्र मयि प्रदिश मुखेन्दोर्विभावनामात्रमयि ।
एहि कृपां सौभद्र मैवं शेष्व महति पांसौ भद्र ॥ ८९ ॥

अयि वत्स, अत्र च मयि क्रोशति क्रन्दति मुखेन्दोस्त्वन्मुखचन्द्रमसः विभावनामात्रमीषद्दर्शनमात्रं प्रदिश देहि । हे सौभद्र सुभद्रातनूज अभिमन्यो, त्वं कृपां दयामेहि दयां कुरु । हे भद्र शुभलक्षण, त्वं च एवमनुचितं कृत्वा महति पांसौ रणभूमिसंबन्धिनि मा शेष्व मा शयिष्ठाः । 'शीङ् स्वप्ने' धातुः ॥

वपुषा कौमारेण त्वया विना विरहितैव[1] कौ मारेण ।
कथमविषादी प्राणान्दध्यां मध्ये द्विषां त्विषा दीप्राणाम् ॥ ९० ॥

---

१. 'विहरतैव' मूल०.

हे वत्स, कौमारेण कुमारस्य बालस्येदं कौमारं तेन वपुषा शरीरेण उपलक्षितेन त्वया विना कौ भूमौ मारेण कामेन विरहितैव विरहिण्या भावः विरहिता सा भवति। परलोकं गतेन त्वया विना भूमिः मदनविरहितैवेत्यर्थः । त्वन्मरणेनापि अविषादी स्वस्थः सन् त्विषा कान्त्या दीप्राणां ज्वलतां द्विषां शत्रूणां मध्ये कथं प्राणानसून् दध्यां धारयामि ॥

इत्थं सुतमोहरतः श्रवणाद्वचसोऽच्युतस्य सुतमो हरतः ।
स श्वेताश्वस्ततया गिरा च सुहृदामयुज्यताश्वस्ततया ॥ ९१ ॥

इत्थमनेन प्रकारेण सुतमोहरतः सुतस्याभिमन्योर्मोहो मूर्छा मरणरूपा तत्र रतः। यद्वा सुतात् मृतात् यो मोहः मूर्छारूपः दुःखजनितस्तत्र रतः। तथा अच्युतस्य कृष्णस्य वचसः तत्वज्ञानरूपस्य 'य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥' इत्यादेः सुतमोहरतः सुष्ठु यत्तमः अज्ञानजं तत् हरतीति तादृशात् श्रवणात्, तथा सुहृदामन्येषां च सात्यकिप्रभृतीनां च गिरा वाचा आश्वस्ततया आश्वासयुक्तया कर्त्र्या स श्वेताश्वोऽर्जुनः अयुज्यत युयुजे। किंचिदाश्वस्तोऽभूदित्यर्थः ॥

अथ सपदि व्यापारं संचिन्त्य जयद्रथस्य दिव्यापारम् ।
सुतशोकोपेतस्य क्षणान्मनो मग्नमजनि कोपे तस्य ॥ ९२ ॥

अथानन्तरं दिव्यममानुष्यं श्रीशंभुप्राप्तवरमहिम्ना युधिष्ठिरादिपार्थचतुष्टयरोधनरूपं तथा अपारं च जयद्रथस्य सिन्धुराजस्य व्यापारं रणकर्मव्यापारं सपदि तत्क्षणं संचिन्त्य एतत्कर्म मदीयसुतवधरूपं जयद्रथहेतुकमेवेति ज्ञात्वा सुतशोकोपेतस्य सुतशोकेन अभिमन्युशोकेन युक्तस्य तस्य अर्जुनस्य मनः क्षणात् कोपेन मग्नं ब्रुडितमजनि जातम् ॥

अर्जुनः सुतशोकेन जयद्रथवधं प्रति प्रतिज्ञां करोति—

समरभुवि शस्तस्य क्षयं न कुर्यां स्थितस्य विश्वस्तस्य ।
यद्यरिसंसद्यस्यामाविष्टो जातवेदसं सद्यः स्याम् ॥ ९३ ॥

विश्वस्तस्य अकुतोभयस्य समरभुवि रणभूमौ स्थितस्य तस्य जयद्रथस्य क्षयमस्यामरिसंसदि शत्रुसभायामाविष्टः प्रविष्टो यदि न कुर्यां तदा सद्यः तत्क्षणमेव जातवेदसं ज्वलितमग्निं प्रविष्टः स्यां भविष्यामि । ज्वलितेऽग्नौ स्वदेहं क्षिपामीत्यर्थः ॥

इत्थं कोपमितेन ब्रुवता पार्थेन पावकोपमितेन ।
आनयतासिं धुवनं धूममिवेद्धं दिधक्षता सिन्धुवनम् ॥ ९४ ॥

इत्थमनेन प्रकारेण पावकोपमेन क्रुधा ज्वलता अग्निनेव कोपं क्रोधमितेन गतेन ब्रुवता तथा धूममिव काष्र्ण्येन धूमतुल्यमसिं खड्गं धुवनं कम्पमानयता कम्पयता तथा सिन्धुवनं

सिन्धवः जयद्रथनिवासभूता जनपदविशेषाः त एव वनं दिधक्षता दग्धुमिच्छता पार्थेनार्जुनेन कर्मा इद्धं ज्वलितम् । भावे क्तः । 'त्रिइन्धी दीप्तौ' ॥

अथ कृतसंचारेभ्यः पाण्डवसैन्ये ससाध्वसं चारेभ्यः ।
श्रुतवान्स बभूवार्तः सिन्धुपतिस्तत्क्षणेन सवभूवार्तः ॥ ९५ ॥

अथानन्तरं पाण्डवसैन्ये पार्थकटके कृतसंचारेभ्यश्चारेभ्यः प्रणिधिभ्यः सकाशात् श्रुतवान् स सिन्धुपतिः जयद्रथः ससाध्वसं सभयमार्तः अतिपीडितः तत्क्षणेन बभूव । स कीदृशः । सवभूवार्तः बवयोरैक्यात् सवभूवार्तः सवस्य यज्ञस्य भूः सवभूर्यज्ञभूमिः सैव वार्तं कुशलं यस्य स तादृगभूत् । यद्वा सवात् यज्ञात् भूरुत्पत्तिर्यस्य तत्तादृशं वार्तं कुशलं यस्य सः । कदाचिदेतन्महासंकटान्मुक्तिर्मम केनापि रहःकृतेन यज्ञविशेषेण स्यादिति तादृगभूदित्यर्थः । 'यज्ञः सवोऽध्वरो यागः' इत्यमरः ॥

अधिकतरक्षामस्य स्वयं प्रतिश्रुत्य सपदि रक्षामस्य ।
द्रोणो दयया तेने समये व्यूहं जवादुदययातिने ॥ ९६ ॥

सपदि तत्क्षणं तच्छ्रवणेन अधिकतरक्षामस्य नितरां कृशस्य अस्य जयद्रथस्य दयया कृपया रक्षां स्वयं प्रतिश्रुत्य प्रतिज्ञाय द्रोणो द्रोणाचार्यः उदययातिने समये उदयमुदयगिरिं यातः इनः सूर्यः यस्मिन् स तादृशो समये काले । प्रभातसमये इत्यर्थः । प्रभातसमये जवाद्वेगेन व्यूहं सेनारचनारूपं व्यूहं तेने विस्तारयामास ॥

तस्य सराजन्यस्य द्रोणः पृष्ठेऽथ सिन्धुराजं न्यस्य ।
स्वयमलमकरोदग्रं व्यूहस्याम्बुधिमिवोग्रमकरोदग्रम् ॥ ९७ ॥

सराजन्यस्य सह राजन्यैः क्षत्रियकुमारैः वर्तते यः स तादृशस्य अ(न)स्य चक्रव्यूहस्य मध्ये सिन्धुराजं जयद्रथं न्यस्य द्रोणो द्रोणाचार्यः स्वयं अलमत्यर्थम् अग्रमग्रस्थितमकरोत् । स्वं कमिव । अम्बुधिमिव । कीदृशं तम् । उग्रमकरोदग्रम् उग्रा ये मकराः जलदविशेषाः तैरुदग्रो महान् तम् ॥

अथ रिपुराजौघोरः पाटनकृत्पाण्डुसूनुराजौ घोरः ।
हित्वा दक्षो भीतं द्रोणस्य व्यूहमविशदक्षोभी तम् ॥ ९८ ॥

आजौ संग्रामे घोरः कठिनः तथा रिपुराजौघोरः पाटनकृत् रिपुराजानां शत्रुनृपाणां य ओघः समूहः तस्य उरसः वक्षसः पाटनं करोति तादृशः । तथा—दक्षो रणकर्मनिपुणः । तथा—अक्षोभी न क्षोभवान्, पाण्डुसूनुः अर्जुनः, भीतं भयं हित्वाभीतमिति 'नपुंसके भावे क्तः' । द्रोणस्य व्यूहमविशत् ॥

निजबलमत्रासरति स्वयं गुरुर्न्यरुणदेनमत्रासरतिः ।
प्रणमन्नादरयोगादाचार्यं फल्गुनः सनादरयोऽगात् ॥ ९९ ॥

अग्रार्जुने निजबलं स्वसैन्यमासरति आविशति सति, अत्रासरतिः अविद्यमाना त्रासे भये रतिर्यस्य सः निर्भयो गुरुः स्वयमेतमर्जुनं न्यरुणत् रुरोध संमुखीवभूव। फल्गुनः अर्जुनश्च [आदरयोगात्सत्कारयोग्यत्वात्]एनमाचार्यं प्रणमन् रथादवरुह्य दण्डवत् प्रकर्षेण नमन् आगात्। कीदृशः। सनादरयः सहनादेन सिंहनादेन रयेन वेगेन वर्तते यः स तादृक्॥

पार्थं संधावन्तं नैव द्रोणो रुरोध संधावं तम्।
हतनानानरमन्तेवासिव्यापत्सु सज्जना न रमन्ते॥ १०० ॥

संधावन्तं संधा जयद्रथ[मारण]प्रतिज्ञा सा विद्यते यस्य तं संधावं सम्यक् धावः तं प्रति धावनं यस्य स तादृशं तं पार्थमर्जुनं द्रोणः गुरुः नैव रुरोध नैव न्यषेधत्। कीदृशमपि। हतनानानरं हता नानाविधा महावीरवीरप्राकृतजनाद्या येन स तादृशमपि। अत्र हेतुमाह—सज्जनाः सन्तो विपश्चितः ये जनाः। 'सन् सुधीः पण्डितः कविः' इत्यमरः। ते अन्तेवासिव्यापत्सु अन्तेवासिनां शिष्याणां व्यापत्सु संकटेषु न रमन्ते न हृष्यन्ति। अतोऽन्तेवासिनोऽर्जुनस्य हतनानानरस्यापि रोधनं नाकरोदित्यर्थः॥

निरचितवाणावलिना किरीटिना दलितवारवाणा बलिना।
वसुधामापन्नमिता राजानः सैन्यवृन्दमापन्नमिताः॥ १०१ ॥

निरचितवाणावलिना निरचिता नितरां रचिता वाणावलिः निरन्तरशरावलिर्येन स तादृशेन तथा बलिना बलवता किरीटिना अर्जुनेन दलितवारवाणाः दलिताश्चूर्णिताः वारवाणाः कञ्चुकानि येषां ते तादृशाः अमिता अपरिमिताः राजानः वसुधां भूमिमापन् प्रापुः। पतिता इत्यर्थः। कीदृशाः। आपन्नं युद्धार्थमागतं सैन्यवृन्दं तत्र गताः॥

अमुञ्चदपक्षेमेऽयं पुरः शरं जिष्णुरहितपक्षेऽमेयम्।
त्रिभुवननाथोपेते द्रवति रथे पृष्ठतो मुनाथो पेते॥ १०२ ॥

अपक्षेमे अपगतं क्षेमं कल्याणं यस्य स तादृशे अहितपक्षे शत्रुपक्षे अयं जिष्णुः अर्जुनः अमेयमपरिमेयं शरम्। जातावेकवचनम्। शरान् अमुञ्चत् मुमोच। अथो अनन्तरं त्रिभुवननाथोपेते श्रीकृष्णयुक्ते रथे। (द्रवति सति) अमुना अर्जुनेन पृष्ठतः पेते पतितम्। गतमित्यर्थः॥

कुरुगान्धारावन्तिद्रविडान्यबलानि रुधिरधारावन्ति[1]।
कृत्वा मज्जनदानां शतान्यसृज्यन्त तेन मज्जनदानाम्॥ १०३ ॥

तेनार्जुनेन कुर्वित्यादि। कुरवः जनपदाः, गान्धाराश्च जनपदाः, अवन्तयश्च, द्राविडाश्च, अन्ये च जनपदविशेषास्तेषां बलानि सैन्यानि रुधिरधारावन्ति रक्तधारायुतानि

१. 'द्रविडान्ध्रबलानि' मूल०.

कृत्वा मज्जनदानां, मज्जनं ब्रुडनं ददति मज्जनदास्तेषां तादृशानां मज्जनदानां मज्जादेहिनां धातुविशेषस्तस्य ये नदा ह्रदास्तेषां शतानि अमृज्यन्त रचितानि ॥

भूत्वासन्नाश्वस्तान्हत्वा[1] च रणस्थ एव सन्नाश्वस्तान् ।
पार्थः सुरवरयोगात्सायाह्ने सैन्धवं च सुरवरयोऽगात् ॥ १०४ ॥

पार्थोऽर्जुनः रणस्थः संग्रामस्थित एव च भूत्वा आसन्नाश्वस्तान् आसन्ना निकटस्था आश्वस्ताश्च तान् तादृशान् कुरुगान्धारादीन् प्रागुद्दिष्टान् हत्वा सन्नाश्वः सन्नाः खेदिताः अश्वा येन स तादृशः सुरवरयोगात् सुरवरेण श्रीशंभुना यो योगस्तस्मात् हेतोः श्रीकृष्णप्रेरितोऽर्जुनः [श्रीकृष्णप्रसादेन] पाशुपतमस्त्रं परमं प्राप, येन लब्धेन जयद्रथवधसामर्थ्यं लेभे इति । द्रोणपर्वणि जयद्रथवधे एतदाख्यानम् । सायाह्ने सैन्धवं जयद्रथमगात् । तद्वधार्थमित्यर्थः । कीदृशोऽर्जुनः । सुरवरयः सु शोभनो रवस्य सिंहनादस्य रयः वेगो यस्य स तादृक् ॥

अथ सपदि च्छन्नस्य ज्ञातुं वार्तां महीभृदिच्छन्नस्य ।
अमुचत्सकलेऽशास्यं सात्यकिमरिमण्डलेऽपि स कलेशास्यम्॥१०५॥

अथानन्तरं छन्नस्य द्रोणाचार्यविरचितव्यूहान्तर्गतत्वात् संछन्नस्यास्यार्जुनस्य वार्तां प्रवृत्तिं ज्ञातुं स महीभृत् युधिष्ठिरः सात्यकिममुचत् विसर्जयामास । कीदृशं सात्यकिम् । सकलेऽपि अरिमण्डले शत्रुसमाजविषये अशास्यमशासनार्हम् । पुनः कीदृशम् । कलेशास्यम् ॥

अतिसुरभिं दानेन द्विपगणमश्वांश्च भिन्दानेन ।
द्रुतमावेशि निजेन स्थेम्ना सैन्यं महाहवे शिनिजेन ॥ १०६ ॥

दानेन मुदाम्बुना अतिसुरभिं द्विपगणं हस्तिवृन्दं भिन्दानेन, तथा अश्वांश्च, तथा रथांश्च भिन्दानेन शिनिजेन शैनेयेन सात्यकिना कर्त्रा महाहवे महायुद्धे निजेन स्थेम्ना सुधैर्येण द्रुतं शीघ्रं सैन्यं कटकमावेशि आविष्टम् ॥

अरिगणमानीयान्तं द्रोणादीनपि विजित्य मानीयान्तम् ।
कृतशरधाराजातं रुरोध भूरिश्रवाः क्रुधा राजा तम् ॥ १०७ ॥

अरिगणं शत्रुवृन्दमन्तं नाशमानीय, तथा द्रोणादीनपि विजित्य यान्तमन्तः प्रविशन्तं तथा कृतशरधाराजातं कृतं शरधाराजातं बाणधारावृन्दं येन स तादृशं तं सात्यकिं भूरिश्रवाः नाम राजा रुरोध ॥

ताभ्यां सद्वेषाभ्यां रथं ससूतं निपात्य सद्वेषाभ्याम् ।
उद्धृतसारासिभ्यां जघटे परमेण रंहसारासिभ्याम् ॥ १०८ ॥

---

१. 'कृत्वा' मूल०.

सद्वेषाभ्यां सन् शोभनो वेषो नेपथ्यं रणोचितं ययोस्तौ ताभ्याम्। तथा—परस्परं सद्वेषाभ्यां सह द्वेषेण वर्तेते यौ तौ तादृशौ ताभ्याम्। परस्परं रथं सूतं च निपात्य हत्वा परमेण रंहसा वेगेन परस्परं जघटे मिलितम्। कीदृशाभ्याम्। उद्धृतसारासिभ्यामुद्धृतौ सारभूतौ असी खड्गौ याभ्यां तौ तादृग्भ्याम्। तथा—आरासिभ्याम् आ समन्तात् रासः सिंहनादो विद्यते ययोस्तौ तादृग्भ्याम्॥

शिनिजमहावलवं तं निपात्य भूरिश्रवा महावलवन्तम्।
पदमतनोदनघोरःस्थले जवेनैव वैरिनोदनघोरः॥ १०९॥

महावलवन्तं महावलिनम् अहावलवम् अविद्यमानः हावलवः क्रीडाकणो यस्य स तं तादृशं शिनिजं सात्यकिं निपात्य भूमौ पातयित्वा भूरिश्रवाः राजा तस्यैव सात्यकेः अनघोरःस्थले निष्कलङ्कवक्षःस्थले जवेनैव वेगेनैव पदं स्वचरणक्रममतनोच्चकार। पदा उरस्यताडयदित्यर्थः। कीदृशः। वैरिनोदनघोरः वैरिणां नोदनं प्रेरणं तेन घोरः क्रूरः॥

त्वरितः सन्नतमस्य प्रगृह्य च शिरः कचेषु संनतमस्य।
स्वबलं भासि मुदा स व्यातन्वन्संगरे महासिमुदास॥ ११०॥

स भूरिश्रवा राजा त्वरितः सत्वरः सन्नतमस्य अतिशयेन सन्नः युद्धेन खिन्नः तस्य तादृशस्य अस्य सात्यकेः संनतं सम्यक् नतं व्रीडया शिरो मूर्धानं कचेषु केशेषु प्रगृह्य गृहीत्वा भासि भासते इति भासि सुशोभं स्वबलं स्वकीयसामर्थ्यं मुदा हर्षेण व्यातन्वन् प्रख्यापयन् संगरे युद्धे महासिं महान्तमसिं खड्गमुदास उच्चिक्षेप॥

तस्य तु स महावलयं भूरिश्रवसो भुजंगसमहावलयम्।
अहरत्सासिं हस्तं पार्थो बाणेन रंहसा सिंहस्तम्॥ १११॥

तु पक्षान्तरे। महावलयं महान्तः वलयाः कङ्कणानि यस्य स तादृशम्, तथा भुजंगसमहावलयं भुजंगसमः सर्पसदृशः स्थूलत्वभीषणत्वादिना हावलयः विश्वासश्लेषो(विलासलेशो) यस्य स तादृशं तस्य भूरिश्रवसः सात्यकिशिरश्छेदार्थं सासिं सखड्गं तं हस्तं भुजं पार्थोऽर्जुनः बाणेन अहरत् अच्छिनत्। दूरतरमग्रतः स्थितोऽपि सात्यकेस्तादृशं संकटं श्रीकृष्णेन श्रावितः पार्थः इति शेषः। पार्थः कः। सिंहः सिंहसदृशः। केन। रंहसा वेगेन॥

स च वीरोऽपास्तरणः प्रगर्हमाणोऽर्जुनं सरोपास्तरणः।
शिश्ये राजाबाहुस्तं धर्मं विपदि योद्धुराजावाहुः॥ ११२॥

स च भूरिश्रवाः राजा वीरो महावीरः तादृगवस्थायां च अपास्तस्त्यक्तः रणो येन स तादृक् तथा, अर्जुनं पार्थं तादृगनुचितनिन्द्यकर्मणामन्येन स च युद्धाय मिलितस्यापि तस्य निरपराधं भुजच्छेदात् प्रगर्हमाणः प्रकर्षेण गर्हमानः सरोपास्तरणं रोपा रणभूमौ पतिता बाणाः एवास्तरणं प्रच्छदः, सह रोपास्तरणेन वर्तते यः स तादृक्, तथा अबाहुः

भुजच्छेदात् छिद्रे मुच्यात । रणभुवीति शेषः । एतत्समर्थनायार्थान्तरन्यासमाह—आजौ संग्रामे योद्धुः युद्धकर्तुः कदाचिद्विपदि तादृशसंकटे तमेव धर्मं तादृशं विद्वांस आहुः वर्णयन्ति ॥

विहितविमाननलाभः सात्यकिरुत्थाय चासिमाननलाभः ।
ग्रीवां वृत्तां तस्य क्रूरश्चिच्छेद चारुवृत्तान्तस्य ॥ ११३ ॥

विहितविमाननलाभः विहितः कृतः विमाननस्य लाभः अपमानस्य लाभो येन स तादृक्, तथा अनलाभः तादृगपमानेन क्रोधादग्नितुल्यः असिमान् खड्गवांश्चोत्थाय क्रूरो निर्भयः तादृगवस्थस्यापि शिरश्छेदोद्यमात् । चारुवृत्तान्तस्य चारुचरितस्य तस्य भूरिश्रवसः वृत्तां वर्तुलां रम्यां ग्रीवां कन्धरां चिच्छेद । शिरोऽच्छिनदित्यर्थः ॥

युक्तबलाहकसैन्यं प्रासं नादेन जितबलाहकसैन्यम् ।
सात्यकिरूनापायं रथमधिरूढो हरेः कुरूनापायम् ॥ ११४ ॥

बलं शत्रुबलम् आसमन्तात् घ्नन्तीति बलाहनः, बलाहन एव बलाहकाः युक्ता रक्षायां योजिता बलाहकाः शूराः सैन्याः सेनासमवेतलोकाः यस्य स तादृशं नादेन घोषेण जितं बलाहकानां मेघानां सैन्यमनीकं येन स तादृशम् । 'बले सैन्यं त्रिषु तत्समवायिनि' इति मङ्खः । ऊनापायम् ऊनो न्यूनोऽपायो यस्मिन् एवंविधं हरेः श्रीकृष्णस्य अर्थादर्जुनसखस्य रथमधिरूढः सन् अयं सात्यकिः शैनेयः कुरून् कौरवान् आप ॥

अथ पुनराजावार्तां मतिं दधज्ज्ञातुमस्य राजा वार्ताम् ।
श्रितपरसेनममुं च त्रातुं संचिन्त्य भीमसेनममुञ्चत् ॥ ११५ ॥

अथानन्तरं पुनः पश्चान्तरे । आजौ संग्रामे आर्तां सपीडां मतिं बुद्धिं दधत्, तथास्य चार्जुनस्य वार्तां प्रवृत्तिं ज्ञातुं श्रितपरसेनं श्रिता आश्रिता परसेना शत्रुचमूर्येन तादृक् तं तादृशं च अमुमर्जुनं त्रातुं रक्षितुं संचिन्त्य भीमसेनममुञ्चत् ॥

स गुरो[1] रणदक्षस्य क्षेमं कृत्वा रथस्य रणदक्षस्य ।
कृतरिपुसंसद्धत्या[2] पार्थं संप्राप सरभसं पद्धत्या ॥ ११६ ॥

स भीमसेनः रणदक्षस्य युद्धनिपुणस्य गुरोः द्रोणाचार्यस्य संबन्धिनः रणदक्षस्य रणत् शब्दं कुर्वन् अक्षः रथांशो यस्य स तादृशस्य । 'रथांशेऽक्षो दैत्यभिदि पासकद्यूतयोरपि' इति मङ्खः । तादृशस्य रथस्य क्षेपं साश्वसूतध्वजरथनाशं कृत्वा कृतरिपुसंसद्धत्या कृता रिपुसंसदः शत्रुसभाया हतिर्यया सा तादृश्या पद्धत्या मार्गेण सरभसं सोत्कण्ठावेगं पार्थमर्जुनं प्राप ॥

---

१. 'पुरो' मूल०. २. 'कृतरिपुसंपद्धत्या' इति मूलपुस्तकपाठे तु 'रिपुसंपदः शत्रुसंपत्तेः' इत्यर्थो बोध्यः.

अथ तरसा दक्षोऽभी राधेयो भीममाससाद क्षोभी ।
विरथमसाध्वसकृत्तं व्यधित च भङ्गं भजन्न साध्वसकृत्तम् ॥११७॥

अथानन्तरं क्षोभी क्षोभवान् दक्षो निपुणः अभीः भयरहितः राधेयः कर्णः तरसा वेगेन भीमं भीमसेनमाससाद । तथा असाधु न साधु असाधु कृत्वा असकृद्बहुवारं तं भीमं विरथं च व्यधित चक्रे । कर्णः किं कुर्वन् । भङ्गं पराजयं न भजन् । कीदृशं भङ्गम् । [अ]साध्वसकृत्तं [न] साध्वसेन भयेन कृत्तं छेदितम् ॥

अक्षतिमानाद्यून व्रज तूवरक प्रतापमानाद्यून ।
इति वाचा पाटन्या हृदयस्य तुतोद तं स चापाटन्या ॥ ११८ ॥

इत्यनेन प्रकारेण हृदयस्य चेतसः पाटन्या पाट्यतीति पाटनी तया पाटयित्र्या वाचा तं भीमसेनं पराजितं चापाटन्या चापस्य अटनी अग्रं तया तुतोद अतुदत् । इति किमिति— अक्षतीति । हे प्रतापमानाद्यून, प्रतापः अरिभयजननी वार्ता मानो गर्वश्च तदादिना ऊन हीन, तथा आद्यून ईषद्दीव्यति स्म आद्यूनः । 'दिवोऽविजिगीषायाम्' इति निष्ठा नत्वम् । हे आद्यून विजिगीषाविवर्जित, औदरिक उदरे प्रसक्त । 'आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते' इत्यमरः । तथा तूवरक तूवरः क्लीबः तूवर एव तूवरक, हे तूवरक भीम, मया मोचितस्त्वम् अक्षतिमान् अक्षतः व्रज गच्छ । 'तूवरो श्मश्रुपुरुषे प्रौढाश्रृङ्गगवेऽपि च । पुरुषे व्यञ्जनत्यक्ते स्यात्कषायरसेऽपि च ॥' इति मेदिनी । इत्यनेकार्थेषु राज्यसुकुत्याम् । कः नरः व्रजन् संग्रामादपसरन् अक्षतिः न क्षतिर्बाधः अक्षतिः, तद्वान् स्यात् । न कोऽपि निर्बाधः स्यात् । ईषल्लज्जितोऽपि स्यात् ॥

समरं चापास्यन्तं मुमोच कर्णस्तमात्तचापास्यन्तम् ।
लब्ध्वा मानापायं भीमो बीभत्सुमार्तिमानापायम् ॥ ११९ ॥

आत्तचापास्यन्तम् आत्तो लब्धः चापानां धनुषां असेः खड्गस्य चान्तो येन स तादृशम् । कर्णेन शरैः कृत्तचापासिमित्यर्थः । एवंविधं तथा समरं च युद्धं च अपास्यन्तं त्यजन्तं भीमं कर्णो मुमोच । तादृक्संकटप्राप्तमपि स्मृतनिजजननीवचास्तं मुमोचेत्यर्थः । अयं भीमोऽपि मानापायं मानस्य गर्वस्य अपायो नाशस्तं लब्ध्वा आर्तिमान् पीडितहृदयः सन् बीभत्सुमग्रेस्थितं आप प्राप । तत्सविधं प्रापेत्यर्थः ॥

सोऽपि कुरुचमूनाशं कुर्वाणः सैन्धवं कुरुचमूनाशम् ।
कोपादापाशीतं निःश्वस्य यथान्तकस्तदा पाशी तम् ॥ १२० ॥

सोऽपि भीमः कुरुचमूनाशं कुरूणां चम्वाः सेनायाः नाशं कुर्वाणः यथान्तको यमः यथा पाशी वरुणः, तथा तदा तस्मिन् समये कोपात् अशीतमुष्णं निःश्वस्य तं सैन्धवं सिन्धुराजं जयद्रथमाप समीपं प्राप । कीदृशं सैन्धवम् । कुरुचं कुत्सिता रुक् दीप्तिः आसन्नमरणसमयात् यस्य स तम् । तथा ऊनाशं ऊना आशा जीविताशा यस्य स तादृशम् ॥

अथ मुरहा स त्वरयन्निधनेऽस्य धनंजयं महासत्त्वरयम् ।
मण्डलमरुणद्दिनस्य स्वमायया सावधानमरुणद्दिनस्य ॥ १२१ ॥

अथानन्तरं महासत्त्वरयं महान् सत्त्वस्य धैर्यस्य रयो वेगो यस्य स तादृशं धनंजयमर्जुनं अस्य जयद्रथस्य निधने वधे त्वरयन् सत्वरं कुर्वन् स मुरहा श्रीकृष्णः स्वमायया स्वयोगमायया स्वैश्वर्येण अरुणदिनस्य अरुणं रक्तं दिनं दिनभागो येन । अर्थात्—आसन्नास्तकालस्य इनस्य सूर्यस्य मण्डले सावधानं कृत्वा अरुणत् रुरोध । यथा न स्वसमये शीघ्रं प्रत्यहमिवास्तं यायात्तथा स्वयोगैश्वर्येण जयद्रथवधावधि पार्थप्रतिज्ञापूरणाय सूर्यबिम्बमाकाशे रुरोधेत्यर्थः ॥

अनुविद्धामोदस्य स्थितस्य निजकं मुखं सुधामोदस्य ।
मूर्धा नालावितत: सिन्धुपतेस्तत्क्षणं समालावि ततः ॥ १२२ ॥

ततोऽनन्तरं चतुर्थे युद्धदिवसे अनुविद्धो व्याप्तः आमोदो हर्षो येन स तादृशस्य द्रोणकर्णादिमहारथैः विहितरक्षात्वान्निर्भयं स्थितस्येत्यर्थः । तथा—सुधाम शोभनं धाम तेजः प्रफुल्लकोकनदतुल्यमुद्यद्भास्करवत्सुदीप्तं वा निजकं निजमेव निजकं मुखं वदनमुदस्य उत्क्षिप्य स्थितस्य तस्य सिन्धुपतेः नालावितत: नालवत् पद्मवृन्तवत् विततो विस्तीर्णः 'नाला नालम्' इत्यमरः । मूर्धा तत्क्षणं समालावि सम्यक् आसमन्तात् अलावि लूनः ॥

क्षेप्ता गच्छेद्यस्य क्षितौ क्षयं सकलभूभुगच्छेद्यस्य ।
तमसावृद्धक्षत्रे रणेऽक्षिपत्तस्य वृद्धक्षत्रे ॥ १२३ ॥

सकलभूभुगच्छेद्यस्य सकला ये भूभुजो राजानः तैरच्छेद्यस्य छेत्तुमशक्यस्य, तथा च द्रोणपर्वणि जयद्रथवधे चतुर्थे युद्धदिवसे—'संग्रामे युध्यमानस्य वहतो महतीं धुरम् । धरण्यां मम पुत्रस्य पातयिष्यति यः शिरः । तस्यापि शतधा मूर्धा फलिष्यति न संशयः ॥' इत्यतो निजपित्रा वृद्धक्षत्रेण तस्य जयद्रथस्य वरो दत्तोऽभूत् । अत एव तद्भयेन सकलराजभिरप्यच्छेद्यस्येत्यर्थः । तादृशस्य यस्य जयद्रथस्य मूर्ध्नः क्षितौ क्षेप्ता पुरुषः क्षयं गच्छेत् । तस्य जयद्रथस्य तं मूर्धानं वृद्धक्षत्रे वृद्धानि महान्ति क्षत्राणि यस्य स तादृशे रणे रणविषये वृद्धक्षत्रे वृद्धक्षत्रनाम्नि राज्ञि एव अक्षिपत् चिक्षेप श्रीकृष्णप्रतिबोधितोऽर्जुनः बाणेन तन्मूर्धानं छित्त्वा तज्जनकवृद्धक्षत्राङ्क एव क्षिप्तवानित्यर्थः॥

तदनु पुनः समुदायाच्छत्रूणां शक्रनन्दनः समुदायात् ।
धर्मसुतं समरमयध्वान्तोत्तीर्णोऽतिदुःखितं समरमयत् ॥ १२४ ॥

---

१. मूलपुस्तकटिप्पण्यां तु—'अरुणदिनस्येति विषयषष्ठी । अरुणदिनविषयेऽसावधानं 'संध्याकालोऽयम्' इत्यवधानारहितमित्यर्थः । अरुणदिनविषये सायंकालभ्रमं कर्तुमरुणदिति वा' इत्युपलभ्यते. २. 'मालावितत:' इति मूलपाठे पुष्पदामव्याप्तः.

तदनु तदनन्तरं समुत् सह मुदा वर्तते स समुत् तादृशः शक्रनन्दनः अर्जुनः पुनः शत्रूणां समुदायात् समूहात् समरमयध्वान्तोत्तीर्णः समरयं संग्रामरूपमेव ध्वान्तं तिमिरं तस्मादुत्तीर्णः धर्मसुतं युधिष्ठिरमायात् आगतः । तथा अतिदुःखितम् अभिमन्युवधेन बहु दुःखितं च धर्मसुतं युधिष्ठिरं समरमयत् समुतोपयत् ॥

अशनैरजनि च रजनेरुदयस्तत्रापि मुदितरजनिचरजने ।
अभवदभङ्गोऽमायो रणोत्सवो नर्म चाशुभं गोमायोः ॥ १२५ ॥

मुदितरजनिचरजने मुदिता रचनिचरजना राक्षसजना यत्र तादृशे तत्रापि संग्रामे अशनैरमन्दं रजनेः रात्रेः उदयश्च अजनि । रात्रेरुदयोऽभूदित्यर्थः । तत्र च रात्रौ अभङ्गः निरन्तरः अमायः अच्छलः रणोत्सवः अभवत् । तद्दिने रात्रियुद्धमभवत् इत्यर्थः। तत्र च रात्रियुद्धेऽसंचारिणः गोमायोः शृगालस्य । जातावेकवचनम् । गोमायूनामित्यर्थः । नर्म क्रीडा च अभवत् । कीदृशं नर्म । अशुभम् अमङ्गलवाचकम् ॥

विज्ञाय स्वानपरान्पृष्टैः कथितैश्च नामभिः स्वानपरान् ।
संजगृहुर्निशितमसिप्रवरं ससृजुश्च [सैनिका][1] निशि तमसि॥१२६॥

निशि रात्रौ तमस्यन्धकारे रात्रियुद्धे स्वानपरान् स्वाने शब्दे पराः सक्ताः तान् स्वान् स्वकीयान् तथा अपरान् शत्रुसंबन्धिनोऽन्यान् पृष्टैर्नामभिः कथितैश्च नामभिः विज्ञाय । वीरलोका इति शेषः । वीरलोकाः निशितं तीक्ष्णमसिप्रवरं खड्गवरं संजगृहुः गृह्णन्ति स्म । तथा तीक्ष्णं खड्गवरं च ससृजुः विपसृजुः चिक्षिपुः । अनेकार्थत्वाद्धातूनां सृजिः विसर्गार्थः ॥

अथ शितपरशू रजनौ भुजौ दधानो विधूतपरशूरजनौ ।
विजजृम्भे दीप्रासी रभसेन घटोत्कचोऽरिभेदी प्रासी ॥ १२७ ॥

अथानन्तरं रजनौ रात्रौ रात्रियुद्धे शितः परशुः स्वधितिर्यस्य स शितपरशुः तथा विधूतपरशूरजनौ विधूताः कम्पिताः परा उत्कृष्टा शूरजना वीरलोका याभ्यां तौ तादृशौ भुजौ दधानः । तथा दीप्रासिः दीप्रः दीप्तिमानसिः खड्गो यस्य स तादृक् । तथा— अरिभेदी शत्रुभेदकः प्रासी प्रासवांश्च घटोत्कचो राक्षसः भीमसेनाद्धिडिम्बायां जातः विजजृम्भे रात्रिचरत्वाद्विशेषेण जजृम्भे ॥

तस्य विहायस्यतनुः प्रबभौ दंष्ट्राभिरसिसहायस्य तनुः ।
लसदकृशबलाकालीवृता घनालीव चापशबलाकाली ॥ १२८ ॥

अस्य सहायस्य खड्गयुक्तस्य तस्य अतनुः महती काली कृष्णा तनुः शरीरं विहायसि आकाशे दंष्ट्राभिः प्रबभौ प्रकर्षेण रेजे । तनुः केव काली । घनालीव मेघपङ्क्तिरिव । सापि कीदृशी । लसदकृशबलाकालीवृता लसन्त्यः या अकृशा महत्यः बलाकानां पक्षि-

[1] मूलपुस्तक एवोपलभ्यते, न काश्मीरिकसटीकपुस्तके.

दिशेषगणाम् आल्यः पङ्क्तयस्ताभिर्वृता । पुनः कीदृशी । चापशबला चापेन इन्द्रचापेन शबला चित्रा । अत्र घटोत्कचतनोः मेघपङ्क्तिः, दंष्ट्राणां बलाकालिः, तेजसा ज्वलित-खड्गस्य इन्द्रधनुरुपमानम् ॥

[1]समितं वासीदन्तं राक्षसमालोक्य निशितवासीदन्तम् ।
भृशमेवासीदन्तगतारिसैन्यं सुभैरवासीदं तम् ॥ १२९ ॥

वाशब्दश्चार्थे । समितं युद्धमासीदन्तमाश्रयन्तं च तथा निशितवासीदन्तं निशिता तीक्ष्णा या वासी तक्षणासुपकरणं तक्षणभाण्डं वासी तद्वद्दन्ता यस्य स तादृशम् । अति-तीक्ष्णदन्तमित्यर्थः । तथा सुभैरवासीदं सुष्टुभैरवा भीमा असयो येषां ते सुभैरवासयः तेषामीं लक्ष्मीं ददातीति सुभैरवासीदः । ईकारो लक्ष्मीवाचकः । एवंभूतं तं तादृशं राक्षसं घटोत्कचमालोक्य भृशमेव अत्यर्थमेव अन्तगतारिसैन्यम् अन्तगतं पतत् अरि-सैन्यं शत्रुकटकमासीत् ॥

निशि पुनरावाञ्छितया हन्तुं शक्त्यार्जुनं त्वरावाञ्छितया ।
वैरिजनेऽनवसादं जघान वैकर्तनः क्षणेन वसादम् ॥ १३० ॥

वैकर्तनः विकर्तनस्य सूर्यस्यापत्यं वैकर्तनः कर्णः अर्जुनं पार्थं हन्तुं वाञ्छितया प्र-त्यहं काङ्क्षितया शंभुप्रसादेन । एकवीरघातिनीत्वात्तस्याः । एवंभूतया । तथा—शितया तीक्ष्णया शक्त्या आयुधविशेषेण वसादं वसां देहिनां धातुविशेषमत्तीति वसादः रा-क्षसो घटोत्कचः तं क्षणेन निशि रात्रियुद्धे पुनर्जघान । कीदृशः वैकर्तनः । त्वरावान् । घटोत्कचेन महाबलेन कृतोद्भटरणसंकटगतत्वात्तस्य कर्णस्य । वसादं कीदृशम् । वैरि-जने शत्रुजने अनवसादम् अखिन्नम् ॥

अध्यगमन्यावन्तं शोकं पार्था गतेऽभिमन्यावन्तम् ।
तावान्समजन्यस्य क्षयेऽपि तेषां महेन्द्रसमजन्यस्य ॥ १३१ ॥

पार्था युधिष्ठिराद्याः अभिमन्यौ सौभद्रेऽर्जुनतनये अन्तं नाशं गते सति यावन्तं यत्परिमाणं शोकं दुःखमध्यगमन् प्रापुः । तावान् तत्परिमितः शोकः अस्यापि घटो-त्कचस्य क्षये नाशे तेषां पार्थानां समजनि उत्पन्नः । किंविशिष्टस्यास्य घटोत्कचस्य । महेन्द्रसमजन्यस्य महेन्द्रसममिन्द्रतुल्यं जन्यं युद्धं यस्य स शक्रसमपराक्रमस्येत्यर्थः ॥

शुचमपनीय तमान्ते बिभ्राणाः क्रुधमलङ्घनीयतमां ते ।
कौरववरसेनायं निनीषवो निधनमाहवरसेनायन् ॥ १३२ ॥

तमान्ते तमाया रात्र्या अन्तस्तमान्तस्तस्मिन् । तमाशब्दो ह्याकारान्तोऽपि रात्रि-वाचकः । तथा च प्रयोगः—'हा राम हा देवरतातमातः' । तमान्ते रात्र्यन्ते अलङ्घनीय-तमाम् अत्यलङ्घ्यां क्रुधं कोपं बिभ्राणाः । तथा—कौरववरसेनायं कौरवाणां वरा उत्कृष्टा

---

१. 'समितावासी' मूल०.

या सेना तस्या आयम् आगतिम्। अयं शुभावहविधिं वा। निधनं क्षयं निनीषवः नेतुमिच्छन्तः आहवरसेन युद्धाभिलाषेण आयन् आयाताः। 'इण् गतौ' धातुः॥

[1]अथ परसेनागस्य द्रोणाय वधं न वैशसे नागस्य।
अश्वत्थामानमयं नृपतिर्हतमभ्यधाद्व्यथामानमयन्॥ १३३॥

अथानन्तरं परसेनागस्य परेषां सेनां चमूं गच्छतीति परसेनागस्तादृशस्य हस्तिनः अश्वत्थामनाम्नः वधं वैशसे रणसंकटे द्रोणाय द्रोणाचार्याय अयं नृपतिर्युधिष्ठिरः न अभ्यधात्। अश्वत्थामा हस्ती हत इति व्यक्तं नाभ्यधात्। किं त्वयं नृपतिर्युधिष्ठिरः अश्वत्थामानं द्रोणाचार्यसुतं हतमभ्यधात् द्रोणाय जगाद। कीदृशो युधिष्ठिरः। व्यथामान् अनृतात् त्रस्तः। तर्हि त्रिजगति ख्यातो सत्यवादी धर्मसूनुः किमिति नृपमवोचदित्याह—अयमन् इति अं विष्णुं श्रीकृष्णमयन् शरणं गच्छन् तमनुसरन्निति वा। तथा हि द्रोणपर्वणि पञ्चमे युद्धदिवसे द्रोणवधे—'ततो निष्पाण्डवामुर्वीं करिष्यति युधा पतिम्। द्रोणं ज्ञात्वा धर्मराजं गोविन्दो व्यथितोऽब्रवीत्॥ अथार्धदिवसे द्रोणो युध्यते मन्युमास्थितः। सत्यं ब्रवीमि सेना ते विनाशं समुपेष्यति॥ स भवान् त्रातु नो द्रोणात्सत्याज्ज्यायोऽनृतं भवेत्। अनृतं जीवितस्यार्थे वदन्न स्पृश्यतेऽनृतैः॥' इति। तथा—'तस्य तद्वचनं श्रुत्वा कृष्णवाक्यप्रचोदितः। भवितव्यान्महाराज वक्तुं समुपचक्रमे॥ तदतथ्यभये मग्नो जयमर्थी युधिष्ठिरः। अव्यक्तमब्रवीद्राजन् हतः कुञ्जर इत्युत॥' इत्यादि॥

श्रुत्वा चापमुदस्य व्यसनं पुत्रस्य सपदि चापमुदस्य।
मरणावस्थां तेन प्राप्तवता शयितमाहवे क्षान्तेन॥ १३४॥

सपदि तत्क्षणमस्याश्वत्थाम्नः पुत्रस्य व्यसनं वधरूपं श्रुत्वा च (चापं धनुः उदस्य त्यक्त्वा) अपमुत् अपगता मुत् हर्षो यस्मिन् कर्मणि तथा अपमुत्। क्रियाविशेषणमेतत्। अपगतहर्षं यथा भवति तथा कृत्वा मरणावस्थां प्राप्तवता तेन द्रोणाचार्येण क्षान्तेन क्षमावता सता आहवे युद्धे युद्धभूमौ शयितं सुप्तम्॥

अथ समरकरालोऽलं खड्गं बिभ्रद्दिवाकरकरालोलम्।
ग्रीवां कृत्तां तस्य द्रुपदसुतो व्यधित पापकृत्तान्तस्य॥ १३५॥

अथानन्तरम् अलमत्यर्थं समरकरालः समरे युद्धे करालोऽतिक्रूरः खड्गमसिं बिभ्रत् धारयन्। कीदृशं खड्गम्। दिवाकरकरालोलं दिनकरकरतीक्ष्णम्। द्रुपदसुतः धृष्टद्युम्नः पापकृत् तादृशस्य महापुरुषस्य गुरोर्वधात्। तान्तस्य बहूनि दिनानि महद्युद्धं विधाय खिन्नस्य तस्य गुरोः ग्रीवां कन्धरां कृत्तां व्यधित चकार। खड्गेन शिरश्चिच्छेदेत्यर्थः॥

---

१. मूलपुस्तके त्वितः प्राक्—'वीर्यमपक्षयमस्य ज्ञात्वा द्रोणस्य वैरिपक्षयमस्य। चिन्तां राजेयाय प्रदातुमस्मै वधं पराजेयाय॥' इति चाधिकं दृश्यते.

अरिगणहन्ता तस्य श्रुत्वाथ वधं सुदुःसहं तातस्य ।
द्रौणिः कोपमयासीत्तन्वा च भयंकरोऽन्तकोपमयासीत् ॥ १३६ ॥

अथानन्तरम् अरिगणहन्ता शत्रुगणघातकः द्रौणिः द्रोणस्य सुतः अश्वत्थामा सुदुःसहं सुष्ठु दुःसहं तातस्य पितुर्द्रोणाचार्यस्य वधं तादृशं श्रुत्वा कोपं क्रोधमयासीत् गतः । तथा—अन्तकोपमया यमतुल्यया तन्वा शरीरेण भयंकरः सकलजनभयंकरश्च आसीत्॥

सोऽथ जवी रुद्धगलं बाष्पैर्विनदन्विपक्षवीरुद्धगलम् ।
द्रौणिर्महितमदान्तः ससर्ज नारायणास्त्रमहितमदान्तः ॥ १३७ ॥

अथानन्तरं जवी वेगवान् तथा बाष्पैरश्रुभिः रुद्धगलं रुद्धकण्ठं यथा भवति तथा कृत्वा विनदन् विलपन् । तथा—अलमत्यर्थं विपक्षा एव वीरुधः लता दहतीति विपक्षवीरुद्धक् । तथा—अदान्तः न दान्तः क्षमावान् । तथा—अहितमदान्तः शत्रूणां यो मदो गर्वः तस्यान्तो नाशरूपः द्रौणिः अश्वत्थामा महितं पूजितं त्रिजगतां नारायणास्त्रं नारायणाख्यमस्त्रं पाण्डुसेनादहनाय ससर्ज व्यसृजत् ॥

दधता धामान्यस्य द्रौणेरस्त्रेण दिग्रुधा मान्यस्य ।
समितावनलाभेन व्याजृम्भि विपक्षसैन्यवनलाभेन ॥ १३८ ॥

मान्यस्य लोकमान्यस्य अस्य द्रौणेरश्वत्थाम्नो दिग्रुधा दिशो दश रुणद्धीति दिग्रुत् तेन । तादृशेन तथा धामानि तेजांसि दधता अस्त्रेण नारायणास्त्रेण समितौ युद्धे विपक्षसैन्यवनलाभेन विपक्षसैन्यं पाण्डवसैन्यमेव वनं तस्य लाभस्तेन हेतुना अनलाभेन अग्नितुल्येन व्याजृम्भि विजृम्भितम् । तेनास्त्रेण पाण्डवसैन्यं दग्धुमुपोद्वलितमित्यर्थः ॥

विहितशरासन्यासः शौरेर्वाचापदानिरासन्या सः ।
व्यपयातो वाहनतः पार्थबलौघोऽञ्जलिं चोवाह नतः ॥ १३९ ॥

तत्तादृशमस्त्रं वीक्ष्य आपदानिरासिन्या आपदो विपदः तादृश्याः आसमन्तान्निरासिनी दूरीकर्त्रीति तादृश्या शौरेः श्रीकृष्णस्य वाचा गिरा विहितशरासन्यासः शरा अस्यन्ते अनेनेति शरासो धनुः विहितः कृतः शरासानां धनुषां न्यासः भूमौ स्थापनं येन स तादृक् स पार्थबलौघः पाण्डवसैन्यसमूहः नतो नम्रः सन् वाहनतः वाहनेभ्यः गजरथाश्वादिभ्यः व्यपयातः अवरोहितः । शिरसा अञ्जलिं पाणिद्वययोजनमुवाह अधारयत् । तथा च द्रोणपर्वणि पञ्चमे युद्धदिवसे—'क्षितिः संख्यैरथस्यैव शस्त्राणां च निवर्तनम् । प्रयासनं च शत्रूणां गमनं शरणस्य च । एते प्रशमने योगा महास्त्रस्य परंतप ॥' इति श्रीभगवद्वाक्यमर्जुनं प्रति ॥

अथ कृतभूयानेषु द्विट्स्वस्त्राग्निः शशाम भूयानेषु ।
निहते परमहसि तया पाण्डवचम्वा व्यभावि परमहसितया॥१४०॥

अथानन्तरं श्रीभगवद्वचसा कृतभूयानेषु कृतं भूयानं यानेभ्यः अवरुह्य भूगमनं यै-

१. 'दिग्रुधा' मूल०. २. 'पदां निरा' मूल०.

स्तेषु एषु द्विट्सु शत्रुषु पाण्डवसैन्येषु अस्त्राग्निः नारायणास्त्रदहनः शशाम शान्तिमगात्। परमहसि परं च तन्महस्तेजः तस्मिन् निहते शान्ते सति, तया पाण्डवचम्वा पार्थवाहिन्या परमहसितया परममतिशयेन हसितया कृतहासया व्यभावि विशेषेण अभावि॥

अवल्गि पार्थसैनिकैर्महासिचापराजितैः ।
अवेक्ष्य वैरिणां दशमहासि चापराजितैः ॥ १४१ ॥

महासिचापराजितैः महान्तः असयः खड्गाश्चापा धनूंषि च तै राजिताः शोभितास्तैः तादृशैः पार्थसैनिकैः पाण्डवसेनालोकैः वैरिणां शत्रूणां कौरवाणां तादृशीं दशामवस्थां कुरुपाण्डवगुरुद्रोणाचार्यपतनरूपामवेक्ष्य अवल्गि ननृते अहासि च जहासे च । कीदृशैः पार्थसैनिकैः । अपराजितैः न पराजिताः केनापि तैः ॥

ततः क्षणेन यामिनी समाजगाम दारुणा ।
पपौ वसां नृभुक्ततिः समाजगा मदारुणा ॥ १४२ ॥

ततोऽनन्तरं पञ्चमे युद्धदिवसे गते क्षणेन यामिनी रात्रिः समाजगाम समागता । कीदृशी । दारुणा भयंकरी । ततश्च समाजगा समाजं पतितमहावीरकायसमाजं गच्छतीति तादृशी । तथा—मदारुणा मदेन क्षैव्येन रुधिरापानकृतेन अरुणा लोहिता नृभुक्ततिः नॄन् भुञ्जते इति नृभुजो राक्षसास्तेषां ततिः पङ्क्तिः वसां देहिनां धातुविशेषं पपौ ॥

विभावरीमुखे गुरोर्विभा वरीयसो वधात् ।
स दाहवान्निवृत्तवान्सदाहवात्सुयोधनः ॥ १४३ ॥

विभावरीमुखे रात्रिमुखे वरीयसः वरीयानतिश्रेष्ठः तस्य गुरोर्द्रोणाचार्यस्य वधात् विभा विगता भा दीप्तिर्यस्य स तादृक् सुयोधनो दुर्योधनः दाहवान् दाहो मनस्तापः विद्यते यस्य स तथाविधश्च सदाहवात् सन् शोभनश्चासावाहवः युद्धं तस्मात् निवृत्तवान् प्रत्यावृत्तः ॥

इति श्रीमहाकविवासुदेवविरचिते युधिष्ठिरविजये महाकाव्ये सप्तम आश्वासः ।

---

## अष्टम आश्वासः ।

कैलासं योगं गां रक्षञ्छ्रयति धारयति यो गङ्गाम् ।
जन्मिभवोल्लासहरः पायाद्विश्वस्तुतः स हरः ॥

ततो द्रोणाचार्यपतनानन्तरं कुरूणां वृत्तान्तं वर्णयन्नाह—

अथ सेनापत्यन्ते कुरवश्चक्रुर्विरोचनापत्यं ते ।
अधिपतिमाशु चमूनां सोऽप्येषामकृत समहिमा शुचमूनाम् ॥१॥

अथानन्तरं ते कुरवो दुर्योधनाद्याः सेनापत्यन्ते सेनापतेः सेनानायकस्य द्रोणाचार्यस्य अन्तो नाशस्तत्र जाते सति विरोचनापत्यं विरोचनस्य सूर्यस्यापत्यं तनयं कर्णमाशु शीघ्रं चमूनामधिपतिं सेनापतिं चक्रुः । सोऽपि सेनापतिः कर्णः समहिमा महत्व-

युक्तः एषां दुर्योधनादीनां शुचं शोकं द्रोणाचार्यादिमहारथोत्पन्नाममूनां हीनां चकार । कर्णे सेनापतौ विहिते सति रिपुनाशे साशाः शोकं जहुरित्यर्थः ॥

एकं तरसा दिवसं कृतसमरः क्षरितवहलतरसादिवसम् ।
कृतपरमपरत्रासौ भुजौ दधदुवाच नृपतिं परत्रासौ ॥ २ ॥

क्षरितवहलतरसादिवसं क्षरिता स्रुता मृतानां वहलतराणां सादिनाम् अश्ववारलोकानां वसा धातुविशेषो यत्र तत्तथा कृत्वा तरसा बलेन एकं दिवसमेकदिनावधि प्रतिज्ञाय कृतसमरः रचितयुद्धः असौ कर्णः कृतपरमपरत्रासौ कृतः परममत्यर्थं परेषां शत्रूणां त्रासो याभ्यां तौ तादृशौ भुजौ दधत् परत्रान्यत्र नृपतिं राजानं दुर्योधनमुवाच॥

कर्णो दुर्योधनं राजानं किमवोचदित्याह—

अहनीह न न प्रधनं मम जिष्णोरात्तसैन्यहननप्रधनम् ।
अस्त्रसमारम्भाविःस्फुलिङ्गनिकरं कुरूत्तमारं भावि ॥ ३ ॥

हे कुरूत्तम कुरूणां मध्ये उत्तमः प्रधानः तस्यामन्त्रणं हे राजन् दुर्योधन, आत्तसैन्यहननप्रधनम् आत्तं गृहीतं सैन्यहननप्रधनं सैन्यहननमेव प्रकृष्टं धनं वित्तं यत्तादृक् प्रधनं युद्धं मम जिष्णोरर्जुनस्य च अरमत्यर्थं न न भावि, अपि तु भाव्येव । कीदृशम् । अस्त्राणां समारम्भः तेन आविः प्रकटीभूताः स्फुलिङ्गनिकरा अग्निकणसमूहा यस्मिंस्तत् ॥

पुनः कर्णो दुर्योधनं किमवोचदित्याह—

करणैरथ चापाद्यैर्बीभत्सोर्नावरोऽस्मि रथचापाद्यैः ।
यदुपतिना यन्त्रा स ध्रुवमधिकः सुयोधनायं त्रासः ॥ ४ ॥

हे सुयोधन दुर्योधन, अथ च पक्षान्तरे आपादनीयैः संपाद्यैः रथचापाद्यैः रथधनुरादिभिः करणैरङ्गैः बीभत्सोरर्जुनात् नावरो न हीनोऽस्मि । किं तु तत्समोऽस्मीत्यर्थः। ध्रुवं निश्चये । सः अर्जुनः यदुपतिना जगन्नाथेन श्रीकृष्णेन यन्त्रा सूतेन अधिकोऽस्ति । अयमेव मम त्रासः भयम् । मम तादृशः सूतो नास्तीति भावः ॥

कर्णः दुर्योधनं पुनः किमवोचदित्याह—

मम चेदधिको शल्यः सारं दर्पं च बिभ्रदधिकौशल्यः ।
अश्वनियामी हत्वा पार्थं कुरुराज नन्दयामीह त्वा ॥ ५ ॥

हे कुरुराज दुर्योधन, अधिकौशल्यः अधिकं कौशल्यं नैपुण्यं शस्त्रादिकर्मणि सूतकर्मादौ च यस्य स तादृशः । तथा—सारं बलं दर्पं च गर्वं च बिभ्रत् शल्यः शल्यराजा मद्रेशः मम चेत् अश्वनियामी अश्वनियन्ता सूतः स्यात् भवेत्, तर्हि पार्थमर्जुनं हत्वा अहं त्वा त्वां नन्दयामि तोषयामि ॥

इत्थमघातान्तेन प्रोक्ते दुर्योधनेऽरिघातान्तेन।

मृदुवचसा मन्युचितं शल्यं यन्तारमकृत सामन्युचितम्॥ ६॥

इत्थमनेन प्रकारेण अघातान्तेन अघैः किल्बिषैः अतान्तेन अखिन्नेन दातृप्रवरेषु मुख्यत्वात्तस्य। तथा—अरिघातान्तेन अरीणां शत्रूणां घातो नाशस्तस्यान्तो निश्चयरूपः तेन प्रोक्ते कथिते सति मृदुवचसा कोमलवचनेन सामनि सान्त्वे उचितं योग्यम्। तथा—मन्युचितं मन्युः कर्णेन सह यः स्पर्धारूपो मन्युः तेन चितस्तं शल्यं राजानं यन्तारं सूतं तस्य अकृत॥

स्यन्दनमुख्येन ततो मद्रजसारथिमतोन्नमद्रजसार।

राधेयः पार्थानां वासव्यूढां चमूं युवा स व्यूढाम्॥ ७॥

ततोऽनन्तरं युवा तरुणः स राधेयः कर्णः मद्रजसारथिमता मद्रजः शल्यो नृपः स एव सारथिः सूतस्तद्युक्तेन। तथा—उन्नमद्रजसा उन्नमत् उच्छलत् रजो यस्मात्स तादृशेन स्यन्दनमुख्येन रथवरेण व्यूढां व्यूहरचनया स्थापितां वासव्यूढां वासविना इन्द्रसूनुना पार्थेन सेनानीभूतेन व्यूढां धारितां पार्थानां पाण्डवानां चमूं सेनाम् आर ययौ। आर इति 'ऋ गतौ' धातुः॥

शङ्खममेयं तारं स धमन्निपुणः पराक्रमे यन्तारम्।

इदमवदद्युद्धरतः पश्य बलं मे रिपून्सपद्युद्धरतः॥ ८॥

स च कर्णः अमेयमपरिमितं तारमत्युच्चैः कृत्वा शङ्खं कम्बुं धमन् वादयन् पराक्रमे पराक्रमविषये निपुणो दक्षो यन्तारं सूतं सन्तं शल्यं नृपमिदं वक्ष्यमाणमवदत् जगाद। किमित्याह—हे शल्य नृप, युद्धे रतो लीनस्त्वं सपदि तत्क्षणं रिपून् शत्रून् उद्धरतः नाशयतः मे मम बलं पश्य॥

नङ्क्ष्यति मद्रवराजौ शत्रुगणः श्रूयमाणमद्रवराजौ।

नूनं मद्यानेन प्राप्स्यति पार्थोऽपि भङ्गमद्यानेन॥ ९॥

हे मद्रवर मद्राः मद्राभिधजनप्रदेशा राजानः तेषां वरस्तत्संबोधनं हे मद्रवर शल्य, आजौ संग्रामे श्रूयमाणमद्रवराजौ श्रूयमाणा ये मद्रवाः मम रवा मदीयाः सिंहनादाः तेषां या राजिः पङ्क्तिस्तस्यां सत्यां शत्रुगणः पाण्डवसमाजः नङ्क्ष्यति नाशमेष्यति। नूनं निश्चये पार्थोऽपि अर्जुनोऽपि। अपिशब्दः सर्वेभ्योऽपि पाण्डुभ्यः प्राधान्यद्योतकः। अर्जुनोऽपि अद्यानेन मद्यानेन मम यानं यात्रारूपं तेन नूनं निश्चये भङ्गं पराजयं प्राप्स्यति। यद्वा अनेन भवता निपुणसंयोजितेन मद्यानेन मम यानं स्यन्दनस्तेन पार्थोऽपि भङ्गं पराजयं प्राप्स्यति॥

वीचीविसरोरुहया वक्रश्रेण्या हृतच्छविसरोरुहया।

कौरवसेनानद्य स्थगयन्तु रिपून्सभीमसेनानद्य॥ १०॥

हे शल्यनृप, वीचीविसरोरुहयाः वीचीनामूर्मीणां विसरः प्रवाहः तद्रूपा उरवो महान्तः हया अश्वा यासु ताः। तथा—हृतच्छविसरोरुहया हृतच्छवीनि जितकान्तीनि सरोरुहाणि पद्मानि यया सा तादृश्या वक्त्रश्रेण्या मुखपरम्परया उपलक्षिताः कौरवसेनानद्यः कौरवाणां सेना एव नद्यः सभीमसेनान् रिपून् शत्रून् युधिष्ठिरादीनद्य स्थगयन्तु जयन्तु॥

इत्थं वाचाटन्तं कर्णं मद्रेश्वरोऽप्युवाच वाचाटं तम्।
तेजःसंनत्यर्थं स्मृत्वा धर्मजवचो हसन्नत्यर्थम्॥ ११॥

इत्थमनेन प्रकारेण वाचा वाण्या अटन्तं दीर्घदीर्घयुक्तिक्रमेण यान्तं वाचाटं कुबहुभाषिणं तं कर्णं राधेयं मद्रेश्वरः शल्यनृपोऽपि उवाच। स किं कुर्वन्। तेजःसंनत्यर्थं तेजोदमनार्थं धर्मजवचो युधिष्ठिरवचः स्मृत्वा अत्यर्थं हसन्। पुरा किल कदापि युधिष्ठिरनृपेण शल्यनृपात् सबहुमानं प्रार्थितमभूत्, कदाचिद्रणे त्वया सह कर्णः यदि गमिष्यति तदा तस्य कटुवचोभिस्तेजोहानिः कार्येति। तेन तदङ्गीकृतम्—इति महाभारताख्यानम्॥

शल्यनृपः कटुवचोभिः कर्णस्य तेजोदमनं कर्तुं किमित्यवोचदित्याह—

धृष्टतमं गा विस(ष)मा मा वोचः कर्ण समरमङ्गाविस(श)मा।
क्षेप्स्यति कं पांसौ ते पार्थः कृत्वा महीं सकम्पां सौते॥ १२॥

हे अङ्ग कर्ण, त्वं विस(ष)मा गाः वाचः धृष्टतममतिमुखरं मा वोचः मा वद। हे कर्ण, समरं युद्धं मा आविस। मा आविशेत्यर्थः। शसयोरैक्यात्। हे सौते सूतस्यापत्यं सौतिस्तस्य संबोधनं हे कर्ण। सौते इति साधिक्षेपमुक्तिः। पार्थोऽर्जुनः महीं भूमिं सकम्पां कृत्वा ते तव कं शिरः पांसौ रणभूमिधूलौ क्षेप्स्यति। त्वां हन्ती(निष्यती)त्यर्थः॥

शल्यः कर्णं साधिक्षेपं पुनः किमवोचदित्याह—

चरितं तद्वै तव न श्रुतं यदा कौरवः श्रितद्वैतवनः।
गगनमुपानीयत तैर्गन्धर्वैः संनिपत्य पानीयततैः॥ १३॥

हे सौते, वै निश्चये तत्तव चरितं न श्रुतं काक्वा श्रुतमेव सर्वजनेन। तत्किमित्याह—यदा यस्मिन् काले श्रितद्वैतवनः आश्रितद्वैताख्यवनः कौरवो दुर्योधनः पानीयततैर्गन्धर्वैः संनिपत्य पानीयततैः पानीये सरोवरपानीयरक्षार्थं ततैर्विस्तृतैस्तैर्गन्धर्वैः। यदा बद्धा इति शेषः। संनिपत्य समेत्य गगनमाकाशमुपानीयत। तदा तव पौरुषं क्व गतम्। तदा तद्रक्षाद्भवता किं न मोचित इत्यर्थः॥

अरिवनसंचयदावः पार्थो वरमहृत सरभसं च यदा वः।
गतवान्पाप क्व त्वं तदा तवाहो गतत्रपापकत्वम्॥ १४॥

हे गतत्रप निर्लज्ज कर्ण, अरिवनसंचयदावः अरयः शत्रवः एव वनानि तेषां संचये

समूहे दावः दावाग्नितुल्यः पार्थः अर्जुनः सरभसं सावेगं यदा यस्मिन्काले वः युष्माकं वरं श्रेष्ठं सुयोधनमहृत। तेभ्यो गन्धर्वेभ्यो निर्मुच्य अहृतेत्यर्थः। तदा हे पाप पापिन्, त्वं क्व गतवानसि। अहो आश्चर्ये तदा तस्मिन् समये तव अपक्वत्वम् अप्रगल्भत्वम्॥

शल्यः पुनः कर्णं किमित्यवोचदित्याह—

हितगिरमाकर्णय मन्नियच्छदर्पं प्रपश्य मा कर्ण यमम्।
येन जितो नाकौकःपतिर्जये तस्य समुचितो ना कौ कः॥ १५॥

हे कर्ण, मत् मत्सकाशात् हितगिरं पथ्यां वाचं आकर्णय शृणु। दर्पं गर्वं नियच्छ त्यज। यममन्तकं मा प्रपश्य मा वीक्षस्व। पार्थस्पर्धया तव मरणमेव नियतमित्यर्थः। येनार्जुनेन नाकौकःपतिः नाकः स्वर्गः ओको गृहं येषां ते नाकौकसः देवास्तेषां पतिरिन्द्रः खाण्डववनदाहे जितः। यद्वा नाकौकःपतिः देवेशः शंभुः किरातरूपधारी जितः। स्पर्धया जित इत्यर्थः। तस्य पार्थस्य जये समुचितः योग्यः कौ भूमौ को ना कः पुरुषः। न कोऽपि तज्जेतेत्यर्थः॥

इत्युच्चारावस्य ब्रुवतो विदिते मनस्यचारावस्य।
क्रोधाज्जगदेवादः कर्णेन दिधक्षतेव जगदे वादः॥ १६॥

इत्यनेन प्रकारेण उच्चारावस्य उच्चैः प्रस्फुटः आरावः शब्दो यस्य स तादृशस्य ... शल्यस्य अचारौ अमनोहरे मनसि चित्ते विदिते ज्ञाते सति। स्वाधिक्षेपेण तन्मन... कलुषिते सतीत्यर्थः। क्रोधाद्धेतोः अदः जगत् एतज्जगत् दिधक्षता दग्धुमिच्छतेव ...र्णेन वादे तं प्रति प्रतिवादः। जगदे उक्तः॥

कर्णः शल्यं किमित्यवोचदित्याह—

मद्रपते नाशस्ते न दूरगः पथि रतोऽसि नाशस्ते[1]।
निष्कृतिरवदातासिः स्याद्यदि भूयोऽपि परुषरवदातासि॥ १७

हे मद्रपते शल्य, ते तव नाशोऽन्तः न दूरगः। समीप एवेत्यर्थः। त्वमशस्ते ... पथि न रतोऽसि। काक्वा अपि तु रतोऽसि। यदि च त्वं भूयोऽपि पुनर्मां प्रति ... दाता कटुशब्ददायी असि भविष्यसि तदा मदीयः अवदातासिः ... खङ्गः निष्कृतिः शुद्धिः स्यात् भविष्यति। त्वदुक्तकटुवचनऋणसंशुद्धिकारी ...

यच्छुभधीरामोदादस्त्रं मह्यं तपोनिधी रामोऽदात्।
अमुना नाशं कतमं शत्रुं समरे नयामि नाशङ्कतमम्॥ १...

हे मद्रपते, शुभधीः स्वच्छधिषणः आमोदात् हर्षात् यदस्त्रं तपोनिधिः ...

१. 'सि तेनाशस्ते' मूलपाठे 'तेन कारणेन अशस्ते पथि रतोऽसि। 'विपरीतबुद्धिः' इत्युक्तेः' इत्यर्थो बोध्यः

रामः मह्यं च अदात् अमुना अस्त्रेण अशङ्कतमम् अतिशयेन शङ्कारहितं कृत्वा कतमं न शत्रुं कं न रिपुं समरे संग्रामे नाशं नयामि । अपि तु सर्वमित्यर्थः ॥

अमुना मद्भुजगेन क्षतः शरेणास्तदीप्तिमद्भुजगेन ।
प्राणान्मुञ्चेत न कः प्रतियुध्येन्न जनममुं चेतनकः ॥ १९ ॥

हे शल्य, अस्तदीप्तिमद्भुजगेन अस्तो जितः दीप्तिमान् भुजगः सर्पो येन स तादृशेन मद्भुजगेन मदीयकरगतेन अमुना शरेण बाणेन को न पुरुषः प्राणानसून् मुञ्चेत । अपि तु सर्व एव । चेतनकः चेतनः सचेतन एव चेतनकः पुरुषः अमुं जनं मल्लक्षणं न प्रतियुध्येत् ॥

तस्मात्संयच्छेदं यानं कुर्यामरिं ससंयच्छेदम् ।
मद्रेशात्र बले हि प्रपश्य मे बलमशेषशात्रवलेहि ॥ २० ॥

हे मद्रेश शल्य, तस्माद्धेतोः त्वमिदं यानं रथं संयच्छ देहि । वाहयेत्यर्थः । अहमरिं शत्रुं ससंयच्छेदं सह संयतः संग्रामस्य छेदेन वर्तते यः स तादृक् ससंयच्छेदः तादृशं कुर्याम् । शत्रोरपि संग्रामस्याप्यन्तं करिष्यामीत्यर्थः । हे मद्रेश, हि निश्चये अत्र बले अत्र सैन्ये अशेषशात्रवलेहि अशेषशात्रवान् सर्वशत्रून् लेढि आस्वादयतीति अशेषशात्रवलेहि । 'दस्युशात्रवशत्रवः' इत्यमरः । ईदृशं बलं मे मम प्रपश्य वीक्षस्व ॥

इति वैकर्तनशल्यौ कथयन्तौ शत्रुहृदयकर्तनशल्यौ ।
अतिरभसेनायान्तौ निपेततुः पाण्डुपुत्रसेनायां तौ ॥ २१ ॥

इत्यनेन प्रकारेण वैकर्तनशल्यौ वैकर्तनः सूर्यसुतः कर्णः शल्यो मद्रेशश्च तौ कर्णशल्यौ कथयन्तौ परस्परं संवदन्तौ शत्रुहृदयकर्तनशल्यौ शत्रूणां रिपूणां हृदयं हृत् तस्य कर्तने शल्यौ शल्यप्रायौ । 'वा पुंसि शल्यं शङ्कुर्ना' इत्यमरः । अतिरभसेन अत्यावेगेन आयान्तौ तौ पाण्डुपुत्रसेनायां पाण्डवसेनायां निपेततुः ॥

कृतरिपुचापित्रासः कर्णः सदृशस्ततो रुचा पित्रा सः ।
व्यरचद्विजयं चापन्नरेन्द्रमध्ये विकृष्य विजयं चापम् ॥ २२ ॥

कृतरिपुचापित्रासः कृतः रिपुचापिनां शत्रुधनुष्काणां त्रासो भयं येन स तादृक् ततोऽनन्तरं रुचा हेतुभूतया पित्रा सूर्येण सदृशः स कर्णः विजयं विजयोऽस्यास्तीति विजयम् । यद्वा विजयं विजयनामकं धनुः विकृष्य कर्णान्तं नीत्वा नरेन्द्रमध्ये नृपमध्ये विजयं जयं चापत् प्राप ॥

स दधत्सेनाविलयं नृपतिसमूहं च साध्वसेनाविलयन् ।
अशनैरेवापदयं धर्मसुतं महति संगरेवापदयम्[2] ॥ २३ ॥

---

१. 'णास्तदीप्ति' मूल०. २. 'चापदयम्' इति कश्मी०.

स कर्णः सेनाविलयं सेनाया विलयो नाशः तं दधत् कुर्वन् । 'विदधत्' इति वा पाठः । सेनाविलयं विदधत् । स कर्णः । अपदयमपगता दया यत्र कर्मणि तत्तादृशम् । क्रियाविशेषणमेतत् । तथा अशनैः शीघ्रमेव साध्वसेन भयेन नृपतिसमूहं राजसंघमाविलयन् व्याकुलयन् सोऽयं कर्णः महति संगरे महायुद्धे धर्मसुतं युधिष्ठिरमवापत् प्राप ॥

स हि रविसूनुर्वाजिश्रेष्ठान्कृत्वा [तितो] व्यसूनुर्वाजिः ।
द्विपतामन्तस्तारस्वरैः शरैः पाण्डवोत्तमं तस्तार ॥ २४ ॥

हि निश्चये स रविसूनुः सूर्यसुतः कर्णः वाजिश्रेष्ठान् हयोत्तमान् व्यसून् विगतप्राणान् प्रकृतत्वाद्युधिष्ठिरस्यैव कृत्वा उर्वाजिः उर्वी महती आजिर्युद्धं यस्य स तादृक् द्विपतां शत्रूणां पाण्डूनामन्तः मध्ये तारस्वरैर्गम्भीरशब्दैः शरैः पाण्डवोत्तमं पाण्डवाग्रजं युधिष्ठिरं तस्तार ॥

प्राप्य सकलहेत्यन्तं नृपतिर्भग्नोऽभवत्स कलहेऽत्यन्तम् ।
अभिहितवाञ्छाम्यन्तं तं कर्णो मूढ ते न वाञ्छाम्यन्तम् ॥ २५ ॥

स नृपतिः युधिष्ठिरः कलहे युद्धे । 'रणः कलहविग्रहौ' इत्यमरः । सकलहेत्यन्तं सकलानां हेतीनामायुधानामन्तं नाशं प्राप्य अत्यन्तमतिशयेन भग्नः भग्नशक्तिरभूत् । तं च युधिष्ठिरं शाम्यन्तमतिखिन्नं कर्णोऽभिहितवान् उक्तवान् । किमित्याह—हे मूढ मूर्ख युधिष्ठिर, ते तव अन्तं न वाञ्छामि न काङ्क्षे । अर्जुनस्यैवान्तं वाञ्छामि । न तु तवेत्यर्थः । यद्वा मातृवचस एवोपरोधान्न तवान्तं वाञ्छामि ॥

कर्णः युधिष्ठिरं किमित्यवोचदित्याह—

पाण्डुसुतापां चाल्यां रमस्व रणतः पलायितः पाञ्चाल्याम् ।
जय नियतापाञ्चाल्यान्मा दर्शय शक्तिमप्रतापां चाल्याम् ॥ २६ ॥

हे पाण्डुसुत युधिष्ठिर, रणतः संग्रामात् पलायितः प्रचलन् त्वम् अपां पानीयानामाल्यां पङ्क्तौ कुत्रचित् रमस्व क्रीडस्व । नदीप्रवाहोपकण्ठे रमस्वेत्यर्थः । तथा—रणात्प्रचलन् पाञ्चाल्यां द्रौपद्यां रमस्व । त्वं च आल्यान् रलयोरैक्यात् आर्यान् महतः अन्यान् नियतापान् नियतः नियमितः आपः आप्तिर्लाभो येषां ते तादृशान् जय अन्यानार्यान्नियतलाभान् जय । न तु मामित्यर्थः । हे पार्थ, अप्रतापां प्रतापरहितां तथा चाल्यां मादृशैः कम्पनीयां शक्तिं स्वकीयशक्तिं मा प्रदर्शय । मयीत्यर्थः ॥

इत्थं वाचालोऽलं तममुञ्चदास्येन वाचालोलम् ।
रहसि निजजनन्या स श्वेताश्वमृते कृतात्मजजनन्यासः ॥ २७ ॥

इत्थमनेन प्रकारेण अलमत्यर्थं वाचालः कुबहुभाषी कर्णः अलोलमचपलम्, तथा—अवाचा अधःकृतेन आस्येन मुखेन युतं तं युधिष्ठिरममुञ्चत् । किमित्यमुञ्चदित्याह—

---

१. काश्मीरिकपुस्तके नैतत्.

यतः हेतोः स कर्णः रहसि सूर्येण भग्नकौमारत्वात् रहसि निजजनन्या कुन्त्या श्वेताश्वमर्जुनमृते कृतात्मजजनन्यासः कृतः सेमयेन कृतः आत्मजजनस्य युधिष्ठिरादिसुतचतुष्टयस्य न्यासो रक्षणं येन(यस्मिन्) स तादृक् । अर्जुनमृते युधिष्ठिराद्याश्चत्वारश्चेत्तत्र रणे समेष्यन्ति तान्यथा न हनिष्यसि तथा स्वमातुस्तेन समयोऽङ्गीकृत आसीदित्यर्थः ॥

प्रयया बलसत्वेन क्षिप्तः कर्णेन विपुलबलसत्त्वेन ।
राजा सन्नमदंसः शिश्ये शिविरं समेत्य सन्नमदं सः ॥ २८ ॥

स राजा युधिष्ठिरः विपुलबलसत्त्वेन विपुले बलसत्त्वे बलं सत्त्वं धैर्यं च यस्य स तादृशेन कर्णेन अलसत्वेन हेलयैव क्षिप्तो मोचितः शिविरं सेनानिवेशं समेत्य सुष्वाप। कथम् । सन्नमदं सन्नः क्षीणः मदः गर्वो यस्मिन् कर्मणि तथा । कीदृशः स युधिष्ठिरः । संनमदंसः संनमन्तौ सम्यक् नमन्तौ चिन्तया नम्रीभूतावंसौ यस्य स तथा ॥

अथ नानापत्रा सा कुरुसेना रुषितमतिरनापत्रासा ।
कर्णं समदा रयतः स्फुरद्भिरिपुभिर्बलं समेत्य समदारयत ॥ २९ ॥

अथानन्तरं रुषितमतिः सरोषधीः, तथा—अनापत्त्रासा अविद्यमाना आपदो विपदः त्रासा भयानि यस्याः सा तादृशी, तथा—नानापत्त्रा नाना नानाविधानि पत्त्राणि वाहनानि गजरथहयादीनि यस्यां सा, तथा—रयतः वेगवशात् समदा सगर्वा कर्णं सेनापतिं समेत्य सा कुरुसेना कौरवसेना स्फुरद्भिः इषुभिः शरैः बलं पाण्डवसैन्यं समदारयत व्यदारयत् ॥

रिपुगणहा रामाय श्रीमान्प्रणिपत्य संप्रहारामायः ।
अरिपरमानीकान्तं स भार्गवास्त्रं मुमोच मानी कान्तम् ॥ ३० ॥

संप्रहारामायः संप्रहारे युद्धे अमायः निर्व्याजः, तथा—रिपुगणहा शत्रुसमूहहन्ता श्रीमान् जयश्रीमान् रामाय स्वगुरवे जामदग्न्याय प्रणिपत्य नत्वा मानी मानवान् स कर्णः कान्तं मनोहरम् अरिपरमानीकान्तम् अरीणां शत्रूणां परमं महोत्कृष्टं यदनीकं सैन्यं तस्यान्तं नाशरूपं भार्गवास्त्रं भार्गवाच्छिक्षितमस्त्रं मुमोच अत्यजत् ॥

— सुबाहोरस्त्रस्फुरच्छरोत्कृत्तकेतुबाहोरस्त्रः ।
पृथुरथगजवाजिभ्यः पतितपतन्निहतभूभुगजवाजिभ्यः ॥ ३१ ॥
धनुषो गलता लूनः शरनिकरेणोरुचरणगलतालूनः ।
पाण्डवसेनालोकः सहसैव बभूव वैशसेनालोकः ॥ ३२ ॥

(युग्मम्)

सुबाहोः शोभनभुजस्य तस्य कर्णस्य अस्त्रेषु स्फुरन्तो ये शराः तैरुत्कृत्तानि केतुबाहोरस्त्राणि केतवः ध्वजाः बाहा भुजा उरस्त्राणि कवचानि यस्य स तादृशः अस्त्रस्फु-

रच्छरोत्कृत्तकेतुबाहोरस्त्रः, तथा—पृथुरथगजवाजिभ्यः पृथवो महान्तो ये रथा गजा हस्तिनः वाजिनः अश्वास्तेभ्यः पतिताश्च पतन्तश्च निहता मारिता भूभुजो नृपा यस्मिन् स तादृक्, तथा—अजवाजिभ्यः अजवं निर्वेगमञ्चन्ति गच्छन्ति इति अजवाचः। 'अञ्चु गतिपूजनयोः' इति धातुः। तादृशा इभ्याः स्वामिनो यस्मिन् स तादृशः, तथा—धनुषश्चापात् गलता शरनिकरेण बाणसमूहेन लूनश्छिन्नः, तथा—ऊरुचरणगलतालूनः छिन्नैः ऊरुभिः चरणैः पादैः गलैः कण्ठैः तालुभिः काकुदैश्च ऊनः, ईदृशः पाण्डवसेनालोकः वैशसेन दुःखेन अलोकोऽदृश्यः सहसैव तत्क्षणमेव बभूव॥

अरिमतिशोभावन्तं स्वजनस्य च वीक्ष्य भूरिशो भावं तम्।
विहतायलघोरस्य व्यधत्त मतिमर्जुनोऽथ बलघोरस्य॥ ३३॥

अथानन्तरमतिशोभावन्तमतिशयेन तादृक्पराक्रमसंदर्शनाद्बहुशोभायमानं तमरिं शत्रुं कर्णं वीक्ष्य, तथा—स्वजनस्य च स्वकीयलोकस्य च भूरिशः प्रायशः तं भावं तमभिप्रायं कर्णान्निर्जयरूपं वीक्ष्य बलघोरस्य बलेन घोरस्य क्रूरस्य, तथा—अलघोर्महतः पराक्रमादिना अस्य कर्णस्य विहतौ वधे मतिं बुद्धिमर्जुनो व्यधत्त॥

स हि रिपुरोधाय बलन्निजकं शक्रात्मजः पुरोधाय बलम्।
धर्मजमत्रासन्तं विज्ञाय जगाम शिबिरमत्रासं तम्॥ ३४॥

हि निश्चये रिपुरोधाय शत्रुरोधाय बलन् स शक्रात्मजः अर्जुनः निजकं निजमेव निजकं बलं सैन्यं पुरोधाय पुरस्कृत्य अत्र च सैन्ये असन्तमविद्यमानं धर्मजं युधिष्ठिरं विज्ञाय तं शिबिरं सेनानिवेशं जगाम ययौ। कथं कृत्वा। अत्रासं त्रासरहितम्॥

स्थिरबुद्धिरवार्यरुषं नृपमाश्वास्य क्षरद्रुधिरवार्यरुषम्।
कृतकोदण्डायमनः पार्थश्चक्रेऽथ कर्णदण्डाय मनः॥ ३५॥

अथानन्तरं स्थिरबुद्धिः निश्चलधीः स पार्थः अर्जुनः अवार्यरुषमवारणीयरोषम्, तथा—क्षरद्रुधिरवार्यरुषं क्षरत् स्रवत् रुधिरवारि रक्तजलं येषु तादृशानि अरूंषि व्रणानि यस्य स तादृशं नृपं युधिष्ठिरमाश्वास्य सान्त्वयित्वा कृतकोदण्डायमनः, कृतं निष्पादितं कोदण्डस्य स्वधनुषः गाण्डीवस्य आयमनमानमनं येन स तादृक् सन्, कर्णदण्डाय कर्णस्य दण्डः वधरूपं दण्डनं तस्मै मनश्चक्रे॥

अथ रिपुसादायातिक्रुद्धे पार्थे रणं रसादायाति।
तां सेनामारावीरोषो भीमो विरोधिनामारावी॥ ३६॥

अथानन्तरं रिपुसादाय रिपोः कर्णस्य सादः वधरूपः तस्मै अतिक्रुद्धे पार्थे अर्जुने रसात् रणं संग्राममायाति आगते सति आरावी सिंहनादकृत् अवीरोषः विगतो रोषो यस्य स वीरोषः, न वीरोषः अवीरोषः। सरोष एवेत्यर्थः। तादृशः सन् भीमो भीमसेनः विरोधिनां कुरूणां सेनामार ययौ॥

स तु हि दयासन्नं तं नृपतिं दृष्ट्वागसो यियासन्नन्तम् ।
संग्रामे बाधावत्सैन्यं प्रविधाय तूर्णमेवाधावत् ॥ ३७ ॥

तु पक्षान्तरे हि निश्चये स भीमः दयासन्नं सदयं तं नृपतिं युधिष्ठिरं दृष्ट्वा आगसः अपराधस्य अरीन् प्रति क्षमारूपस्य अन्तं यियासन् [जि]गमिष्य(प)न् संग्रामे युद्धे बाधावत्सबाधं सैन्यं प्रविधाय तूर्णमेव अधावत् । अरीन् प्रतीति शेषः ॥

तस्य च परमाद्रवतः क्षोभं त्रीण्यपि जगन्ति परमाद्रवतः ।
अगमन्नवनिधुवनतश्चलमेरुनिरस्तनाकिनिधुवनतः ॥ ३८ ॥

परमत्यर्थमाद्रवतो धावतः तस्य च भीमस्य परमादुत्कृष्टात् रवतः शब्दात् चलमेरुनिरस्तनाकिनिधुवनतः चलो यो मेरुः मेरुगिरिः तत्र निरस्तं नाकिनिधुवनं स्वर्गीयजनरतं येन स तादृशात् अवनिधुवनतः भूकम्पात् त्रीण्यपि जगन्ति क्षोभमगमन् ॥

स शरं तरसादाय व्यसृजत्कर्णाय विपुलतरसादाय ।
पातमनीयत मोही तेनैव स चाप्यलङ्घनीयतमो ही ॥ ३९ ॥

स भीमस्तरसा वेगेन शरं बाणमादाय गृहीत्वा विपुलतरसादाय विपुलतरः अतिमहान् सादः अतिखेदो यस्य स तादृशाय कर्णाय व्यसृजत् चिक्षेप । ही आश्चर्ये । अलङ्घनीयतमः अपि अलङ्घ्योऽपि मोही मोहवान् तेनैव शरेण स च कर्णः पातमनीयत । भूमौ पपातेत्यर्थः ॥

दिग्वलये मङ्क्षु रवान्कुर्वञ्जिह्वालुलूषयेमं क्षुरवान् ।
तं पुनरासीददयं यस्य मनः परुषवाग्भिरासीददयम् ॥ ४० ॥

दिग्वलये दिक्चक्रे मङ्क्षु शीघ्रं रवान् सिंहनादान् कुर्वन्, तथा—क्षुरवान् रोमच्छेदकशरवान् सः अयं भीमः तं कर्णं जिह्वालुलूषया जिह्वाया लुलूषा छेदेच्छा तया हेतुभूतया आसीदत् आश्रयत् । सोऽयं भीमः क इत्याह—यस्य भीमस्य परुषवाग्भिः अर्थात् प्राक् कर्णोक्ताभिः मनश्चित्तमदयं निर्दयमासीत् ॥

शृणु गां मे तात वधीर्मैनं भीमास्तु धृतिसमेता तव धीः ।
मतिमान्नास्यवधेहि व्यधायि संधा किरीटिनास्य वधे हि ॥ ४१ ॥
इत्थं रुद्धस्तेन प्रतीत्य शल्येन स पुनरुद्धस्तेन ।
कर्णं धैर्ययुगजहाद्विड्भिर्जघटे च बहुविधैर्ययुगजहा ॥ ४२ ॥

इत्थमनेन प्रकारेण प्रतीत्य ज्ञात्वा उद्धस्तेन उत्क्षिप्तभुजेन तेन शल्येन नृपेण पुनः रुद्धः स भीमः धैर्ययुक् धीरः सन् कर्णं राधेयमजहात् मुमोच । स च भीमः बहुवि-

---

१. 'प्रीत्या' मूल०.

धैर्द्विड्भिः शत्रुभिः, तथा—बहुविधैः विड्भिः लोकैः शत्रुसेनासत्कैः(?)। विप्शब्दो लोकवाची। जघटे मिलितः। कीदृशो भीमः। ययुगजहा ययवोऽश्वाः, गजा हस्तिनः, तान् हन्तीति ययुगजहा। 'ययुरश्वेऽश्वमेधाश्वे' इति मङ्खः। किमित्याह—शृणु गामिति। हे भीम हे भीमसेन, हे तात पूज्य, मे मम गां वाचं शृणु एनं कर्णं मा वधीः मा जहि, तव धीः बुद्धिः धृतिसमेता सधैर्या अस्तु। त्वं च मतिमान् बुद्धिमान् नासि। काक्वा अस्येव इत्यर्थः। त्वं च अवधेहि सावधानो भव। अत्र हेतुमाह—व्यधायीति। यतः किरीटिना अर्जुनेन अस्य कर्णस्य वधे मारणे हि निश्चये संधा प्रतिज्ञा कृता। अतो मैनं वधीरित्यर्थः॥

गुरुकेतुच्छत्रा सा कुरुसेना क्रुद्धबलेऽपि[1] तुच्छत्रासा।
गजवाजितता तेन प्रमर्दिता वायुजेन जवजिततातेन॥ ४३॥

गुरुकेतुच्छत्रा गुरवः केतवः ध्वजाः गुरूणि छत्राणि आतपत्राणि च यस्यां सा, तथा—क्रुद्धबले क्रुद्धे सरोषे शत्रुबलेऽपि सति तुच्छत्रासा स्वल्पभीः सा कुरुसेना कौरवचमूः तेन वायुजेन भीमेन प्रमर्दिता प्रकर्षेण मर्दिता। पुनः कीदृशी सेना। गजवाजितता गजैः वाजिभिश्च तता संभृता। कीदृशेन वायुजेन। जवजिततातेन जवेन जितः तातः पिता वायुर्येन स तादृशेन॥

अथ रभसादभियं तं भीमं दुःशासनोऽभ्यगादभियन्तम्।
कृतकम्पारावारः स्थितं रणे तटमिवाशुकं पारावारः॥ ४४॥

अथानन्तरं रभसादावेगेन अभियन्तं गच्छन्तमभियम् अविद्यमाना भीर्भयं यस्य स तादृशमभियं तं भीमं भीमसेनं दुःशासनो दुर्योधनभ्राता अभ्यगात् अभिजगाम। कीदृशं भीमम्। रणे संग्रामे स्थितम्। दुःशासनः कीदृशः। कृतकम्पारावारः कृतः कम्पेन आरावः येन तत् तादृशमारम् अरीणां समूह आरं यस्य सः। क इव। पारावारः समुद्र इव। यथा पारावारः समुद्रः तटमभिगच्छति। तटं कीदृशम्। आशुकम् आशु शीघ्रं कं जलं यस्य तत्तादृशम्। 'पारावारः सरित्पतिः' इत्यमरः॥

त्वरितौ सारावरणौ भीमो दुःशासनश्च सारावरणौ।
घोरमतन्वातां तौ पराक्रमं दलितयापि तन्वा तान्तौ[2]॥ ४५॥

भीमः भीमसेनः दुःशासनश्चेत्युभौ सारावरणौ सारावः ससिंहनादः रणः संग्रामो ययोस्तौ, तथा—सारावरणौ सारं दृढमावरणं कञ्चुकादि ययोस्तौ ताबुभौ दलितयापि तन्वा शरीरेण तान्तौ खिन्नौ सन्तौ घोरं कठिनं पराक्रममतन्वातां विस्तारयामासतुः॥

केशभराक्षेपी यः स्वकलत्रस्यासतां धुरा क्षेपीयः।
अरिमधिकोपनतान्तं दृष्ट्वा भीमो बभार कोपनतां तम्॥ ४६॥

---

१. 'सुरबलेऽपि' मूल०. २. 'अतान्तावग्लानौ' इति मूलपुस्तकटिप्पण्येव समीचीना.

यः अरिः दुःशासनः क्षेपीयः अतिक्षिप्रमसतां खलानां धुरा अग्र्यत्वेन स्वकलत्रस्य स्वकुटुम्बिन्याः द्रौपद्याः सभायां केशभराक्षेपी केशपाशाक्षेपी अभूत् तमरिमधिकोपनतान्तम् अधिकमुपनतः प्राप्तः अन्तो यस्य स तादृशं दृष्ट्वा कोपनतां कोपनस्य सरोषस्य भावः कोपनता तां भीमः भीमसेनो बभार अधारयत् ॥

अथ भीमो घोरगदो रभसादभिभूय रिपुममोघोरगदोः ।
कुरुवीराक्षसमक्षं जगृहे हनुमान्पुरेव राक्षसमक्षम् ॥ ४७ ॥

अथानन्तरं घोरगदः घोरा कठिना गदा आयुधविशेषो यस्य स तादृक्, तथा—अमोघोरगदोः अमोघौ सफलौ उरगसदृशौ सर्पतुल्यौ दोषौ भुजौ यस्य स तादृक्, रभसादावेगेन रिपुं दुःशासनमभिभूय पराभूय कुरुवीराक्षसमक्षं कुरुवीराणां कर्णाश्वत्थामकृतवर्मप्रभृतीनामक्षा इन्द्रियाणि सामर्थ्याच्चक्षूंषि तत्समक्षम्। तेषां पश्यतामेवाग्रे इत्यर्थः। रिपुं दुःशासनं जगृहे गृहीतवान्। कः कमिव। यथा पुरा हनूमान् वानरश्रेष्ठः अक्षमक्षनामानं रावणसुतं राक्षसं जगृहे तद्वत् ॥

सोऽधिकलोलोऽहितहृद्भागं भित्त्वा महाबलो लोहितहृद् ।
भीमो वारणदरणस्फुरितो बभावरातिवारणदरणः ॥ ४८ ॥

महाबलः अद्भुतबलः, तथा—अधिकमत्यर्थं तद्वधे लोलः, अहितहृद्भागम् अहितस्य शत्रोः दुःशासनस्य हृद्भागं हृत्प्रदेशं भित्त्वा विदार्य लोहितहृत् लोहितं रक्तं हरतीति तादृक्, तथा वारणदरणस्फुरितोऽपि वारणानां करिणां दरणं विदारणं तस्मिन् स्फुरितः उद्भटोऽपि बभौ रेजे। कीदृशः। अरातिवारणदरणः अरातीनां शत्रूणां यद्वारणं निवारणं तद्ददातीति अरातिवारणदः तादृशः संग्रामो यस्य ॥

वेगादाहत्यागं द्विरद इव महीतले सदाहत्यागम् ।
अतिरभसेनोरसि तं भिन्दंश्चकार भीमसेनो रसितम् ॥ ४९ ॥

अतिरभसेन अत्यावेगेन तं दुःशासनमुरसि वक्षसि सदाहत्यागं सह दाहेन महीतले त्यागेन च वर्तते यत्र तत्तादृशं कृत्वा भिन्दन् भीमसेनो रसितं शब्दं चकार। क इव। द्विरद इव। द्विरदो वेगात् अक्षं वृक्षं महीतले सत्यागं भिन्दन् रसितं बृंहितं करोति तद्वत् ॥

अथ मधुरं रुचिमदसृक्सलिलं मध्विव मनोहरं रुचिमदसृक् ।
वायुसुतेनापायिद्विड्वक्षः कुहरजन्म तेनापायि ॥ ५० ॥

अथानन्तरं रुचिमत् कान्तिमत् मधुरं स्वादु असृक्सलिलं रक्तजलं तेन वायुसुतेन भीमेन अपायि। असृक्सलिलं कीदृशम्। अपायिद्विड्वक्षः कुहरजन्म अपायः नाशोऽस्यास्तीत्यपायी तादृक् यो द्विट् दुःशासनस्तस्य यद्वक्षः कुहरं तज्जन्म। किमिव मनोहरम्।

मध्विव माक्षिकमिव। यद्वा मधु माध्वीकासवमिव । तदपि कीदृशम्। रुचिमदसृक् रुचिः हृदयाग्निप्राबल्यं मदःक्षीबता तौ सृजतीति तादृक् ॥

अहितमदानवमुष्णन्निजशत्रोः शोणितं तदा नवमुष्णम् ।
मुदमुरुधामा पायं पायं नाकीव नवसुधामापायम् ॥ ९१ ॥

अहितमदान् अहितानां शत्रूणां मदान् गर्वान् अवमुष्णन् चोरयन् अयं भीमः उरुधामा महातेजस्वी निजशत्रोर्दुःशासनस्य उष्णं नवं शोणितं रक्तं तदा तत्समये पायं पायं पीत्वा पीत्वा आभीक्ष्ण्येन सुलीलं मुदं तुष्टिमाप । क इव । नाकी देव इव । यथा देवः नवसुधां पीत्वा पीत्वा मुदमाप्नोति तद्वत् ॥

तत्र हते नानादिक्क्षोभकृता वायुजेन तेनानादि ।
अथ रिपुहा स न नर्तप्रतिश्रुतः संगरे जहास ननर्त ॥ ९२ ॥

तत्र दुःशासने हते सति नानादिक्क्षोभकृता नानादिशां लक्षणया तात्स्थ्यात् नानादिग्वासिनां क्षोभं करोतीति तादृशेन वायुजेन भीमेन अनादि महानादः कृतः । अथानन्तरं रिपुहा शत्रुघातकः स भीमः संगरे युद्धे न न जहास। अपि तु जहास । न न ननर्त। अपि तु ननर्त । कीदृशो भीमः। ऋतप्रतिश्रुतः ऋतं सत्यं प्रतिश्रुतं प्रतिज्ञाकरणं यस्य स तादृक् । अहं रणशिरसि दुःशासनोरस्तः शोणितं पिबामीति यतस्तेन प्रतिश्रुतमिति भारताख्यानम् ॥

तं हतरिपु नर्दन्तं दशन्तमत्यन्तमत्सरि पुनर्दन्तम् ।
द्रष्टुं के शेकुरवस्थितं रणे विरचितास्थिकेशे कुरवः ॥ ९३ ॥

हतरिपु हतो रिपुर्दुःशासनो यस्मिन्कर्मणि तथा। क्रियाविशेषणमेतत्। तथा नन्द(र्द)न्तं सतोषमत्यन्तमत्सरि अत्यन्तं मत्सरः परोत्कर्षासहनं यस्यास्तीति यस्मिन्कर्मणि । तथा एतदपि क्रियाविशेषणम्। तथा दन्तम्। जातावेकवचनम्। दन्तानित्यर्थः। दशन्तं सटणत्कारं क्रुधा निजदन्तान् दशन्तमित्यर्थः । तादृशं रणे संग्रामे द्रष्टुं वीक्षितुं के कुरवः दुर्योधनाद्याः शेकुः। केऽपि तं द्रष्टुं न शेकुरित्यर्थः। रणे कीदृशे। विरचितास्थिकेशे विरचितानि वितानितानि अस्थीनि केशाश्च रणहतदेहिनां यस्मिन् स तादृशे ॥

रणकृतिनामध्येयं कर्म करोम्युभयपृतनामध्येऽयम् ।
नो चेन्मत्तो बलतः स मोचयत्वेनमत्र मत्तो बलतः ॥ ९४ ॥
मुञ्चति नैष भवत्सु क्रुद्धेष्वेनं च यादवर्षभवत्सु ।
नोज्झत्सिंहाकारं हरिं हि शरभो हरः स्वासिं हाकारम् ॥ ९५ ॥
श्रुत्वा मानवदद्यं भैमं वचनमिति विकृतिमानवददयम् ।
प्राणान्रणभुवि हरतः सत्त्वं न ह्येतदत्र मे प्रविहरतः ॥ ९६ ॥

इति कृतकोपाय ततः पार्थायादर्शयच्छुभोपायततः ।
विश्वाकारं भीमं साक्षाद्रुद्रं हरिर्यथारम्भीमम्[1] ॥ ९७ ॥

(चक्कलकम्)

इत्यनेन प्रकारेण कृतकोपाय पार्थाय अर्जुनाय शुभोपायततः शुभः निजभक्तपाण्डुपुत्रहितो य उपायः तत्र ततः सादरः हरिः जगन्नाथः श्रीकृष्णः इमं भीमं भीमसेनं साक्षाद्रुद्रं रुद्ररूपं विश्वाकारं विश्वं रूपमदर्शयत् । नैष भीमः, साक्षाद्रुद्र एवायमस्मिन् कर्मणि प्रवृत्त इत्यदर्शयदित्यर्थः । कथम् । यथारम्भि यथा रम्भोऽत्रास्तीति यत्र कर्मणि तथा इति कृतकोपाय । कथमित्याह—विकृतिमान् महाविकृतिः अयं भीमः पश्य स्वामिन् जगन्नाथ कथमित्येवमवदत् । प्राणानिति । रणभुवि संग्रामभूमौ प्राणान् दुःशासनसंबन्धिनः हरतः तथात्र रणभुवि प्रविहरतः क्रीडतः मे मम एतत्कर्म रुधिरपानरूपं न हि केनापि सह्यं मा क्षाम्यन्तु । का मे भीतिरित्यर्थः । इति विकृतिमान् । कथमित्याह—भीमसेनो वक्ति—रणकृतिनामिति । रणकृतिनां संग्रामकर्मणि कुशलानामधृष्यं पठनीयं कर्मैतादृशमुभयपृतनामध्ये सेनाद्वयमध्ये करोमि । नो चेत् यः कोऽपि बलवान् स मत्तः निजपराक्रमेण क्षीवः सन् बलतः भ्रमतो मत्तः अस्माज्जनादेनं दुःशासनं बलतः बलेन मोचयतु मुञ्चत्वि(ती)ति । एप मल्लक्षणः यादवर्पभवत्सु यादवर्षभः श्रीकृष्णः तद्वत्सु यादवर्षभेति प्राधान्यद्योतनाय । अपिशब्द आर्थः । यादवर्षभवत्स्वपि भवत्सु पाण्डवलोकेषु क्रुद्धेषु [न मुञ्चति ।] अहमेनं न मुञ्चामीत्यर्थः । अत्र दृष्टान्तमाह—नौज्झदिति । हि निश्चये हि यस्मादर्थे वा । शरभः शरभमूर्तिः शरभः अष्टपान्मृगाधिपविशेषः । प्रायश उदीच्येषु संभवति । अत्युद्भटत्वेनाविनीतस्य नरसिंहाकारस्य विष्णोर्बलदलनाय शंभुना शरभावतारो गृहीत इति पुराणेषु पठ्यते । शरभमूर्तिः हरः हाकारं हा इति कृत्वा स्वसिं सुशोभनः असिः खड्गो यस्य स तादृशमपि सिंहाकारं हरिं नरसिंहरूपं नौज्झत् यथा तद्वदहमप्येनं न त्यजामीत्यर्थः ॥

इत्थं कुर्वत्यन्तं भीमे सैन्यस्य निहतकुर्वत्यन्तम् ।
स्वबलमनाधि रथिभ्यां विदधद्भ्यां घटितमर्जुनाधिरथिभ्याम् ॥९८॥

इत्थमनेन प्रकारेण अत्यन्तं सैन्यस्य रिपुसैन्यस्य अन्तं कुर्वति भीमे सति । कथम् । निहतकुरु निहताः कुरवो यस्मिन्कर्मणि तद्यथा भवति तथा । रिपुसैन्यस्य अन्तं कुर्वति रथिभ्यां रथारूढाभ्यामनाधि अविद्यमान आधिर्मनःपीडा यस्य तत् तादृशं स्वबलं विदधद्भ्यामर्जुनाधिरथिभ्यामर्जुनश्च आधिरथिश्च कर्णश्च ताभ्यां घटितं मिलितम् । युद्धायेति शेषः ॥

ताभ्यां रसमानाभ्यां कर्णेन किरीटिना च रसमानाभ्याम् ।
उद्धतरसमा नाभ्यां युद्धे विदधे परस्परसमानाभ्याम् ॥ ९९ ॥

---

१. 'मृधारम्भी' मूल०

रसो वीररसश्च मानो गर्वश्च ताभ्यां हेतुभ्यां रसमानाभ्यां सिंहनादं विदधद्भ्यां परस्परसमानाभ्यां पराक्रमेण परस्परं सदृशाभ्यां कर्णेन किरीटिना अर्जुनेन चोभाभ्यां उद्धतरसमा उद्धतरसस्य रौद्ररसस्य मा लक्ष्मीः नाभ्यां रणभूमिनाभ्याम्। रणमध्ये इत्यर्थः। युद्धे रणे विदधे कृता ॥

अथ कपिकेतावदयं कर्णो बाणं बलाधिके तावदयम् ।
भयमरिसेना गमयन्निशितं विससर्ज वैशसे नागमयम् ॥ ६० ॥

अथानन्तरमरिसेनाः शत्रुसेना भयं गमयन् प्रापयन् अयं कर्णः तावत् प्राथम्ये बलाधिके बलेनाधिके कपिकेतावर्जुने वैशसे युद्धसंकटे [अदयं निर्दयं यथा स्यात्] नागमयं सर्पमयं निशितं तीक्ष्णं बाणं विससर्ज न्यक्षिपत् ॥

सरसं खेऽनवमं तं बाणं दृष्ट्वानलं मुखेन वमन्तम् ।
आसन्नमनन्तेन व्यधायि पाण्डवरथस्य नमनं तेन ॥ ६१ ॥

सरसं सशब्दमनवमं परार्ध्यमनलमग्निं मुखेन वमन्तमुद्गिरन्तमासन्नं समीपं प्राप्तं तं बाणं दृष्ट्वा तेनानन्तेन जगन्नाथेन श्रीकृष्णेन पाण्डवरथस्यार्जुनरथस्य नमनं व्यधायि। निजपादाङ्गुष्ठं महागिरिगुरुं तत्र न्यस्य अर्जुनरथो नम्रीकृतः श्रीकृष्णेन, यथा न अर्जुनशिरसि स बाणो लीनः स्यादित्यर्थः। एतदाख्यानं कर्णपर्वणि तत एवोह्यम् ॥

स च कृतमतनोदस्तं नागः पार्थस्य मौलिमतनोदस्तम् ।
अपि विपदं वरया तं शरवृष्ट्या जिष्णुरनयदम्बरयातम् ॥ ६२ ॥

स च नागः नागरूपो बाणः कृतमतनोदः कृतः मतस्य अभिमतस्य अर्जुनवधस्य नोदः दूरीकरणं यस्य स तादृक् सन् रथसन्नत्वात्पार्थस्यार्जुनस्य मौलिं मुकुटमस्तमतनोत्। मुकुटं चिच्छेदेत्यर्थः। जिष्णुरर्जुनश्च अम्बरयातं तमाकाशयातं नागबाणं वरया उत्कृष्टया शरवृष्ट्या विपदं नाशमनयत् ॥

अथ मुदिताशापे न द्विजातिमुख्यस्य बलवता शापेन ।
रोषसमग्रास्यस्य स्यन्दनचक्रं भुवा समग्रास्यस्य ॥ ६३ ॥

अथानन्तरम्। तेनेति शेषः। तेन कर्णेन मुदिताशा मुदितं प्रमोदः तस्याशा दिक् न आपे न लब्धा। अभिमतार्जुनवधाकरणात् प्रमोदो न प्राप्तः। अथ द्विजातिमुख्यस्य दुर्वाससः बलवता शापेन च अस्य कर्णस्य स्यन्दनचक्रं रथचक्रं भुवा भूम्या समग्रासि संग्रस्तम्। अस्य कीदृशस्य। रोषसमग्रास्यस्य रोषेण समग्रं संभृतमास्यं मुखं यस्य स तादृशस्य ॥

क्रुद्धतयोग्रस्तेन व्यग्रे शत्रौ धनंजयो ग्रस्तेन ।
इषुणा कर्णान्तरतः[1] प्रकृष्य तरसा पपात कर्णान्तरतः ॥ ६४ ॥

१. 'इषुमाकर्णान्तरतः प्रकृष्य तरसा मुमोच' मूल०.

तेन इषुणा नागबाणेन ग्रस्तेन व्यग्रे व्याकुले शत्रौ कर्णे सति क्रुद्धतया अतिक्रुद्धतया उग्रः धनंजयः अर्जुनोऽभूत्। ततश्च प्रकृष्य कर्णान्तरतः कर्णान्ते कर्णसमीपे रतः प्रकृतत्वात् इषुः अर्जुनस्य पपात। कीदृशः। कर्णान्तरतः कर्णान्ते कर्णस्य आधिरथेः अन्तो नाशस्तत्र रतः॥

तस्य च मूर्धा रयतः कृत्तः कर्णस्य कुरुचमूर्धारयतः।
विशिखेनाशा तेन च्छिन्ना पतिता च कुरुजनाशा तेन॥ ६५॥

कुरुचमूः कौरवचमूः धारयतः रक्षतः तस्य च कर्णस्य मूर्धा शिरः रयतो वेगेन तेन विशिखेन कृत्तश्छेदितः। तेन विशिखेन बाणेन कुरुजनाशा कौरवजनस्य आशा च छिन्ना कृत्ता सा पतिता च। सहोक्तिः॥

अथ सूतात्मजनाशे दुःखी दुर्योधनो गतात्मजनाशे।
न मनः परमरणाय व्यधत्त निरतोऽभवच्च परमरणाय॥ ६६॥

अथानन्तरं गतात्मजनाशे गता आत्मजनस्य स्वकीयजनस्य आशा यस्मिंस्तादृशे सूतात्मजनाशे सूतात्मजस्य आधिरथेः कर्णस्य नाशस्तस्मिन् सति दुःखी दुःखवान् दुर्योधनः परमरणाय परेषामन्येषां लोकानां मरणं तस्मै मनः न व्यधत्त। परेषां मरणं वृथेति मनसि चक्रे इत्यर्थः। तथा परमरणाय परम उत्कृष्टश्चासौ रणः स्वयं स्वेनैव कृतत्वात् परमरणस्तस्मै निरतोऽभूत्। तत्रैव मनश्चक्रे इत्यर्थः॥

स नरवरोऽहनि शान्ते शिविरगतः शयनमारुरोह निशान्ते।
प्रददावार्तायनये बलाधिपत्यं च विहितवार्ताय नये॥ ६७॥

स नरवरो राजा दुर्योधनः अहनि दिने शान्ते सति प्रदोषे शिविरगतः शिविरं सैन्यविनिवेशस्थानं गतः सन् शयनमारुरोह। निशान्ते प्रातश्च आर्तायनये शल्यनृपाय बलाधिपत्यं सेनाधिपत्यं च प्रददौ। कीदृशाय। नये नीतिशास्त्रे विहितवार्ताय विहितं कृतं वार्तं कृषिपाशुपाल्यादिवार्ताग्रहणं येन स तादृशाय॥

बलमभियात्रस्यन्तं धर्मसुतः शल्यमतुलया त्रस्यन्तम्।
शक्त्या धीमानवधीन्निरूप्य पृथिवीभृतां युधीमानवधीन्॥ ६८॥

बलमभियात्रस्यन्तं बलं सैन्यमभि सैन्यमुद्दिश्य यातारो गन्तारः असयः खड्गा येषां ते यात्रसयः तेषामन्तः नाशरूपस्तं तथा त्रस्यन्तं धर्मसुतात्। एवंविधं शल्यं शल्यनृपमतुलया अप्रतिमया शक्त्या आयुधविशेषेण धर्मसुतो युधिष्ठिरः अवधीत्। किं कृत्वा। इमान् शल्यादीन् पृथ्वीभृतां राज्ञामवधीनवशेषान् निरूप्य निश्चित्य॥

शकुनिं देवनमूलं नृपोऽपि यत्कृतिभिराददे वनमूलम्।
तं नानाक्षमतेषु स्थिरमथ माद्रीसुतस्य नाक्षमतेषुः॥ ६९॥

नृपोऽपि राजा युधिष्ठिरोऽपि यत्कृतिभिः। स्त्रियां भावे क्तिः। यस्य शकुनेः कृतिभिः कर्मभिः द्यूतमुख्यैः वनमूलं वनस्य काननस्य मूलं वनवासमाददे जग्राह। तं देवनमूलं द्यूतक्रीडामूलम् अक्षमतेषु अक्षाणां पाशकानां मतेषु स्थिरं माद्रीसुतस्य सहदेवस्य इषुः शरः न अक्षमत न सेहे। सहदेवेन शकुनिः हत इत्यर्थः॥

किं क्रियते लापानां बहुलतया तद्बलं वतेलापानाम्।
वासविहव्यग्रासिग्रस्तमभूदहितविग्रहव्यग्रासि॥ ७०॥

लापानामालापानां बहुलतया बाहुल्येन किं क्रियते। किं बहु कथ्यते इत्यर्थः। वत खेदे अद्भुते वा। इलापानाम् इलां भूमिं पान्ति रक्षन्तीति इलापाः राजानस्तेषां बलं वासविहव्यग्रासिग्रस्तं वासविः इन्द्रसूनुः अर्जुनः स एव हव्यग्रासी हव्याशी अग्निस्तेन ग्रस्तमभूत्। कीदृशं तद्बलम्। अहितविग्रहव्यग्रासि अहितानां शत्रूणां ये विग्रहाः शरीराणि तेषु व्यग्राः व्यापृता असयः खड्गा यस्मिंस्तत्। अवशेषाः केचिद्राजानः अर्जुनेन हता इत्यर्थः॥

विधृतरसं धामवता कुरुवृन्दं महत्सु चैषु संधामवता।
वायुसुतेनाघानि स्मरता तन्निर्मितानि तेनाघानि॥ ७१॥

धामवता तेजोवता[1] महत्सु महान्तः कर्णादयस्तेषु मध्ये संधां प्रतिज्ञां प्राग्विहितां धार्तराष्ट्रान् शतं क्षयं नेष्यामीत्येवंविधामवता रक्षता तन्निर्मितानि तैर्धार्तराष्ट्रैः दुःशासनप्रभृतिभिर्निर्मितानि अघानि सभायां स्वकलत्रनग्नीकरणकेशाकर्षणाद्यपराधरूपाणि स्मरता वायुसुतेन भीमेन कुरुवृन्दं धार्तराष्ट्रसमूहः अघानि हतः। सर्वे धार्तराष्ट्रा दुःशासनाद्या भीमेन हता इत्यर्थः॥

सुनिराकृतवर्माणः शरैः कृपद्रोणसुतकृतवर्माणः।
समरमुदस्य भिया ते पलायितास्तत्र रिपुसदस्यभियाते॥ ७२॥

तत्र रिपुसदसि तस्यां शत्रुसभायामभियाते पलायितायां सत्यां शरैर्बाणैः सुनिराकृतवर्माणः सुष्ठु निराकृतानि छिन्नानि वर्माणि कञ्चुका येषां ते तादृशाः अवशिष्टास्त्रयस्ते कृपद्रोणसुतकृतवर्माणः कृपाचार्याश्वत्थामकृतवर्माणः समरं संग्राममुदस्य त्यक्त्वा भिया भयेन पलायिताः॥

प्रेक्ष्य चमूनाशं स प्रजगाहे ह्रदमगाधमूनाशंसः।
तं च समस्तं भयतः स्वविद्यया कुरुपतिः समस्तम्भयतः॥ ७३॥

ऊनाशंसः ऊना हीना आशंसा जयाशा यस्य स तादृक् स कुरुपतिः दुर्योधनः अगाधमतलस्पर्शं ह्रदं द्वैपायनह्रदं नाम प्रजगाहे भयतः भयेन समस्तं सकलं तं च द्वैपायनह्रदं स्वविद्यया मायया समस्तम्भेव स्वशरीरं जलरूपमेव कृत्वा। तत्रोवासेत्यर्थः।

---

१. 'तेजस्वता' 'तेजस्विना' इति वा भवेत्. २. 'पुत्र' मूल०.

तथा च शल्यपर्वणि—'ततः प्राप्तो महाराज धर्मपुत्रो युधिष्ठिरः । द्वैपायनह्रदं ख्यातं यत्र दुर्योधनो भवेत् ॥ शीतामलजलं हृद्यं द्वितीयमिव भास्करम् । माययास्तभ्य सलिलं यत्राभूत्ते सुतस्ततः ॥ अत्यद्भुतेन विधिना दैवयोगेन भारत । सलिलान्तर्गतः शेते दुर्दर्शः कस्यचित्प्रभो ॥ मनुष्यस्य मनुष्येन्द्रो गदाहस्तो जनाधिपः॥' इति ॥

रणभुवि शवरचितायां वनभुवि च ततो विचित्य शवरचितायाम् ।
गत्वा मानी तोयं पार्थैर्वचनेन रोपमानीतोऽयम् ॥ ७४ ॥

ततोऽनन्तरं शवरचितायां शवै रणहतदेहै रचितायां व्याप्तायां रणभुवि तं दुर्योधनं विचित्य अन्वेष्य, तथा शवरचितायां शवरैः वनचण्डालैः चिता व्याप्ता तादृश्यां वनभुवि वनभूमौ च तं विचित्य तत्र तमलब्ध्वा भीमेन दत्तपारितोषकैः लुब्धकैर्दुर्योधनः सलिले मायया निजात्मानं संस्तम्भ्य शेते इति संदर्शितः । पुनः तोयं द्वैपायनह्रदतोयसमीपं गत्वा पार्थैः युधिष्ठिरादिभिः मानी बहुमानवान् अयं दुर्योधनः वचनेन कटुवचनेन रोपमानीतः । येन स गर्जितवानित्यर्थः ॥

सोऽपि महानिर्ह्रादादुत्थाय तलात्समानहानिर्ह्रादात् ।
संरम्भी मरणाय व्यधत्त चेतस्तथैव भीमरणाय ॥ ७५ ॥

समानहानिः कटुवचनश्रवणेन सह मानहान्या वर्तते यः स तादृशः सोऽपि दुर्योधनः महानिर्ह्रादात् महानिर्घोषात् ह्रदात् द्वैपायनह्रदसंबन्धिनः तलात् उत्थाय संरम्भी अतिक्रुद्धः सन् मरणाय चेतो व्यधत्त । तथा तेन प्रकारेण भीमरणाय भीमेन सह गदायुद्धरणाय चेतो व्यधत्त ॥

अथ रिपुभङ्गदया तौ संग्रामं कर्तुमतिशुभं गदया तौ ।
गुरुमत्सरसंपत्ती भीमो दुर्योधनश्च सरसं पत्ती ॥ ७६ ॥
दधतौ मानसमाजौ जन्मन आरभ्य मोदमानसमाजौ ।
अधिकतमाशान्तरणौ जघटाते भजति पश्चिमाशां तरणौ ॥ ७७ ॥
(युग्मम्)

अथानन्तरं गुरुमत्सरसंपत्ती गुरुः महान् यो मत्सरः परोत्कर्षासहनं तस्य संपत्तिः बाहुल्यं ययोस्तौ, तथा पत्ती पदातिकावेव रिपुभङ्गदया शत्रुनाशप्रदया गदया आयुधविशेषेण सरसं रसेन सह अतिशुभं परमं संग्रामं कर्तुं जन्मन आरभ्य आजन्म आजौ गदायुद्धे मानसं मनः दधतौ, तथा मोदमानसमाजौ मोदमानः हृष्यमाणः समाजः वीरसमाजो याभ्यां तौ, तथा अधिकतमाशान्तरणौ अधिकतममत्यधिकमशान्तः प्रदीप्तः रणो ययोस्तौ, पश्चिमाशां वारुणीं दिशं भजति तरणौ, सूर्ये सायंसमये गगनान्तलम्बिनि सूर्ये भीमो दुर्योधनश्चेत्युभौ तौ जघटाते गदायुद्धायामिलितौ ॥

सुचिरममित्रावरणौ रोषेण बलेन च तुलितमित्रावरणौ ।
सुमहति जन्ये तान्तौ परस्परं ताडनैरजन्येतां तौ ॥ ७८ ॥

सुचिरं बहुकालं बलेन हेतुना अमित्रावरणौ अमित्रान् शत्रून् आवृणुतः आच्छादयतः यद्वा अमित्रान् अवति मारयति वा अमित्रावः रणः युद्धं ययोस्तौ । 'अव रक्षणे मारणे' च । तथा बलेन च तुलितमित्रावरणौ बलेन हेतुना तुलितः मित्रः सूर्यः आवृणोति आवरणः अग्निः अवरणः अविद्यमानं वरणमाच्छादनं यस्य सः अवरणो वायुर्वा याभ्यां तौ तादृशौ भीमदुर्योधनौ सुमहति जन्ये युद्धे परस्परं ताडनैस्तौ तान्तौ खिन्नौ अजन्येतां जातौ । तान्ताविति 'तमु ग्लानौ' धातुः ॥

तत्र तु वायुतनयतः क्रियमाणे संयुगे युवा युतनयतः ।
समजनि योग्याबलतः सुयोधनः समधिकयोग्याबलतः ॥ ७९ ॥

तुः पक्षान्तरे । तत्र संयुगे युद्धे क्रियमाणे सति युतनयतः युतः सहितः नयो यस्य स तादृशात् वायुतनयतो भीमात् समधिकयोग्यावलतः आवलति भ्रमति आवलः तस्य भावस्तत्ता समधिकयोग्या आवलता यस्य स तादृक् सुयोधनो दुर्योधनः समजनि । तत्र हेतुः—योग्याबलत इति योग्याया गदायुद्धाभ्यासस्य बलं तस्मात् । कीदृशः । युवा तरुणः ॥

तदनु सरोजनयनतः प्राप्याज्ञां पाण्डवो रुरोज नयनतः ।
कपटपदव्या [1]जनतः सकटि युगपदव्याजनतः ॥ ८० ॥

सरोजनयनतः पुण्डरीकाक्षात् श्रीकृष्णात् नयनतः नेत्रात् आज्ञां संज्ञारूपां प्राप्य पाण्डवो भीमः । यद्वा नयनतः नयेन नीत्या नतः जनतः जनसकाशात् कपटपदव्या छलमार्गेण प्रतिद्वन्द्विनः अधमाङ्गहननेन सकटि कटिस्थानेन युगपत् तुल्यकालमव्याजेन नतो नम्रः सन् । लज्जाभरादित्यर्थः । अत एव रुरोज भग्न इवाभूत् । 'रुजो भङ्गे' धातुः । तथा च गदापर्वणि श्रीकृष्णवाक्यम्—'उपदेशोऽनयोस्तुल्यो भीमस्तु बलवत्तरः । कृतयत्नतरस्त्वेष धार्तराष्ट्रो वृकोदरात् ॥ भीमसेनस्तु धर्मेण युध्यमानो न जेष्यति । अधर्मेण तु युध्यन्वै हन्यादेष सुयोधनम् ॥ मायया निर्जिता देवैरसुरा इति नः श्रुतम् । विरोचनश्च चक्रेण निर्जितो मायया सखे ॥ मायया चाक्षिपत्तेजो वृत्रस्य बलसूदनः । ऊरू भेत्स्यामि ते संख्ये गदयेति सुयोधनम् ॥ सोऽयं प्रतिज्ञां तां चापि पारयित्वारिकर्षणः । मायाविनं च राजानं माययैव निकृन्ततु ॥' इति ॥

प्रोज्झ्य वपूरुचमूरुद्वितये संचूर्णितोऽरिपूरुचमूरुत् ।
मारुतभूयोधनतः परमापन्नः पपात भूयोधनतः ॥ ८१ ॥

ऊरुद्वितये संचूर्णितो भीमेन अरिपूरुचमूरुत् अरीणां शत्रूणां पुरवः बहुला य चम्वः

---

१. 'जवतः स कटियुगं तस्य युगपदव्याजवतः' मूल०.

सेनास्ता रुणद्धि इति तादृक् सन् मारुतभूयोधनतः मारुतात् भूर्जन्म यस्य स मारुतभूर्भीमस्तस्य योधनं युद्धं तस्माद्धेतोः परमापन्नः परममापन्नः आपत्प्राप्तः अशरणः वपूरुचं वपुषः कलेवरस्य रुचं कान्तिं प्रोज्झ्य त्यक्त्वा भूयोधनतः भुवि योधा वीरास्तैर्नतः प्रणतो राजा दुर्योधनः पपात ॥

मुदिततरा जनितान्ते शत्रुबले निपतिते च राजनि तान्ते ।
प्रापुः शिबिरं तारस्वनिताः पार्था निशि विरन्तारः ॥ ८२ ॥

जनितान्ते जनितोऽन्तो यस्य तत्तादृशे शत्रुबले रिपुसैन्ये सति, तथा राजनि दुर्योधने च तान्ते खिन्ने सति निपतिते च सति मुदिततराः अतीव हृष्टाः पार्थाः युधिष्ठिराद्याः विरन्तारः विश्रामयुक्ताः तारस्वनिताः गम्भीरसिंहनादाः निशि रात्रौ शिबिरं सेनानिवेशस्थानं प्रापुः ॥

सममुत्कटकेतनया स्वसेनया पाण्डवस्य कटके तनयाः ।
द्रोणभुवाहन्यन्तप्राप्ते सुप्ताः क्षणादिवाहन्यन्त ॥ ८३ ॥

उत्कटकेतनया उद्भटध्वजया स्वसेनया पाण्डवसेनया समं सहैव पाण्डवस्य युधिष्ठिरस्य कटके सैन्ये सुप्तास्तनया द्रौपदेया अहनि दिने अन्तप्राप्ते सति क्षणादिव अहन्यन्त हताः । एतदाख्यानं सौप्तिके पर्वणि तत एवोह्यम् ॥

अथ कटके तनयानां वीक्ष्य ततिं विहितयमकेतनयानाम् ।
अजनि सतापापासा कृष्णानशनेन काङ्क्षितापापा सा ॥ ८४ ॥

अथानन्तरं सौप्तिके विहितयमकेतनयानां विहितं यमकेतनेऽन्तकगृहे यानं यया सा तादृशीं तनयानां सुतानां ततिं वीक्ष्य अपासा शसयोरैक्यात् अपाशा निराशा सा द्रौपदी अनशनेन प्रायोपवेशनेन सतापा अजनि । कीदृशी । काङ्क्षितापापा काङ्क्षितमपापं धर्मो यस्याः सा ॥

तस्या धीरोधरतः क्रोधेन वृकोदरोऽतिधीरो धरतः ।
द्रौणिमशङ्कालाभः समाद्रवत्तत्कर्कशं कालाभः ॥ ८५ ॥

तस्या द्रौपद्या धीरोधे प्रायोपवेशनबुद्धिरोधे रतः भीमः धरतः पर्वतादपि अतिधीरः क्रोधेन द्रौणिमश्वत्थामानं समाद्रवत् । कीदृशः । कालाभः अन्तकोपमः । पुनः कीदृशः । अशङ्कालाभः विशङ्कः ॥

कृतरिपुमानवनाशं पाण्डवनिधनाय दीप्यमानवनाशम् ।
जीवितलोभी मत्या विससर्जैषीकमाकुलो भीमत्या ॥ ८६ ॥

---

१. 'पार्था रणान्निशि विरन्तारः' मूल०. २. 'पार्षतस्य' मूल०. ३. 'कर्कशं भृशं कालाभः' मूल०.

जीवितलोभी जीवितार्थी सः अश्वत्थामा कृतरिपुमानवनाशम्, तथा दीप्यमानवनाशं दीप्यमानानि वनानि आशाश्च येन तत् तादृशमैषीकमस्त्रं भीमत्या भयसहितया मत्या बुद्ध्या आकुलः सन् विससर्ज अक्षिपत् । तथा च सौप्तिके पर्वणि—'इत्युक्त्वा राजशार्दूलं द्रोणपुत्रः प्रतापवान् । सर्वलोकप्रमोहार्थं तदस्त्रं प्रमुमोच ह ॥ ततस्तस्यामिषीकायां पावकः समजायत । प्रधक्ष्यन्निव लोकांस्त्रीन्कल्पान्तकयमोपमः॥' इति ॥

कृतवधरागमनेन प्रयुक्तमैषीकमन्तरागमनेन ।
सज्जनमानसहंसस्तदस्त्रमरुणत्पुरः पुमानसहं सः ॥ ८७ ॥

कृतः वधस्यार्जुनवधस्य रागोऽभिलाषो येन तत्तादृशमनेन अश्वत्थाम्ना प्रयुक्तमैषीकमस्त्रं स सज्जनमानसहंसः सज्जनानां मानसमेव मानसं सरः तत्र हंसः पुमान् श्रीकृष्णः अन्तरा मध्ये गमनेन । मध्यगो भूत्वेत्यर्थः । तदैषीकमस्त्रम् अरुणत् रुरोध । शान्तिमनयदित्यर्थः । कदा । पुरः । कीदृशं तदस्त्रम् । असहं दुःसहम् ॥

उद्धतरोदस्त्रस्यत्रिदशं तेजस्ततोऽकरोदस्त्रस्य ।
नातिचिरायास्तोकं शोषितमुदरस्थमुत्तरायास्तोकम् ॥ ८८ ॥

ततोऽनन्तरमुद्धते उच्चैर्हते रोदसी द्यावापृथिव्यौ येन तत्, तथा त्रस्यत्रिदशं त्रस्यन्तः त्रिदशा देवा यस्मात्तत्तादृशमस्त्रस्य ऐषीकस्य तेजः, नातिचिराय शीघ्रमेव अवन्ध्यप्रभावत्वात्स्वकार्यमविधायाविरामात् उत्तराया अर्जुनसुताभिमन्युस्त्रियः उदरस्थमस्तोकं महान्तं महातेजोवन्तं तोकं गर्भं शोषितमकरोत् दग्धमकरोत् ॥

स च मणिमच्छशिरोगं द्रौणिः प्रभया कृतांशुमच्छशिरोगम् ।
पश्यन्नैषीकान्तं प्रददौ भीमाय जीवनैषी कान्तम् ॥ ८९ ॥

स च द्रौणिरश्वत्थामैषीकान्तमैषीकस्यास्त्रस्यान्तं प्रागुद्दिष्टक्रमेणान्तं नाशं पश्यन् जीवनैषी जीवितैषी भीमेन प्रतिज्ञाततद्वधात् अच्छशिरोगं निर्मलोत्तमाङ्गगतम्, तथा प्रभया दीप्त्या कृतांशुमच्छिरोगं कृतः अंशुमतः सूर्यस्य शशिनः चन्द्रमसश्च रोगः स्वकान्तिजितत्वाद्येन स तादृशं महाप्रभावं मणिं भीमाय भीमसेनाय स्वशिरःप्रतिनिधितया प्रददौ ॥

मुख्यं विप्राणान्तं द्रौणिं भीमो मुमोच विप्राणां तम् ।
स च गुरुभूवरमण्या हरणादभिनन्दितो बभूव रमण्या ॥ ९० ॥

विप्राणान्तं विगतः प्राणानामन्तो यस्य स तादृशम् । जीवित(वन्त)मेवेत्यर्थः । तं विप्राणामग्र्यजन्मनां मुख्यं द्रौणिमश्वत्थामानं भीमो मुमोच । स च भीमः गुरुभूवरमण्याः गुरोर्द्रोणाचार्याद्भूरुत्पत्तिर्यस्य स गुरुभूः अश्वत्थामा तस्य या वरमणी महाप्रभावो मणिः । मणीशब्दः स्त्रीलिङ्गोऽप्यस्ति । तस्या हरणात् रमण्या द्रौपद्या अभिनन्दितः बहुस्तुतो बभूव । एतदाख्यानं च सौप्तिके पर्वणि तत एवोह्यम् ॥

सफलाशंसं जयतः पार्थं चाकर्ण्य परवशं संजयतः ।

सुविषादी प्रास्थित तां धृतराष्ट्रो रणभुवं सुदीप्रास्थितताम् ॥९१॥

जयतस्तादृशि महायुद्धे जयात् हेतोः सफलाशंसं सफला आशंसा इच्छा शत्रुहरणेच्छा यस्य स तादृशं पार्थं युधिष्ठिरं परवशं भीमादिवार्ताग्रहणपरवशं संजयतः संजयात् आकर्ण्य श्रुत्वा सुविषादी निजतनयादिककुरुवरवधेन महादुःखी तां रणभुवं संग्रामभूमिं धृतराष्ट्रो राजा प्रास्थित प्रस्थानाभिमुखो बभूव । कीदृशीं रणभुवम् । सुदीप्रास्थितताम् सुदीप्राणि यान्यस्थीनि रणहतवीरशरीरास्थीनि तैस्ततां भृताम् ॥

स विधुतहस्तान्ताभिः स्त्रीभिः सार्धं कुरूद्वहस्तान्ताभिः ।

हतचेताः स्वापत्यश्रेणीषु रुरोद निपतितास्वापत्य ॥ ९२ ॥

स कुरुद्वहो धृतराष्ट्रः विधुतहस्तान्ताभिः विषादेन विधुताः कम्पिता हस्तान्ताः पाणिप्रान्ता याभिस्ताः तादृशीभिस्तान्ताभिः खिन्नाभिः स्त्रीभिः गान्धारीप्रभृतिभिः सार्धं हतचेता विषादेन अतिमूर्छितचेताः निपतितासु रणभूमौ पतितासु स्वापत्यश्रेणीषु स्वतनयपङ्क्तिषु शतसंख्यात्वात्तेषामापत्य तत्सविधं गत्वा रुरोद अरुदत् ॥

अथ कुन्तीतनयेन स्मृत्वा कर्तव्यमव्यतीतनयेन ।

तच्छमने त्रस्तेन [1]प्रचोदितः पुण्डरीकनेत्रस्तेन ॥ ९३ ॥

अथानन्तरमव्यतीतनयेन अव्यतीतः अनुल्लङ्घितः नयो नीतिर्येन स तादृशेन तेन कुन्तीतनयेन युधिष्ठिरेण कर्तव्यं तदुपसान्त्वनादिकार्यं स्मृत्वा त्रस्तेन तच्छापत्रस्तेन तच्छमने तद्दुःखशमने पुण्डरीकनेत्रः श्रीकृष्णः प्रचोदितः । भवद्भिः सपदि धृतराष्ट्रनृपोपसान्त्वनं विधेयमित्युक्त्वा युधिष्ठिरः श्रीकृष्णं प्राचोदयदित्यर्थः । एतदाख्यानं विशोकपर्वणि तत एवोह्यम् ॥

पार्थाः सन्नमनेन प्रसादितं केशवेन सन्नमनेन ।

तं नरदेवं दन्तद्युतिखचितमुखेन्दवः पदेऽवन्दन्त ॥ ९४ ॥

पार्था युधिष्ठिराद्याः सन्नमतिदुःखितं सन्नमनेन सत् शोभनं पापहारि नमनं प्रणतिर्यस्य स तादृशेन अनेन केशवेन श्रीकृष्णेन प्रसादितमुपसान्त्वितं तं नरदेवं राजानं धृतराष्ट्रं पदे चरणे । जातावेकवचनम् । पदयोः अवन्दन्त प्रणेमुः । कीदृशाः पार्थाः । दन्तद्युतिखचितमुखेन्दवः मुखचन्द्राः येषां ते तादृशाः ॥

कपटापादनमस्यन्नालिङ्ग्य युधिष्ठिरं सपादनमस्यम् ।

संमर्दायादान्तं राजा मारुतिमियेष दायादान्तम् ॥ ९५ ॥

स धृतराष्ट्रः कपटापादनं कपटस्य मायाया आपादनं विधानमस्यन् क्षिपन् पादनमस्यं पादयोर्नमस्यं प्रणतं युधिष्ठिरमालिङ्ग्य अदान्तं शान्तस्वरूपम् । विनीतमित्यर्थः । तथा

१. 'प्राचोयत' इति मूल०.

दायादान्तं दायादानां स्वपुत्राणामन्तं विनाशम् । 'दायादौ सुतबान्धवौ' इत्यमरः । तादृशं मारुतिं भीमं संमर्दाय स्वभुजाभ्यां निष्पीड्य मर्दयितुं भस्मीकर्तुमियेष । एतदाख्यानं भारते स्त्रीपर्वणि—'धर्मराजं परिष्वज्य सान्त्वयित्वा च भारत । दुष्टात्मा भीममन्वैच्छद्दिधक्षुरिव पावकः ॥' इति ॥

अथ रुषिततमायायःस्थापितमददान्नृपाय ततमायाय ।
भीमं नरकारिरजः स चामुना श्लिष्यता पुनरकारि रजः ॥ ९६ ॥

अथानन्तरमजः न जातः अजः अनादिः नरकारिः भौमासुरहन्ता श्रीकृष्णः ततमायाय तता वितता माया छलं येन स तादृशाय रुषिततमाय निजसुतसंहारेण अतिक्रुद्धाय नृपाय धृतराष्ट्राय अयोमयं स्थापितं भीमं भीमसेनमचक्षुषः धृतराष्ट्रस्य वञ्चनाय अग्रे अददात् । यमयोमयं भीमं धृतराष्ट्र आलिलिङ्गेत्यर्थः । स चेति अमुना तमयोमयं भीमं श्लिष्यता आलिङ्गयता स च अयोमयो भीमः रजः धूलिरूपः पुनः अकारि । तथा च स्त्रीपर्वणि—'तस्य संकल्पमाज्ञाय भीमं प्रत्यशुभं हरिः । भीममाक्षिप्य पाणिभ्यां प्रददौ भीममायसम् ॥ प्रागेव तु महाबुद्धिर्बुद्ध्वा तस्येङ्गितं हरिः । संविधानं महाप्राज्ञस्तस्य चक्रे जनार्दनः ॥ तं प्रगृह्यैव पाणिभ्यां भीमसेनमयोमयम् । बभञ्ज बलवद्राजा मन्यमानो वृकोदरम् ॥ नागायुतबलप्राणः स राजा भीममायसम् । भक्त्वा विमथितोरस्कः सुस्राव रुधिरं मुखात् ॥ ततः पपात मेदिन्यां तथैव रुधिरोक्षितः । सपुष्पिताग्रशिखरः पारिजात इव द्रुमः ॥ पर्यगृह्णंश्च तं विद्वान्सूतो गावल्गनिस्तदा । शनैरित्यब्रवीच्चैनं शमयन्सान्त्वयन्निव ॥ स तु भीमं समुत्सृज्य गतमन्युर्महायशाः । हा हा भीमेति चुक्रोश भूयः शोकसमन्वितः ॥ तं विदित्वा गतक्रोधं भीमसेनवधार्दितम् । वासुदेवो वरः पुंसामिदं वचनमब्रवीत् ॥ मा शुचो धृतराष्ट्र त्वं नैष भीमस्त्वया हतः । आयसी प्रतिमा ह्येषा त्वया राजन्निपातिता ॥ तं क्रोधवशमापन्नं विदित्वा भरतर्षभ । मयापकृष्टः कौन्तेयो मृत्युदंष्ट्रान्तरं गतः ॥ नहि ते राजशार्दूल बलतुल्योऽस्ति कश्चन ॥' इत्यादि ॥

दुःखायासहतेन क्षितिभर्त्रा तदनु हतधिया सह तेन ।
गङ्गावप्रे तेभ्यः प्रददुस्ते सलिलमाहवप्रेतेभ्यः ॥ ९७ ॥

तदनु तदनन्तरं दुःखायासहतेन महादुःखेन य आयासः खेदस्तेन हतेन, तथा हतधिया अतिमोहितमनस्केन तेन क्षितिभर्त्रा राज्ञा धृतराष्ट्रेण सह आहवप्रेतेभ्यः संग्रामहतेभ्यस्तेभ्यः कुरुपाण्डवेभ्यः ते युधिष्ठिराद्या गङ्गावप्रे गङ्गातीरे सलिलमौर्ध्वदैहिककर्मोपयुक्तसलिलाञ्जलिप्रदानं प्रददुः वितेरुः ॥

तत्र च तापनिमग्नाविद्धेव जवात्पृथा जगाद तापनिमग्ना ।
स्मृतकर्तव्या जातं वैकर्तनिमात्मनो गतव्याजा तम् ॥ ९८ ॥

तत्र च देशे तापनिमग्ना तापे मनस्तापे निमग्ना ब्रुडिता जवाद्वेगेन अग्नौ जातवेदसि इद्धेव दीप्तेव स्मृतकर्तव्या स्मृतं कर्तव्यं स्वकीयं बाल्यावस्थाकरणीयं यया तादृशी

गतव्याजा निर्व्याजा पृथा कुन्ती आत्मनः तत्सकाशात् जातं वैकर्तनिं कर्णं तापनिं तपनस्य सूर्यस्यापत्यं तापनिस्तं तापनिं जगाद । युधिष्ठिरादिभिः रहः कर्णपराक्रमं स्मरद्भिः तद्रहस्यं तेभ्यो जगाद कुन्तीत्यर्थः । तथा च स्त्रीपर्वणि—'ततः स पुरुषव्याघ्रः कुन्तीपुत्रो युधिष्ठिरः । उवाच मातरं वीरो निःश्वसन्निव पन्नगः ॥ यः शरोर्मिध्वजावन्तो महाभुजपरिक्रमः । तुल्यशब्दप्रणुदितो महाह्रदमहारथः ॥ यस्येषुमात्रमासाद्य नान्यस्तिष्ठेद्धनंजयात् । कथं पुत्रो भवत्यां स देवगर्भः पुराभवत् ॥' इति । 'ततः कुन्ती महाराज सहसा शोककर्षिता । रुदती मन्दया वाचा पुत्रान्वचनमब्रवीत् ॥ यः स वीरो महेष्वासो रथयूथपयूथपः । अर्जुनेन हतः संख्ये वीरलक्षणलक्षितः ॥ यं सूतपुत्रं मन्यध्वं राधेयमिति पाण्डवाः । यो व्यराजच्चमूमध्ये दिवाकर इव प्रभुः ॥ स हि वः पूर्वजो भ्राता भास्करान्मय्यजायत । कुण्डली कवची शूरो दिवाकरसमप्रभः ॥' इति ॥

स च राजा तापनये कृतपरितापो वधेऽस्य जातापनये ।
स्वगुणैर्भास्वरिताय प्रददौ सलिलं निरस्तभाः स्वरिताय ॥ ९९ ॥

स च राजा युधिष्ठिरः जातः अपनयः तत्सहोदरभ्रातुः कर्णस्य वधेन यस्मिन्स तादृशे अस्य कर्णस्य वधे कृतपरितापः विहितसंतापः सन् स्वगुणैः स्वकीयगुणैः भास्वरिताय शोभिताय स्वः स्वर्गमिताय गताय तापनये तपनस्य सूर्यस्यापत्यं तापनिः कर्णः तस्मै सलिलं पारलौकिकं सलिलाञ्जलिं प्रददौ वितताार ॥

कृतपितृजनकार्येण त्यक्तशुचा धर्मजेन जनकार्येण ।
प्रापे पूर्वाद्यानां नादैः पूर्णा पुरेव पूर्वाद्यानाम् ॥ १०० ॥

कृतं पितृजनस्य आहवप्रेतपितृजनस्य कार्यमौर्ध्वदैहिकं येन स तादृशेन, तथा त्यक्ता शुचा अत एवोज्झितशोकेन जनकार्येण जनकवज्जनकराजर्षिवत् आर्येण प्रशस्येन तेन धर्मजेन वाद्यानां शङ्खदुन्दुभिमृदङ्गादीनां नादैः पुरा इव प्रागिव पूर्णा पूर्वाद्यानां पूर्वे च आद्याश्च पूर्वपुरुषाः तेषां पूर्नगरी प्रापे प्राप्ता । 'पूः स्त्री पुरीनगर्यौ वा' इत्यमरः ॥

स निहतचार्वाकारी राजा राज्यं समेत्य चार्वाकारी ।
विधिवदपादपरागः पृथ्वीं नृपमौलिपतितपादपरागः ॥ १०१ ॥

निहतचार्वाकारिः निहताश्चार्वाका नास्तिका अरयो येन स तादृशः, तथा चार्वाकारी चारुः रम्यः य आकारस्तद्वान्, तथा अपरागः अपगतः रागः विषयेष्वासक्तिर्यस्य स तादृक्, तथा नृपमौलिपतितः पादपरागः चरणरेणुर्यस्य स तादृशः स नृपो युधिष्ठिरः राज्यं समेत्य प्राप्य विधिवत् सम्यक् पृथ्वीं महीमपात् आरक्षत् । 'पा रक्षणे' धातुः ॥

साम्नो लपिता महतः सकलं ज्ञानं कुरोः कुलपितामहतः ।
स कनीयो गोविन्दद्योतितकृत्यः कृतानुयोगोऽविन्दत् ॥ १०२ ॥

